तमेन केनापि नवमासकल्प्या अनुक्तत्वादवसीयते यत्र
कस्यापि शास्त्रकृतोऽधिकमासयोर्मासद्वयकरणस्य सम्मतत्वे-
ऽपि परिगणनं कल्पतया सम्मतं। न च वाच्यं तत्रावमामधिकां
वाऽष्टमासीमित्युक्तमेव, यतस्तदूनाधिक्यं न मासकल्पवि-
हारप्रभवं किन्तु विधाय पूर्वं वर्षावासं वर्षादिभिस्ततः
क्षेत्रान्न निगमनं जातं तत्कृतं वर्षावासक्षेत्रामाप्त्या च कृतं,
विहारकल्पानां त्वष्टानां न न्यूनाधिक्यं। किञ्च–गणनेऽधि-
कमासस्य युगमध्ये माघमासे युगान्त्ये चाषाढे चतुर्णां
मासानां व्यतिक्रमेऽपि चतुर्मासीप्रतिक्रमणस्याकरणं, कथं
च देशविरतादीनामप्रत्याख्यानकषायवत्तायाः प्रसङ्गस्य
वारणं। फाल्गुनाषाढप्रतिबद्धत्वात्तच्चतुर्मास्या इति
चेच्चिरं जीव, प्रतिबन्धकाराणां शास्त्रकाराणामधिकमासयो-
रपरिगणनैवेति स्वीकारस्तव यतः, तैरस्वीकारे तत्कृत
प्रतिबन्धमनुसरंस्त्वं किं नाङ्गीकुरुषेऽर्धजरतीयं तत्परिग-

णनाग्रहेण, तद्वदेव लोकलोकोत्तरोभयनीत्या द्वादशमासा-
तिक्रमेऽपि सांवत्सरिकस्याकरणमपि कथं शोभावहं ? किं च
श्रीपर्युषणाकल्पे वाचनाकालस्य जिनान्तराणां कालस्य
संख्याने यत्सर्वत्र सार्धाष्टमासैरित्युच्यते तदपि तव क्षोभ-
करमेव, यतस्तद्युगस्य मध्यमन्त्यमेव वा वर्षं प्रागेवापा-
न्त्याश्चाधिकमासयोर्व्यतिक्रमो जातस्तव, ततो भवन्मतेन
सार्धनवमासैरित्येव वक्तव्यं स्यात्। न तत्तथा केनाप्युक्त-
मुच्यते च, ततस्त्यक्त्वा दुराग्रहमाश्रयाप्तमार्गमिति कृतम-
प्रस्तुतप्रसंगेन, प्रकृतं प्रस्तूयते–एतत्त्ववश्यमवधेयं यदुत-
भगवद्भिः श्रीदेवर्द्धिक्षमाश्रमणपादैर्यज्जिनान्तरकालज्ञापनाय
सूत्रं न्यस्तं तदन्त एव सर्वसाम्मत्येन पुस्तकारोहः, यद्यपि
स्थविराणामावल्यपि जिनचरितकीर्त्तनवदवश्यं सामाचारी-
निरूपणा या वक्तव्यैव परं सा नैकरूपेति नारोहिता।
अत एव आर्यमहागिरिमूलिकाया देवद्रूप्यगणिपरम्पराया

नागेन्द्रचन्द्रादिगच्छीयपरम्पराया प्रश्नवाहनकुलपरम्परायाश्च तदानीमपत्र विद्यमानाया अपि नोल्लेखो गन्धतोऽपि। अत पाश्चात्या अपि तत्पुरतः स्वस्वालयः पृथक् पृथक् पट्टावल्यः कल्पकर्षणदिने दर्शितपूर्वाः। सामाचारी तु सर्वैः पृथक् पृथक् स्थाप्येति न निपतस्तदाराह इति तयोरन्तर्गूढयोनान्तरदर्शनमिति। परं सामाचारीसूत्राणि तु जिनचरितसूत्रस्थितनान्येव। ततो निर्युक्तिभाष्यचूर्ण्यादिषु तद्विवरणस्योपलम्भः। एवं च त्रिवाच्यमयस्य वर्त्तमानकालोपलभ्यस्य श्रीदेवर्धिक्षमाश्रमणवाच्यातपरत एवावस्थितत्वं, किञ्च—पर्युषणाकाले कल्पकर्षणं आषाढशुक्लदशम्यादितः आषाढपूर्णिमान्तेषु यदा यदा योग्यक्षेत्रस्य तृणडगलादेश्च लाभाद्वर्षावासस्थापना क्रियते तदा तदा पञ्चभिः पञ्चभिर्दिनैरनियततया नियतमाहतमभवत्। परं श्रीकालकाचार्यकालात् प्रागेवातिशयज्ञानवत्साधुप्राचुर्याभावात्तिरोहित। कथमन्यथा भगवन्तः कालकाचार्या भृगुकच्छात् वर्षावासमध्ये निर्गच्छन्तः प्रतिष्ठानपुरस्थ श्रमणसङ्घ स्वागमनात् प्राक् पर्युषणाया अकरणाय निरदेक्ष्यन्, कथं च नामावास्यापर्वणि न पर्युषितवन्तः, कथं च चतुर्थ्यां एव सांवत्सरिकपरावर्तना, किं च सर्वश्रमणसङ्घसाम्मत्यस्यावश्यकता, कथं च तत्परावर्तनायाः पारम्पर्यं, सूत्रोक्तसामाचार्या त्वेकादशानामपि पर्वणां परावृत्तेर्भावादिति। न च वाच्यं कथं तर्हि चूर्णिकारैर्भगवद्भिरनियतं पञ्चकपञ्चकवृद्ध्या पर्युषणा व्याख्याता प्रकल्पचूर्ण्यादिष्विति। मत्तसामाचार्या एव व्याख्यानात्, अन्यथा स्वयं श्रीश्रमणसङ्घेन सहापरिभूपाया पर्युषणाया नियततया करणे कथमपरेषु पर्युषणाकरणस्य निषेधे तथाकरणे प्रायश्चित्त च व्यवस्थापयन्?, मा भूत् पर्युषणापर्वण एव कालकाचार्योपज्ञत्वमिति योग्यमेव तथाभूत व्याख्यान

चूर्णिकृतां, आस्तामन्यत्, भगवन्तो देवर्धिगणिक्षमाश्रमणा
अपि नियतसांवत्सरिकपर्युषणाकर्तार एव, कथमन्यथा
स्थानाङ्गादिसूत्रप्रकल्पादिनिर्युक्तिप्रभृतिषु पर्युषणापरपर्या-
यस्य वर्षावासावस्थानसूत्रस्योपसंहारे 'इच्चेयं संवच्छरियं थेर-
कप्प' मित्यलेखयिष्यन्?, भगवद्भ्यः कालकाचार्येभ्यः
प्रागपि सूत्रमिदं वर्षावासावस्थानख्यापनपरमपि सांवत्स-
रिककल्पतयैव रूढं, नो चेत् अपर्वतिथौ क्रियमाणायाः
सांवत्सरिकपर्वदिनपर्युषणायाः साक्षितया 'आरओऽवि य
कप्पई'ति वचः कथमुदाहरिष्यन्?, नियतभाद्रपदशुक्लपञ्चम्या अ-
भावे तद्वचसोऽनवकाशात् सूत्रकारेणैवाऽर्वाग्दशस्ववस्थानप-
र्युषणाया विहितत्वात्, एवं च पञ्चकपञ्चकवृद्ध्याऽवस्थानपर्यु-
षणायास्तिरोभावत्वे एकस्या एव सांवत्सरिकपर्युषणाया
भावे च पूर्वधरेभ्योऽपि चिरकालपूर्वकत्वे सिद्धे सिद्धमे-
वैतद्यदुत—साधुसंसद्यपि कल्पस्य कर्षणं सांवत्सरिकप्रति-
क्रमणान्तमेव। पूर्वधरकालेऽपि भगवान् श्रीहरिभद्रसूरि-
रप्यावश्यकवृत्तौ सांवत्सरिकप्रतिक्रमणान्तमेवानागतपञ्च-
रात्रिकमाह। अष्टपञ्चाशदधिकाधिकत्रयोदशवैक्रमीयशता-
ब्दीभाविनो विनयचन्द्राः श्रीपर्युषणाकल्पटीप्पने वैक्रमीय-
पञ्चदशशताब्दीभाविनोऽन्तर्वाच्यकारा अपि तथैव सांव-
त्सरिकप्रतिक्रमणान्तं कल्पकर्षणमाहुः। तथा चाधुना प्रव-
र्त्तमानः श्रीसङ्घसमक्षं श्रीकल्पकर्षणस्य व्यवहारः पञ्च-
दशशताब्द्याः परत एवेति सम्भाव्यते। अत एव च
श्रीयोगशास्त्रानन्तरविहितपरिशिष्टपर्वणि श्रीश्राद्धदिनकृत्ये
श्रीश्राद्धविधौ पर्युषणाया अधिकारेऽपि न कल्पकर्षणस्य
श्रावकानुद्दिश्य श्रवणविधानमिति।

ननु भगवतां श्रीकालकाचार्याणां श्रीदेवर्धिगणि-
क्षमाश्रमणानां च काले अवस्थानसांवत्सरिकप्रतिक्रमणान्ते
कल्पकर्षणसमाप्तेरवश्यंभावस्य निर्णयः श्रीआचारप्रकल्प-

र्याणिपर्युषणाकल्पयोर्मेलनेन सङ्गच्छते। ततस्तत्सूचकं किं नाङ्गोपाङ्गेषु दृश्यते इति चेत्? किमाह। दृश्यते स्थानाङ्गे पञ्चमे स्थाने। यत उक्तमिदं 'णो कप्पइ निग्गंथाण वा णिग्गंथीण वा पढमपाउसंसि गामाणुगामं दूइज्जित्तए'त्ति। अस्मिन् हि सूत्रे विहारः वर्षावासस्य पंचाशति दिनेष्वपि निषिद्धः। स च न युज्यते पञ्चकपञ्चकवृद्ध्या पर्युषणाकरणे, विहारस्यायं तदा क्रियमाणो निषेधो ऽपवादेनैव यदा आषाढ्यामेवावस्थीयेतैकस्मिन् क्षेत्रे। न च शक्यं सापवादमिदं, यतस्तत्रैव 'पचहिं ठाणेहिं कप्पइ'त्ति प्रतिपादितं, ततश्च पञ्चाशति दिनेषु स्पष्टमेव विहारस्य सकारणस्य प्रतिपादनाच्च पञ्चकपञ्चकवृद्धिकल्पस्य निरोभाव इति। यतः पञ्चकवृद्धिकल्पे विहारस्तत्रानुज्ञायते तथाविधस्य क्षेत्रस्य तृणडगलादीनां चाभावो दीर्घाध्वादिकाद्वा कारणात्, न चात्र तेषामेकमपि सूत्रमपवादपदे, अत्रोक्तानि तु कारणानि महापत्तिमात्रभावविषयाणि। तत्त्वतस्तु अतोऽपि निर्णीयते आषाढ्यामेवावस्थाननिश्चयः। किञ्च- तत्रैव प्रकरणेऽग्रेतनसूत्रे पर्युषितानां विहारस्य निषेधं प्रतिपादयन्तः सूत्रकारा एकमेव पर्युषणानां प्रतिपादयन्ति, पर्युषिताश्च के इत्याशङ्काया निवारणं न दुष्करं। यत आह श्रीअभयदेवसूरिस्तद्वृत्तौ-" पर्युषणाकल्पेन नियमवद्वस्तुमारब्धाना"- मिति, इदमपि तदैव समेषां सम्यक् तदैवोपपद्येत यदि सर्वेऽपि साधवः समकं पर्युषयन्ति, न च तत् पञ्चकपञ्चकवृद्ध्यादिना नियततायाः अभावे, तत्र तु केषाञ्चित् समग्रमासमपि प्रथममासेऽपि उत्तरायां च तस्यां सप्ततेरधिकविंशतिशतस्य दिनानां भावात्, पूर्वं पश्चात्तत उत्तरं च सप्ततेश्च तदैव विहारनिषेधस्य नियमभावः यदा समकमेव समेषां स्यात् पर्युषणा। ततः पर्युषणाकल्पकरणमपि

सांवत्सरिकप्रतिक्रमणेन सहैवान्तं यायादिति सूत्रकाराणामपि सम्मतमेव, न च प्रथमे उत्तरे भागे प्राट्पो विहारस्य (रेण) समं को विशेषः पर्युपितेतरयोरिति वाच्यं, कल्पकर्पणसांवत्सरिकाभ्यां विशेपस्य विहितत्वात्, एवं चापाढीसांवत्सरिकान्तरं प्रथमप्राट्ट् सांवत्सरिककार्त्तिक्योरन्तरं तूत्तरप्राट्डिति।

ननु कथमिदं सूत्रे निविष्टमिति। 'जेसिमिमो अणुओगो'त्ति नन्द्युक्तेराचार्यस्कन्दिलाचार्यैर्निवेशितमिति कथने न कोऽपि विरोधलेशोऽपि दृश्यते, ततश्च पर्यवसितमेतत्—भगवतः स्कन्दिलाचार्यादपि प्राक्तनकाले पर्युपणाकल्पकर्पणं सांवत्सरिकप्रतिक्रमणस्य पर्यन्त एव समाप्तिमाप्नुयादिति, अत एव श्रीजीवाजीवाभिगमे देवानामेका पर्युपणेति नन्दीश्वरद्वीपे महिमकृतिर्नियमितेति।

ननु श्रीसमवायाङ्गसूत्रे श्रमणभगवन्महावीरमाश्रित्यापि एवमेव पाठः, तथाहि—'समणे भगवं महावीरे वासाणं सवीसइराए मासे वइक्कंते सत्तरिएहिं राइंदिएहिं सेसेहिं पज्जोसवेइ'त्ति, तत् किं श्रमणो भगवान् महावीरोऽपि कल्पकर्पणसांवत्सरिकप्रतिक्रमणरूपां पर्युपणां चकार, नेत् कल्पातीतत्वात्तस्य न तथेति नर्हि अन्य एव भावार्थः कोऽप्यत्र वाच्यः स्यादिति।

उ.—सत्यं, भगवान् महावीरः कल्पातीतत्वान्न कल्पकर्पणं न च सांवत्सरिकं वा प्रतिक्रमणं कृतवान्। उभयमपि 'आचेलक्कुद्देसिये'त्यादिगाथोक्तकल्परूपमेव, नतः प्रवृत्तोऽय व्यवहारः कल्पकर्पणादिरूपस्तदुपदिष्ट एव (न) स्वयं कल्पितो नवा मार्गविरोधीति दर्शनमेव प्रागुक्तसूत्रद्वयस्य तात्पर्यं। न चेद् समाधानं स्वकपोलकल्पनाकृतं, यत-स्तत्त्वार्थभाष्यं—'कृतसामायिककर्मा व्रतानि विधिवत् समारोप्ये'ति। न च भगवतो महावीरस्य 'आचेलक्कुद्देसिये'ति

खाओदयाणि खायणिद्धमणाइं अप्पणो अट्ठाए कडाइं परिभुत्ताइं परिणामियाइं भवंति, से तेणट्ठेणं एवं वुच्चइ–समणे०' एतानि च तानेवाश्रित्य सफलानि सूत्राणि, ये गृहस्थान् प्रति वयं चतुर्मासीमवस्थास्यामः स्थिता वेति वदेयुः, तत्सम्भवश्च मौनावलम्बनाभिग्रहात्प्रतिमायाश्चाभिग्रहात् छाद्मस्थ्येऽपि न घटते एव, विशेषतः कैवल्ये, एवं स्पष्टीभवत्यत्र यत् यतिक्रमव्यवस्थापराण्येतानि पर्युषणासूत्राणि विशेषतश्च पर्युषणाकल्पोक्तानि सूत्राणि तत्पराणीति यतस्तेभ्यः सूत्रेभ्यः परतः गणधरतच्छिष्यस्थविराद्यतनार्यश्रमणास्मदाचार्योपाध्यायाख्यात् श्रमणपारम्पर्यमेव तथापर्युषणायां विधातव्यायां हेतुतया दर्शितं, विचारश्चेदेतेषां तात्पर्यं स्यात् तर्ह्येतत् यतिक्रमस्थापनमेव गम्यते, अत एव 'अंतरावि य से कप्पइ पज्जोसवित्तए नो कप्पइ तं रयणिं उवायणावित्तए'त्ति यतिक्रमस्थापनाविषयमेवापवादसूत्रं

न तु श्रीमन्महावीरादीनामाचारदर्शनपरं तत्सूत्रं, निरपवादचारित्रत्वात्तेषामिति तथा च स्थानाङ्गस्थं वर्षावासं पर्युषितानामिति सूत्राणि प्रस्तुतस्य पर्युषणकल्पस्य च वर्षावासं पर्युषितानामिति पदसमूहोपलक्षितानि समग्राणि सूत्राणि समग्रं चतुर्मासावस्थानलक्षणां पर्युषणामेवाश्रित्य प्रवृत्तानि, न तु प्रथममुत्तरं वा भागमाश्रित्य प्रवृत्तानीति सुधीभिरूहनीयं, अत एव 'तं रयणिं' ति परोक्षवाचिना तदा निर्दिष्टं, केवलं सांवत्सरिकदिन एवास्य कल्पकर्षणस्य समाप्तेः सद्भावात् सांवत्सरिककृत्यरूपस्याधिकरणक्षमापनाप्रसङ्गस्य सूत्रान्ते-वाचेत्यादि निर्दिष्टं, एवं च सुनिर्णीतमिदं–भगवतः स्कन्दिलाचार्यात् प्राक्तनकालेऽपि सांवत्सरिकप्रतिक्रमणस्य प्रान्ते एव कल्पकर्षणस्य समापनमभूदिति, तत्र पर्षदि कल्पकर्षणस्य न गन्धोऽपि, न च वाच्यं पञ्चकपञ्चकवृद्ध्या पर्युषणाकर्षणपूर्वकं पर्युषणाकरणस्य चिरन्तरकालाद्

आचार्यस्कन्दिलाचार्यात्प्रागपि तिरोभावस्य निर्णये क्रियमाणे 'वीसइदिणेहिं कप्पो पंचगहाणीइ कप्पठवणा य। नवसयतेणउएहिं वुच्छिन्ना संघआणाए' ॥ १ ॥ इति तीर्थोद्गालिकभणिततया प्रसिद्धाया गाथायाः का गतिरिति, तस्या गाथाया उद्गालनमेव गतिरस्ति, यतः सा तावत् तीर्थोद्गालिके एव नास्ति। ननु किमनयाऽभिधीयते गाथया क्रियाया व्यवच्छेदः प्ररूपणाया वा?, न तावत् क्रियायाः, विंशत्या दिनैरवस्थाननियमकथनेऽधिकरणनिषेधस्याभिमतत्वेन तस्य कथं व्युच्छेदिनी सङ्घस्याज्ञा?, किञ्चाज्ञायित तत्र, न वाच्यमिति अर्वागव गन्यमिति वा? अभिवर्धितेतरयोर्विपर्यायाः शीघ्रविलम्बभावस्तु आषाढ्या जायमाना न पार्यते निराद्धुं, न च ततोऽधिकरणोत्पत्तिरपि, न च लौकिकटीप्पनाश्रयणं तत इति, तथा सङ्घस्याचरणा तत्र पौषाषाढयोर्वृद्धिर्नियमाभावात् यस्य कस्यापि मासस्य वृद्धिर्भावादिति, जैनज्योतिष्कानुसरणेऽपि पौषस्य वृद्धावपि अभिवर्धितत्वोदितेर्विंशतिकल्पोदितेश्च आषाढपौर्णमास्यामेवोत्सर्गिकमवस्थानं तद्रूपा पर्युषणा चेति, सति विधाने किं सकारणमुच्यमानं प्रोच्यमानं वाऽपवादिकमार्गं निरुणद्धि सङ्घस्याज्ञा?, संहननधृत्यादीनां हानिमनिवार्यं तद्धेतुकमपवादं निरुन्धन् कथं नौद्धिमानमास्कन्देत्। किञ्चाधिकरणमृषापत्यादिदोषभिया पञ्चकवृद्ध्या वदन् मुनिः कथं निरोधनीय इति, एवं नेयं गाथा लब्धशासनमार्गा तद्ग्रन्थोक्ताऽपि च नेति, तां पुरस्कृत्य प्रब्रुवाणानां व्यामूर्यं व्यक्तमेव।

ननु अभिवर्धितेतरयोर्विंशतिपञ्चाशद्दिनैरवस्थाननियमनं पञ्चकपञ्चकवृद्ध्या च तत्कथ्यमानं निर्मूल्यमसच्च, न तथाविधदेशकालश्राद्धप्राकृतजनप्राचुर्याज्ञानश्रद्धाग्रहिल्त्वादीनपेक्ष्य तथा करणं वदन् शासनसमृद्धिकरमपश्चा

जनानिवारकं चेति भाष्यचूर्णिकृदादिभिर्निरूपितं योग्य-
मेव च तन्मार्गगामिनां विपश्चितां, अत्र तु सामान्यं
औत्सर्गिकं मार्गमधिकृत्य कल्पवाचनाविचारः क्रियमाणोऽस्ति,
भगवन्तः स्थूलभद्राद्या आदितश्चतुर्मासीमभिगृह्य तत्तत्स्था-
नमादिष्टा गुरुभिर्जग्मुरित्यादेः प्रसिद्धत्वात्। अधुना पर-
म्परया गुर्वादिष्टे क्षेत्र चतुर्मासीमासीना इति कथनं मुग्ध-
पर्षद्रञ्जनायैव, क्षेत्रप्रत्युपेक्षकाणां प्रत्यागमेऽपि आचार्या-
देशेनैव विहारोऽवस्थानं वा प्रागण्यभूतामेवेति। किञ्च–
भगवतश्चूर्णिकारात् प्रागपि नियततया सांवत्सरिकपर्युषणा-
यामेव कल्पवाचनं न कथमपि स्याद्यदि, कथंतर्हि आन-
न्दपुरे मूलगृहचैत्ये पार्श्वस्थैः कथ्यमानमपि तत्सूत्रं श्रोत-
व्यमभविष्यदिति। न च वाच्यं यदि पञ्चदशशताब्द्या
वैक्रमीयायाः संसदि कल्पवाचनाया आरम्भः सम्भाव्येत
तर्हि 'वीरात् त्रिनन्दाङ्कशरद्यचीकरत्, त्वच्चैत्यपूते ध्रुवसेन-

भूपतिः। यस्मिन् महैः संसदि कल्पवाचना–माद्या तदाऽऽन-
न्दपुरं न कः स्तुते ॥१॥ इतिमुनिसुन्दरसूरिसूत्रितस्तोत्ररत्ना-
करस्य वचसः का गतिरिति ?। तदा प्रवृत्तापेक्षयाप्याद्यत्वस्य
सम्भवात् अभूतपूर्वतया भवनादप्याद्यत्वस्य संभवात्।
तत्त्वतः कल्पान्तर्वाच्यवचनानुवाद एवेति न कोऽपि वस्तु-
तत्त्वस्य बाध इति। यच्चाधुना सामाचारीव्याख्यानम-
कुर्वन् साधुजनः सांवत्सरिकदिने पर्युषणाकल्पापराभिधान-
सांवत्सरिककल्पं वाचयति, तदपि न प्रत्नं। यतः खरतर-
कृतायां सन्देहविषौषध्याख्यवृत्तौ व्याख्यानविभाग एव।
श्रीतपोगच्छीयेऽप्यन्तर्वाच्यादौ विभाग एवं नवानां क्षणानां–
१ शक्रस्तवं यावत् २ शक्रस्तवगर्भावतारसञ्चाराः ३ स्वप्न-
विचारगर्भस्थाभिग्रहौ ४ जन्मोत्सवश्रीवीरकुटुम्बविचाराः
५ दीक्षाज्ञानपरिवारमोक्षाः ६ श्रीपार्श्वश्रीनेमिचरितान्त-
राणि ७ श्रीआदिनाथचरितस्थविरावल्यौ ८ सामाचारी-

मिथ्यादुष्कृतं च श्रीकल्पकाचार्यस्तथा । सप्तदशशताब्द्या जाता वृत्तयः सामाचार्यन्तानि नव व्याख्यातानि व्याख्यानानि निर्दिशन्ति, न च पुरापि समग्रं कल्प एकदिनाकर्णनीयतया मत, किन्तु 'अणागतं पज्जोसविज्जइ'तिवचनात् सांवत्सरिकप्रतिक्रमणानन्तरं समाप्य कल्प समाप्तिनिमित्तकायोत्सर्गोऽनेन पञ्चभिरेव दिनैस्तस्य कर्णनीयता । ये तु नवुर्गति सर्वथाऽतिक्रम्याधिकदिनानि यावत् व्याख्यानयन्ति कल्प स्वतराशास्ते सिद्धान्तच्छायामप्यतिक्रामन्ति । यत्तु तुर्ये क्षणपन्तर्गल्यादिषु लघु सर्वत्र तदेवद्व्यवृद्धयर्थं क्रियमाण भगवाराधाक्षिपति । न चानुकरण महापुरुषाणा सर्वथानुचित, द्वात्रिंशद्बद्धनाटकेषु चरमनाटक देवैरपि जिनानामग्रे तत्तद्वृत्तानुकरणस्य प्रसिद्धत्वात् । न च वान्य कथ प्रतिपर्युषण तत्तदेव वाच्यते, नूतनवाचनस्य रसमदत्वात्तत्कर्तुमुचितमिति । यतः प्रतिपर्युषण श्रीकल्पवाचनात् तद्विवृतजिनचरितस्थविरावलीसामाचारीणा परिचितनरत्वमाशालाङ्छन स्यात्, स्याच्च बहुमानो जिनादिषु सर्वेषां विशेषत । ततः संस्कारदार्ढ्याय महापुरुषादरातिशयाय वाचनमेतस्य परमशुश्रूषावता तत्त्वजिज्ञासुना रान्यमेवैतत् सर्वकाल्यमपि पुरातनैस्तदेवाचरितमादिष्ट च वाचनमिति ॥ आगमोद्धारक–आचार्यप्रवर–श्रीआनन्दसागरसूरिभि सदृब्ध पर्वकल्पवाचनम् ॥

## अधिगमसम्यक्त्वम् (३)

श्रावकाणा कुले जाताश्चिराद्धर्मेण भाविते । बाल्ये मात्रादिभिर्श्चीर्णां, दृष्ट्वा धर्मक्रिया पराम् ॥१॥ स्वभावतः स्वय धर्म–परा ये स्युरनोदिताः । तेऽभिश्रिताः दृश शुद्धामुच्यते साऽभिगमाश्रिता ॥२॥ अधेरिता यतो दृष्टिरिय शुद्धा समागता । ततोऽभिगमत्वेऽपि, श्रुते नैसर्गिकी मता ॥३॥ प्रज्ञापिता सदाचारं, यदा माप्त' शिशु' सुखम् ।

जैनधर्मस्य वर्यत्वं, तत्त्वाद् बुद्धेर्निर्जयेदि ॥४॥ तदागमोऽभवत्तस्य, सामान्याच्छुद्धधर्मगः। तदेदमाभिगमिकं, सम्यग्दर्शनमुच्यते ॥५॥ यत्र श्राद्धाः सदाचारास्तस्मिन्नैके महोत्सवाः। रथयात्रादिसंयुक्तास्तत्र स्यात्प्रतिमाऽर्हताम् ॥६॥ सप्रसादामलङ्कारैर्युक्तां तामेक्ष्य कश्चन। विधर्मा प्रतिवेश्मस्थो, निमित्तात् सद्दृशं व्रजेत् ॥७॥ (युग्मम्) गृहासन्ने वरे चैत्ये, मूर्तिस्नात्रादिकान् रवान्। श्रुत्वा चैत्योपवेश्मस्थः, सम्यक्त्वं कश्चिदाश्रयेत् ॥८॥ कश्चित् प्रभावनाकामो, व्रजेत्स्नात्रादिकं महं। कुर्वन् क्रियां सदाचारां, शिक्षया सद्दृशं व्रजेत् ॥९॥ प्रतिवेश्मनरः कश्चित्, शृण्वन् साध्वीरितां कथां। जीवादितत्त्वसंयुक्ता—मार्हतीं दृशमाश्रयेत् ॥१०॥ एवं लब्धाः समाः सद्दृग्दशा अधिगमे मताः। शास्त्रकृद्भिरतो विज्ञेयथार्हमूह्यतामिदम् ॥११॥ इति आगमोद्धारक—आचार्यप्रवरश्रीआनन्दसागरसूरिभिः संदब्धं अधिगमसम्यक्त्वं समाप्तम्।

## पर्युषणापरावृत्तिः (४)

ननु पञ्चकपञ्चकवृद्ध्यादिविधिना पर्युषणाया विधानस्य श्रीआर्यस्कन्दिलाचार्यात् प्राक्तनकाले एव तिरोभावः श्रीमत्कालकाचार्यानेहस्यपि स प्रवर्त्तमानश्चेति साधितेऽपि भगवान् कालकाचार्यः सांवत्सरिकपरावर्त्तकः कदा बभूवेति निश्चेतव्यमिति।

विक्रमसंवत्सरस्योत्पत्तेः प्रश्नवाहनकुलस्याप्याविर्भावस्य च समयात् प्रागेव बभूवेति निश्चयो निराबाध इति।

ननु कुत आचार्यप्रवरात् तत्कुलमाविर्बभूव?।

आचार्यप्रवरेभ्यः सुस्थितसुप्रतिबुद्धेभ्यः। तदधिकार एव पर्युषणाकल्पे स्पष्टमुदितं—'चउत्थयं पण्हवाहणयं'ति।

ननु श्रीसुस्थितसुप्रतिबुद्धेभ्यः प्रश्नवाहनस्योत्पत्तिरित्येव, सांवत्सरिकपर्वणः ततः कुलात्प्राग्बभूवेति कथं निश्चेतव्यमिति।

शृणु, मलधारिगच्छो हि प्रश्नवाहनकुलोद्भव । तत्र गच्छे च आचार्यवर्या श्रीहेमचन्द्रसूरयो जाता । तैश्च पर्युषणापर्वण परावृत्तिरभिमतेति । यदि च श्रीकालका चार्याः प्रश्नवाहनकुलोत्पत्तेः पश्चाज्जाता अभविष्यन् तर्हि न श्रीकालकाचार्यविहिता परावृत्तिमन्वमंस्यत, भिन्नपारम्पर्याणा परम्परागतसामाचारीणा प्रमाणीकरणस्यासम्भवात् । किञ्च—श्रीपुष्पमालापराभिधानोपदेशमालाया वृत्तौ श्रीमता कालकाचार्याणा पर्युषणायाः परावृत्तेश्च समयं विक्रमसंवत्सरोत्पत्ते प्रागवाचख्यु । यतस्तत्रातनमेतद्- श्रीकालकाचार्यानीतशकनृपकृतोज्जयिनीशासनं प्रवृद्धमपि श्रीविक्रमादित्य. स्वकीयसंवत्सरप्रवर्तनेन सञ्जहारेति । एवमनितिरातीनत्वादेव धुरंधरश्रीप्रद्युम्नक्षमाश्रमणशिष्यैः श्रीनिशीथचूर्णिकृद्भिरपि श्रीमता कालकसूरीणा श्रीपर्युषणापर्वपरावृत्तिकारिणा चिरन्तनत्वमर्वाक्तनत्वभाविर्भावित युक्तियथमवतरेदिति । चूर्णिकृतामपि चिरतरातीताः पूर्वजाः श्रीकालकाचार्याः । तत एव तेषा श्रीमता भृगुकच्छान्निर्गमनकारणनिरूपणे मतान्तरसम्भावनोद्भाविता । किञ्चाधुनातनेतिहासविदोऽपि विक्रमराज्यात् प्राक् राज्यमासीत् शकाना,इत्य श्च ते विक्रमेणेति विक्रमस्य शकारिरित्यु पाधिरिति स्वप्नमामनन्ति । न च तेभ्यः श्रीकालकाचार्येभ्योऽपर शकानामानेतेति केनापि लौकिकेन लोकोत्तरेण वोदितं । श्रीमद्भिर्मलधारिहेमचन्द्रसूरिभिश्च स्पष्टीकृतमेवैतद्युत-गर्दभिल्लनृपस्योत्सादका पर्युषणापर्वतिथे परावर्त्तकाश्च कालकाचार्या नैव भिन्ना इति । किञ्च—श्रीमता भगवता कालकाचार्याणा दीक्षागुरवः श्रीमन्तो गुणसुन्दरसूरयः । श्रीमन्तो गुणसुन्दरपादाश्च दशसु दशपूर्वीषु "महागिरिः सुहस्ती च, सूरिश्च गुणसुंदर," इति वचनेन गण्यमानाः सन्ति । तथा नागमविहारिश्रीगुणसुन्दर-

सूरिचरणसेवकानां युगप्रधानश्रीकालकाचार्याणां समा-
चार आचार्यश्रीमदार्यरक्षितपादप्रणीतानुयोगपार्थक्यमूढन-
यिकद्वयप्रामाण्यवत् सर्वेषां शासनानुसारिणां प्रमाण-
पदवीमासादयेदेव । तत एव निशीथचूर्णिकारकालेऽप्य-
विगानेन पर्युषणातिथिपरावर्त्तस्य सकलश्रीसङ्घमान्यत्वम-
भूत् । तत एव पर्वस्वेव पर्युषितव्यं नापर्वसु प्रायश्चित्तापत्ते-
रितिश्रीनिशीथसूत्रनिर्युक्तिव्याख्यानावसरे तथा निर्विभागेन
जातं नोदनम्—'संपइ कहं अपव्वे पज्जोसविज्जति'त्ति। समा-
धानेऽपि कुलगणादिविभागमन्तरैवाख्यातं—'जुगप्पहाण-
सिरिकालगायरिएहिं पवत्तिय'त्ति। यद्यपि श्रीनिशीथ-
चूर्णिकृतां समये न कोऽपि तादृक् श्रीमतां कालकाचार्याणां
परावर्त्तने पर्युषणातिथेरभूद् विप्रतिपत्तेति। तत एव
'सयलसंघेण य संमय'त्ति प्राहुश्चूर्णिकारा भगवन्तः।
एवं चागमविहारावसरभावित्वादेव भगवतां कालकाचा-
र्याणां तादृशं निगोदविषयं ज्ञानं, येन विहरमाणभगवद्भिः
श्रीसीमन्धरस्वामिभिरिन्द्रस्याग्रे त एव तदा भरतक्षेत्रीय-
निगोदव्याख्यातृषु दृष्टान्तीकृताः। यद्यपि कोविदाः केचित्क-
थयन्ति – यत् निगोदानामाश्चर्यकारकनिवेदनविधातारः
श्रीआर्यरक्षितसूरय एव, तेषामेवापराभिधानं श्रीकालका-
चार्या इति। तन्न रम्यम्, यतः श्रीउत्तराध्ययनानां चूर्णौ
वृत्तौ च श्रीशान्तिसूरीयायां स्पष्टतया श्रीकालकाचा-
र्याणां श्रीआर्यरक्षितसूरिभ्यो भिन्नत्वं सादिव्यकरणहेतुकं
निगोदानां व्याख्यातृत्वं च व्याख्यातं। तत्पाठश्च प्रज्ञापरिषह-
दृष्टान्तान्तर्गत एवंभूतः—'ताण अज्जकालगाणं समीवे सक्को
(य) आगंतुं निगोयजीवे पुच्छति जहा अज्जरक्खियाणं
तहेव जाव सादिव्वकरणं च' त्ति

ननु इमे एव पर्युषणातिथेः परावर्त्तकाः कालकसूरयः
श्रीआर्यरक्षितमिश्रेभ्यश्च पृथग्भूता निगोदव्याख्यातारस्तर्हि

ति

हे

॥

आचारप्रकल्पचूर्णौ श्रीपुष्पमालास्वोपज्ञवृत्तौ च तद्वृत्ताख्याने कथ नादितम् ?। श्रीआचारप्रकल्पे पर्युषणाया अपर्वण्यपि करणस्य प्रामाणिकाचरणरूपतादर्शनमात्रप्रयोजनमेव तद्वृत्त, ततस्तावन्मात्रमेव तत्र तदुदितं। दूर तिष्ठत्वन्यत्, जन्म स्थानवराग्यप्रव्राजकप्रभृति अपि नाख्यात तत्र। एवमेव पुष्पमालाया वृत्तौ। पुष्पावलम्बनेऽपवादसेवनमपि न भवद्धिकरमित्येतत्सूचनायापवादतात्पर्यार्थकमेव तद्वृत्त तत्राख्यातम्। पर नैतावता अन्यवृत्तान्ताना तत्रभवदीयाना मसत्ताऽसत्यता वा। नहि श्रमणस्य भगवतो महावीरस्योपधानश्रुताध्ययनेऽनाख्यात श्रीपर्युषणाकल्पे श्रीआचाराङ्ग-भावनाऽध्ययने सूत्रकृताङ्गीयवीरस्तुत्यध्ययने श्रीस्थानाङ्गे श्रीव्याख्याप्रज्ञप्तिपञ्चदशगाशालकशतके च पृथक् पृथगुक्तमसदसत्यं वेति केनापि मार्गगामिना गदितुमपि शक्य। तथाऽत्राचारप्रकल्पादिषु तत्तदधिकारेण तावन्मात्र

तावन्मात्रमेव प्रत्यपादीति। अन्यचूर्ण्याद्युक्तमसत्तयाऽसत्य
तया वा आख्यातु कथं ख्यातकीर्त्तिराख्यायात्। भगवत
श्रीकाल्काचार्याणामितिवृत्ताख्यानरूपे तत्कथानके
जिनप्रभीयजिनदेवप्रभृतिभिस्तु सर्वमेतदामूलमितिवृत्तमुप
श्रीमता। ननु तेषु श्रीमदितिवृत्तसूचकेषु कथानकेषु श्रीसा
गरचन्द्राणा श्रीरत्नाकरसूरिविनेयाना प्रज्ञोत्कर्षमदा
तमनसा गुरुतया न एव पर्युषणातिथिपरावर्त्तादिकारिण
एव श्रीकाल्काचार्या उदिता इति सत्यम्। उदितास्तथा
त्वेन, ननु किं दूषण तत्र? येन साशङ्कास्तच्छ्रद्धाने
यतस्तथाविधमहात्मना तथाविधः प्रज्ञामदमत्तः परि
वारा न सम्भोभवीति। पर न तद्वर्णायं, श्रीसागर
चन्द्राचार्याणा सत्यपि प्रज्ञामदावलेपे क्षमाश्रमणता निर्यु
क्त्योदीरिता। सा च श्रीमद्भि काल्काचार्यक्षमाश्रमण
तया तुल्याद्राविता। यतस्तत्रोक्त–' उज्जेणि काल्गरवमण

सागरखमणा सुवण्णभूमीए’त्ति। परिवारदूषणेन गणाधिपस्य न्यूनताया अनुमायां तु श्रीनन्दिषेणादिभिर्भगवतो महावीरस्य न्यूनताया अनुमाऽव्याहता, तत्र युष्माभिरपि परिवारत्वे तद्दुष्टत्वे च शङ्कालेशस्यापि कर्तुमशक्यत्वात्। यथार्थप्रेक्षिणश्चेद्भवन्तस्तर्हि त्वेतदेव विमृश्यतां महात्मनामसाधारणं माहात्म्यं यत्–शिष्याणुशिष्याणामप्यग्रे अज्ञातस्वरूपेण विनयमर्यादया पूर्णगाम्भीर्यमवतस्थुरिति। न च वाच्यं तुरमणीनगर्युपलक्षिता अपि कालकाचार्या एत एव सन्तु किं तेषामपि पृथग्भावेनेति। यतो ये श्रीयुगप्रधानकालकाचार्यप्रवर्त्तितायाः पर्युषणातिथेरपलापकाश्चकुर्वांसश्च व्यक्तिद्वेषदग्धतामात्रेण तत्पक्षपाताय भिन्नान् भिन्नान् कालकाचार्यान् कल्पयित्वा मुग्धतममोहकरं वचनं। असद्भूता गाथा उच्चार्य यत्तद् वदन्तु परं श्रीनिशीथचूर्ण्यादिपूर्वगतश्रुतधारकपादसेवकोदित्यनुसारेण ब्रुवतां न नः कोऽपि सङ्कोचः शङ्कालेशो वा। न च कोऽपि तथाविधः कथाकारः एतान् श्रीमतः पर्युषणातिथिपरावर्त्तादिनोपलक्ष्यमाणान् कालकाचार्यान् तुरमणीनगर्युपलक्षितकालकाचार्यतया निगदति। न च वाच्यं प्रतिष्ठानपुरेशता शातवाहनस्य या तत्रभवदितिवृत्ते निगद्यमानास्ति सा न तथ्यतामास्कन्दति, यतः प्रतिष्ठानपुरेशितुः शकसंवत्सरप्रवर्त्तकस्य सत्तासमयो विक्रमसंवत्सरात् पञ्चत्रिंशदधिकशतरूप इति। यतः शालिवाहननाम नान्यस्य नृपवरस्य भवेदिति शतक्रतोः शासनं?। वस्तुतस्तु शातवाहनोऽयं न तु शालिवाहन इति भ्रममुद्वम, भज च सर्वज्ञशासने रसिकताम्।

ननु ‘तेणउणवसएहिं, समइक्कंतेहिं वद्धमाणाओ।
पज्जोसवणचउत्थी, कालयसूरीहिं तो ठविआ ॥१॥
सालाहणेण रण्णा संघाएसेण कारिओ भयवं। पज्जोसवण

आचारप्रकल्पचूर्णौ श्रीपुष्पमालासोपज्ञवृत्तौ च तद्वृत्तव्याख्याने कथं नोदितम्?। श्रीआचारप्रकल्पे पर्युषणाया अपर्वण्यपि करणस्य प्रायश्चित्तमाचरणस्यैतद्दर्शनमात्रप्रयोजनमेव तद्वृत्तं, ततस्तावन्मात्रमेव तत्र तदुदितं। दूरे तिष्ठत्वन्यत्, जन्मस्थानदेशगमनराजप्रभृति अपि नाख्यात तत्र। एवमेव पुष्पमालाया वृत्तौ। पुष्टालम्बनेऽपरादसेवनमपि न भवशुद्धिकरमित्येतत्सूचनायापवादतात्पर्यार्थकमेव तद्वृत्तं तत्राख्यातम्। पर नैतावता अन्यवृत्तान्तानां तत्रभवदीयानामसत्ताऽसत्यता वा। नहि श्रमणस्य भगवतो महावीरस्योपधानश्रुताध्ययनेऽनाख्यात श्रीपर्युषणाकल्पे श्रीआचाराङ्गभावनाध्ययने सूत्रकृताङ्गीयवीरस्तुत्यध्ययने श्रीस्थानाङ्गे श्रीव्याख्याप्रज्ञप्तिपञ्चदशशतकशालकशतके च पृथक् पृथगुक्तमसदसत्यं चेति केनापि मार्गगामिना गदितुमपि शक्य। तथाऽऽचारप्रकल्पादिषु तत्तदधिकारेण तावन्मात्रं तावन्मात्रमेव सत्यपादीनि। अन्यचूर्ण्याद्युक्तमसत्तयाऽसत्यतया वा आख्यातु कथं ख्यातकीर्त्तिराख्यायात्। भगवतां श्रीकालकाचार्याणामितिवृत्ताख्यानरूपे तत्कथानके तु जिनप्रभीयजिनदेवप्रभृतिभिस्तु सर्वमेतदामूलमितिवृत्तमुक्तं श्रीमतां। ननु तेषु श्रीमदितिवृत्तसूचकेषु कथानकेषु श्रीसागरचन्द्राणां श्रीरत्नाकरसूरिविनेयानां प्रज्ञोत्कर्षमदाध्मातमनसां गुप्तया न एव पर्युषणातिथिपरावर्त्तादिकारिण एव श्रीकालकाचार्या उदिता इति सत्यम्। उदितास्तथाप्येवेन, ननु किं दूषणं तत्र? येन साशङ्कास्तच्छ्रद्धाने, यतस्तथाविधमहात्मना तथाविधः प्रज्ञामदमत्तः परिवारो न सम्भवतीति। पर न तद्रमणीयं, श्रीसागरचन्द्राचार्याणां सत्यपि प्रज्ञामदावलेपे क्षमाश्रमणता निर्युक्त्योदीरिता। सा च श्रीमद्भिः कालकाचार्यक्षमाश्रमणतया तुल्योद्भाविना। यतस्तत्रोक्तं—' उज्जेणि कालगसमणा

सागरखमणा सुवण्णभूमीए’त्ति। परिवारदूपणेन गणाधिपस्य न्यूनताया अनुमायां तु श्रीनन्दिषेणादिभिर्भगवतो महावीरस्य न्यूनताया अनुमाऽव्याहता, तत्र युष्माभिरपि परिवारत्वे तद्दुष्टत्वे च शङ्कालेशस्यापि कर्तुमशक्यत्वात्। यथार्थप्रेक्षिणश्चेद्भवन्तस्तर्हि त्वेतदेव विमृश्यतां महात्मनामसाधारणं माहात्म्यं यत्–शिष्याणुशिष्याणामप्यग्रे अज्ञातस्वरूपेण विनयमर्यादया पूर्णगाम्भीर्यमवतस्थुरिति। न च वाच्यं तुरमणीनगर्युपलक्षिता अपि कालकाचार्या एत एव सन्तु किं तेपामपि पृथग्भावेनेति। यतो ये श्रीयुगप्रधानकालकाचार्यप्रवर्त्तितायाः पर्युषणातिथेरपलापकाश्चक्रुवांसश्च व्यक्तिद्वेपदग्धतामात्रेण तत्पक्षपाताय भिन्नान् भिन्नान् कालकाचार्यान् कल्पयित्वा मुग्धतममोहकरं वचनं। असद्भूता गाथा उच्चार्य यत्तद् वदन्तु परं श्रीनिशीथचूर्ण्यादिपूर्वगतश्रुतधारकपादसेवकोदित्यनुसारेण ब्रुवतां न नः कोऽपि सङ्कोचः शङ्कालेशो वा। न च कोऽपि तथाविधः कथाकारः एतान् श्रीमतः पर्युषणातिथिपरावर्त्तादिनोपलक्ष्यमाणान् कालकाचार्यान् तुरमणीनगर्युपलक्षितकालकाचार्यतया निगदति। न च वाच्यं प्रतिष्ठानपुरेशता शातवाहनस्य या तत्रभवदितिवृत्ते निगद्यमानास्ति सा न तथ्यतामास्कन्दति, यतः प्रतिष्ठानपुरेशितुः शकसंवत्सरप्रवर्त्तकस्य सत्तासमयो विक्रमसंवत्सरात् पञ्चत्रिंशदधिकशतरूप इति। यतः शालिवाहननाम नान्यस्य नृपवरस्य भवेदिति शतक्रतोः शासनं ?। वस्तुतस्तु शातवाहनोऽयं न तु शालिवाहन इति भ्रममुद्वम, भज च सर्वज्ञशासने रसिकताम्।

ननु ‘तेणउणवसएहिं, समइक्कंतेहिं वद्धमाणाओ।
पज्जोसवणचउत्थी, कालयसूरीहिं तो ठविआ ॥१॥
सालाहणेण रण्णा संघाएसेण कारिओ भयवं। पज्जोसवण

चउत्थी चाउम्मास चउद्दसीए' ॥२॥ त्ति तीर्थोद्गालिकविरुद्धमेतदिति। विरुध्यता, न भ्रान्तधूमेन जलाश्रयत्वबाधः, तन्नाम्नोल्लेखेऽपि तन्नादर्शनान्नितरां भ्रान्तता। न च मङ्गलवचनं तादृशेन बाध्यते। किञ्चात्र स्थापितेनिपदेन स्यादेतदपि यत्तदा कश्चिदाचरणाया आगमादपि बल्वत्तरताया सत्यामपि लुम्पक उत्थापनपरायणो जातस्तं प्रति सा प्रमाणभूता स्थापिता, तत्कृता च श्रीकालकाचार्यप्रवर्त्तिता चतुर्थ्यपि स्थापिता। किञ्च–शातवाहनस्य भाद्रपदशुक्लपञ्चम्यामाया लोकप्रवर्तित इन्द्रमह इति ता परावर्त्तयाचकार, चतुर्दशीचतुर्मास्या तु न कोऽपि विघ्न इति। तर्हि कथं परावर्तितं ?, चतुर्थीकरणादनायास सिद्धमेव तत्परावर्त्तनं, प्राक्तनपञ्चाशद्दुत्तरसप्ततिदिननियमात्। अत एव भाष्ये चूर्णौ च शालिवाहनस्य तिथ्यादिरूपे चतुर्मासी या चतुर्दश्यां तदा क्रियमाणाऽऽसीत् तामप्रतिक्रम्यापि विहरेदिति यदुक्तं तत्सङ्गच्छत एव। एवं च चतुर्दशीचतुर्मासीकरणे शालवाहनादेशः। किञ्च–शातवाहनस्य विज्ञप्तिमनुरुन्धानैर्भगवद्भिरभिमत, न तु राज्ञाऽऽदिष्टं। अन्यच्च प्रतिष्ठानपुरे श्रीवीरपञ्चमशताब्द्यां शातवाहनस्य सत्त्वं चूर्ण्यादिषु साधितं तथा न दशमशताब्द्यां क्वापि केनापीति भावार्थोऽयमेव ज्ञेय यत्कमपि उत्थापकमुत्पन्नं तदाचरणाप्रामाण्येन शासितवान्। अत एव च तत्र प्रान्त्ये सुप्रच्यते–'आयरणं तं पमाण'ति। तत्त्वत आचरणायाः प्राग्जातायाः प्रामाण्यस्थापनापरा एता गाथा इति। न ताः सत्या इत्यङ्गीकुर्वाणाना पर्युषणातिथिपरावर्त्तः श्रीवीरपञ्चमशताब्दीय इत्यङ्गीकरणे विरोधलेश। आश्वलिकादिव्यमतानामुत्पत्ते प्राक्तु सर्वरपि गच्छवर्तिभिरविगानेन स्वीकारेऽपि तथाविधागमविहारिकालीनयुगप्रधानप्रवर्त्तित एव परावर्त्तहेतुः।

अन्येषां वचने विविधविप्रतिपत्तीनां नैवासम्भव इति तु पर्यालोच्यं सूक्ष्मधीभिः स्वयमिति। इति आगमोद्धारक-आचार्यप्रवर-श्रीआनन्दसागरसूरिभिः संदृब्धा पर्युषणापरावृत्तिः

# अव्यवहारराशिः (५)

ननु सर्वेषामनन्तकायिकानां कायस्थितिरभिधीयते इतरेषामपि च। तथा सर्वेषामुत्कृष्टमन्तरं वनस्पतिकालोऽभिधीयते, बादरेतरनिगोदानामपि कायस्थितिश्च। सर्वमेतत् पर्यालोचयतां कथं संसारचक्रस्य आदिमत्ता न प्रतिभासेतेति। सत्यं, परं ताः सर्वाः कायस्थितयः सांव्यवहारिकानाश्रित्य व्याख्याताः, संसारचक्रस्यानादिमत्ता तु अव्यवहारिकानुद्दिश्य निर्दिष्टा। यतः प्रथममन्यस्मात्स्थानादागते जीवे कायस्थितेरारम्भः, अनादिवनस्पतीनां त्वन्यतः स्थानादागमनाभावान्न तदारम्भो, न च तत एव तन्निर्देशोऽपि। तथा चाव्यवहारिणोऽनादित्वात् संसारस्यानादिता सुगमैवेति। एवं च सर्वेषां जीवानां तत एव निर्गमात् जीवानां सा सुसाध्येति।

ननु 'सासए जीवे'-त्यादिवचनात् जीवस्यानादिता, तत एव च संसारचक्रस्यापि तत्ता सुश्रद्धेया, परमव्यवहारराशावेवानादिकं जीवस्यावस्थानमभूदिति कथं ज्ञेयमिति? सत्यं, श्रीमन्तो जिनभद्रगणिक्षमाश्रमणाः श्रीविशेषणवत्यामुदाजहुः-'अत्थि अणंताणंता निगोयवासं अणुहवंति'त्ति, अतोऽवसीयते यद्-अद्यापि कालं यावत् निगोदादनिर्गता अनन्तगुणानन्ता जीवाः सन्ति ते चाव्यवहारिका एवेति।

[illegible]नन्तानां जीवानां [illegible]
अनन्तगुणानन्तानां जीवानां [illegible]। [illegible]
[illegible] गच्छुस्तथापि

स्मिन्निगोदे जीवानामानन्त्य, पर समस्तलोकस्य गोलकतत्स्थावगाहनातत्स्थनिगोदानामसङ्ख्येयत्वादसङ्ख्यगुणानन्ता एव जीवा भवेयु, अनन्तगुणानन्ताश्च कथ्यन्ते ते, तत् कथं सङ्गच्छते? इति सत्य, परमेकस्मिन्नेव निगोदे अनन्तगुणानन्तगुणजीवाना सत्त्व, तत सर्वनिगोदजीवानामनन्तगुणानन्तत्वसत्त्वे किमयुक्तमेतद्दर्शनार्थंव च 'अणताणते'ति विशेषणवतीवचः। एतत्फल च सर्वकालीनसिद्धानामनन्तरेऽप्येकस्य निगोदस्यानन्तभाग एवेति सिद्धान्तस्य जीवराशेरक्षयस्य च सुश्रद्धेयतेति।

ननु के व्यवहारराशि गता के चाव्यवहारराशिमिति?। येऽनादिकालता निगोदावस्थामनुभवन्ति तेऽव्यवहारराशि गता, तन्निर्गतास्तु व्यवहारिकराशि प्राप्ता इति।

ननु अनादिनिगोदावस्थाम्पाया राशेर्जीवाना कदा निर्गम? इति चेद्। व्यवहारराशे सिध्यन्ति यावन्तस्तावतामेव जीवानामव्यवहारराशेर्निगमः। "सिज्झंति जत्तिया खलु, इह सववहाररासिमज्झाओ। एंति अणाइवणस्सतिरासीओ तत्तिया जीवा ॥७॥' इति विशेषणवतीवचनात्।

ननु–सिद्ध्यता प्राप्यमाणव्यवहारराशिजीवाना च सङ्ख्यासाम्ये किं कारणमिति। तत्र लोकानुभावो मुख्यो हेतु, तद्योग्यग्राह्यशरीरादिपुद्गलानामभावप्रसङ्गोऽन्यथेति अनुमाऽपि न दुष्करेति।

ननु व्यवहारराशिमागतानामनन्तत्वमसङ्ख्येयत्व वा? आद्ये, विहाय निगोदान् सिद्धाश्च कथानन्तता जीवाना? अन्त्ये, 'अत्थि अणता जीवा, जेहिं न पत्तो तसाइपरिणामो'त्ति कथं सङ्गच्छते? इति सत्यं, न ह्येवं नियम्यते यदुत–व्यवहारराशिमागता निगोद न यान्ति, प्रतिपतितसम्यक्त्वानामप्यनन्ताना निगोदयासित्वात्। किन्त्वेतावन्नियम्यते निगोदवासस्यैकशोऽपि त्यागे व्यवहारराशिगतत्वमिति। परं ध्येयमेतत्–निगोदान्नि

गत्य पृथ्व्यादित्वमाप्ता अपि अनन्ता जीवास्तादृशा ये ततः पृथ्व्यादित्वादेव त्रसादिभावमप्राप्य पुनर्निगोदावस्थामेव गता इति अप्राप्तत्रसादिभावानां व्यावहारिकाणामानन्त्ये न काचिदनुपपत्तिरिति।

ननु व्यवहाराव्यवहारराश्योः का मूलभूता ?, द्वे अपि आदियुते, इतरथा वा ? कियत्सङ्ख्याका चेति।

सर्वेषामपि मूलभूताऽव्यावहारिकावस्था सिध्यत्समसङ्ख्याकानां ततो व्यवहारे आगमनात्, यथा प्रवाहेण सिद्धा अनादिकास्तथा व्यवहारराशिका अपि। सिद्धानामनन्तत्वाद्व्यावहारिकाणामानन्त्ये न कोऽपि विचारावकाश इति।

ननु एकस्य निगोदस्यानन्ततमे भागे सर्वकालीना अपि सिद्धभगवन्त इति सिद्धान्तः, विदुषामविवादास्पदं च सः। तर्हि तत्समसङ्ख्यप्राप्यमाणव्यवहारराशिपरा व्यावहारिका अपि तावन्त एव न्यूनाधिका वेति भवदुक्तसिद्धान्तस्यावितथत्वात् व्यवहारराशेरव्यवहारराशिमूलकत्वाच्च व्यावहारिका अपि एकनिगोदस्यानन्तभागगता एवेति

ननु एकस्य निगोदस्यानन्ततमे भागे अनन्तसङ्ख्याका अपि सिद्धा व्यावहारिकाश्च, परं स निगोदः सूक्ष्मो वादरो वेति ?

सिद्धान्ते सामान्यनिगोदाभिधानेन निर्देशेऽपि सूक्ष्मः स ग्राह्यः। यतः स्वाभाविको नित्यः समस्तलोकव्यापकश्च स एव, वादरे तथा जीवानामानन्त्यात् सोपि चेद् गृह्येत न विरोध इति।

ननु के जीवा व्यवहारिणः के वाऽव्यवहारिण इति ?

अनादिकालान्निगोदावस्थां बिभ्राणा ये ते अव्यवहारिणः, ये त्वेकशोऽपि प्रत्येकभावं–पृथ्व्यादिभावमवाप्य पश्चात् सूक्ष्मे वादरेऽपि निगोदे यद्यपि गच्छेयुस्तथापि

ते व्यावहारिका एव। यत आहुः श्रीमलयगिरिपादा प्रज्ञापनोपाङ्गे (पृ १०१) कायस्थितिपदवृत्तौ–'ये निगोदावस्थात उद्धृत्य पृथ्वीकायिकादिभेदेषु वर्त्तन्ते ते लोकेषु दृष्टिपथमागता सन्तः पृथिवीकायिकादिव्यवहारमनुपतन्तीति व्यावहारिका उच्यन्ते, ते च यद्यपि भूयोऽपि निगोदावस्थामुपयान्ति तथापि ते सांव्यवहारिका एव, सव्यवहारे पतितत्वात्, ये पुनरनादिकालादारभ्य निगोदावस्थामुपगता एवावतिष्ठन्ते ते व्यवहारपथातीतत्वादसांव्यवहारिका' इति। अत्र सूक्ष्मबादरभेदेषु निगोदेषु ये स्थिता अनादिकालात् ते पृथ्व्यादिभावस्यानाप्तत्वादसांव्यवहारिकतया स्पष्टं निर्दिष्टाः, पृथ्व्यादिभावमापन्नानामेव व्यावहारिकताऽपि। तथा श्रीकायस्थितिप्रकरणावचूर्णौ (पृ० ३) श्रीकुलमण्डनसूरयोऽप्याहुः–"पृथ्व्यादिव्यवहारमनुपतन्तः सांव्यवहारिका उच्यन्ते, तथा ये पुनरनादिकालादारभ्य निगोदावस्थामुपगता एवावतिष्ठन्ते ते व्यवहारपथातीतत्वादसांव्यवहारिकाः" इति। तत्त्वतस्तु साधारणत्वस्यैकशोऽपि त्यागे व्यवहारिकता, न साधारणत्वेन सदावस्थाने। जीवस्य च व्यावहारिकेतरयोर्विचारो, न शरीरस्येति युक्तमपगतपृथ्व्यादिभावस्य व्यवहारिकत्व जीवाश्रयेणैतद्व्यवहारभावादेव भूय साधारणावस्थामनुगतेनाव्यवहारिकतापत्तिरिति।

ननु सिध्यत्समसङ्ख्याक अव्यवहारान्निर्गम इत्यादिकारणजातेन श्रीप्रज्ञापनोपाङ्गादिवचनेन च सूक्ष्मबादरनिगोदजीवानामव्यावहारिकता पृथ्व्यादिभावमुपगतानामेव च व्यावहारिकता सिध्यति परं श्रीउपमितिभवप्रपञ्चाकथाभवभावनावृत्ति–श्रीयोगशास्त्रवृत्त्यादिष्वनेकशास्त्रेषु स्पष्टतया बादरनिगोदजीवाना व्यवहारराशिता अनादिसूक्ष्मनिगोदानामेव चाव्यवहारिकता प्रतिपादिता (उप० पृष्ठे

१३०, १३१, १२४, भव० २८३, योग० पत्रे ३६) ततः कथं तद् विरुद्धमेतत् श्रद्धातुं योग्यं स्यादिति ?

सत्यमुक्तं, अयुक्तं तूक्तं, यतः श्रीमलयगिरिप्रभृतिभिरागमीयस्थितिं प्रतिपादयद्भिः स्वाभाविकी अव्यवहारेतरराशिगतता जीवानां तथोक्तमिति श्रद्धेयमेव श्रद्धालुभिः। श्रीउपमितिभवप्रपञ्चाकथाकारप्रभृतिभिश्च शास्त्रकारैरुपदेशाधिकारादापेक्षिके व्यवहारिताऽव्यवहारिते उक्ते। न चापेक्षिकं वस्तु पारमार्थिकं बाधयितुमलं कदाचन। न हि क्रूरे राज्ञि यमत्वव्यवहारः सत्ये यमे यमत्वव्यवहारस्य बाधकः। अपेक्षा च तत्र शरीरविषयिणी यतश्छेदादिव्यवहारमुद्दिश्य वैराग्यार्थं सोऽधिकारः। छेदादिव्यवहारश्चास्त्येव बादरनिगोदेष्वपीति व्यावहारिकास्ते बादरनिगोदा उक्ताः। न चेयमपेक्षा तात्त्विकी, यतः बादरनिगोदमागत्य शरीरच्छेदादिविषयं प्राप्य जाता अपि व्यावहारिकाः पुनरपि कर्मोदयपराभूताः सूक्ष्मनिगोदेषु गच्छन्ति छेदाद्यविषयं च शरीरमाप्नुवन्ति तदा अव्यावहारिका अपि भवन्ति। न चेष्टं केषाञ्चिदपि सूरीणां व्यावहारिकस्य पुनरव्यावहारिकतया भवनं, न चेयं व्यवस्था कल्पिता, यतः श्री उपमितिकारा एव स्वयमाहुस्तत्रैव ग्रन्थे—"ते लोका गाढसम्मूढतया न किञ्चिच्चेतयन्ति, न भाषन्ते, न विशिष्टं चेष्टन्ते, नापि ते छिद्यन्ते, न भिद्यन्ते, न दह्यन्ते न प्लाव्यन्ते, न कुट्टयन्ते, न प्रतिघातमापद्यन्ते, न व्यक्तां वेदनामनुभवन्ति, नाप्यन्यं कञ्चन लोकव्यवहारं कुर्वन्ति, इदमेव च कारणमुररीकृत्य तन्नगरमसंव्यवहारमिति नाम्ना गीयते।" अत्र हि स्पष्टं निष्टङ्कितं यदुत—शरीरस्य निश्चेष्टत्वात् छेदादिलोकव्यवहारातीतशरीरवत्त्वात् सूक्ष्मनिगोदानामसंव्यावहारिकता तदपेक्षैव चेतरेषां सांव्यवहारिकतेति। एवं सत्यपि

सूक्ष्मबादरनिगोदाना पारमार्थिकीमव्यवहारिकता खण्डयितु अनवबुध्यैरोपमितिमभृत्युक्तामापेक्षिकीं व्यवहारिता मय तन्ते, ते व्यक्तिद्विपद्विष्टा सदागमीयं पन्थानमुत्सृज्य रा गतिं गन्तारस्तत्तेरल्नि एव परं विदन्ति। "नित्यनिगोदावस्था असाव्यवहारिका जीवा" इति ललितविस्तरापञ्जिकायां श्रीमुनिचन्द्राचार्या ॥ इति आगमोद्धारक–आचार्य श्रीआनन्दसागरसूरिभि सन्दब्धो व्यवहारराशिविचार ॥

---

## संहननम् (६)

॥ एनम ॥ ननु निःशेषास्तिकवर्गस्य परमध्येयं मोक्षपदमेव, जैनाना तु तदेव साध्यं, तत एव च जैनैर्जीवाद्य तत्त्वश्रद्धानेनाभव्यत्वनिराकृतिर्निष्ठा, किन्तु मोक्षपदस्यैव श्रद्धानेन। तथापि यद्यपि जीवादितत्त्वसमुदाये मोक्षस्यान्ते स्थानं, तथापि आश्रवबन्धपरिहार–सवरनिर्जरोपादानबुद्धिमागेर मोक्षबुद्धेरावश्यकता जैनैः स्वीकृता, ततश्च जीवादयो नव पदार्था पश्चात् ज्ञेयहेयोपादेयादितयाऽवाप्तौ सम्यक्त्वस्य प्रतीयेरस्तथापि प्रागेव मोक्षप्रापणबुद्धिप्रादुर्भावात्, यतस्तत्त्वश्रद्धानात् परतोऽपार्द्धपुद्गलावर्त्तः संसार, परं जन्ममृत्यादिरहित सर्वकर्मकलङ्कातङ्कितश्च मोक्षस्तु अर्वाक् पुद्गलावर्त्तात् प्रार्थनापदमेति, तथा च नाभव्याना मोक्षतत्त्वश्रद्धानं, न च मोक्षपदप्रार्थकस्य पुद्गलावर्त्तादधिक. ससारः। पर स मोक्षः किंस्वरूपः ? किं च तस्यानन्तर परम्पर साधनमिति।

आत्मनो नित्यमनन्तज्ञानदर्शनसुखवीर्यस्वरूपेऽवस्थानं मोक्षस्य स्वरूप, तत्प्रतिबन्धकसकलकर्मक्षयोऽन्तरङ्गं क्षायिकज्ञानदर्शनचारित्राण्युपादानतया बहुमयसाधनानि तु त्रसत्वादीनि। अत एव भगवद्भिर्हरिभद्रसूरिभिः साधन

दौर्लभ्यं दर्शयद्भिरुदीरितं–'भूएसु जंगमत्तं, पण्णरसंगो एसो समासओ मोक्खसाहणोवाओ'त्ति, देश्यगतलब्ध-लभ्यापेक्षयैतत्, 'गइइंदिए काए'त्ति, संसारचक्रगतजीव-स्वरूपपरमार्गणापेक्षया तु 'नरगइपणिंदितसे'त्यादीनि। ननु मोक्षस्य स्वस्वरूपत्वात् ज्ञानादीनां स्यात् साधनता, परं त्रसत्वादीनां कथं तथातेति ? प्रतिबन्धककर्मक्षयाय तस्यावश्यंभाव आवश्यकः, तस्यादिक्षयोऽपूर्वकरणादि यथा चाभव्यानां स्वरूपायोग्यत्वान्नापूर्वकरणप्रभृतीनि करणानि तथा स्थावरादीनामपूर्णसाधनत्वान्न तानीति त्रसादिष्वेव मोक्षप्राप्तिरिति।

ननु नरभवं प्राप्ता अपि सर्वक्षेत्रीयाः सर्वकालीनाश्च कथं नाप्नुवन्ति मोक्षमिति चेत्, सामग्रीतत्प्रयोगहीना-भ्यां विघ्नितत्वात्। अकर्मजाः सामग्र्या हीनाः अनाद्य-संहननास्तत्प्रयोगहीना इति।

ननु मार्गणासु नरत्वाद्यावश्यकमुक्तं मुक्तिसामग्र्याः, परं लब्धेष्वपि नरत्वादिषु संस्थानादीनां वैकल्पिकत्वेऽपि संहननस्यावैकल्पिकत्वादवश्यं वाच्यं, तत्कथं नोक्तमिति ?

गत्यादिमार्गणासु न तद्भेदविवक्षेति गत्यादिनामभेदे तद्विपक्षणात्। परमवश्यंभावस्तु आद्यसंहननस्य मुक्ति-सामग्र्यां, तदवश्यम्भावादेव च नग्नाटैः स्त्रीणां मोक्ष-पदवीमसहमानैः तासां तन्निषिद्धं, यावत् युग्मिनीनामपि नाद्यसंहननत्रयीति विप्रतिपन्ना (ते) इति।

प्र० ननु आद्यं संहननं मुक्त्यै आवश्यकं, परं शेषाणि कथं न योग्यानीति ?

उ०–मुक्तिर्हि कृत्स्नकर्मक्षयः, स च मोहक्षयमूलः, मोहक्षयश्च क्षपकश्रेणिसाध्यः, श्रेणिश्च शुक्लध्यानपर्यन्ता, तच्चाद्यसंहननस्यैव, संहननानुसारित्वात् कायबलस्य, तदाश्रयि च मनस्तदाधारं च ध्यानमित्यावश्यकमाद्यं

मुक्तिसामग्र्या संहननमिति।

ननु शक्तिरूपं संहननं, तच्च वीर्य-( वीर्यान्तराय ) क्षयोपशमादिसाध्यमिति गत्यादिमार्गणाबहिर्गतेन संहनननामोदयेन, प्रतीत चैतन् समर्थयतनः कार्यकृदिति वाचाटशेखरो जिनवल्लभमम एव प्ररूपयेत्, न तु कोऽपि जैनागमानुसारीति। सूत्रेषु हि अस्थिनिचयस्यैव संहननस्य मतत्वात्। अत एव देवादीनां तथाविधशरीराभावाद्संहननित्वमुदितं। एवं च यत् क्वचिद्देवानामाद्यसंहननित्वमुक्तं तत्तु तथाशक्तिमत्तया गौणमिति। न ह्यग्निर्माणवक इति पाकार्थं तमादत्ते आप्त इति।

प्र० नन्वयोग्यान्यपि शेषाणि संहननानि पुण्यप्राप्याणि पापोदयप्राप्याणि चेति?

उ०-प्रकृष्टातिकृष्टपापोदयप्राप्याणि शेषाणि, ततः शेषाणि पञ्चापि पापप्रजनितया निर्दिष्टानि शास्त्रेषु सूरिभिरिति।

प्र० ननु यथा शेषाणि संहननानि मकृष्टादिपापोदयप्राप्याणि अयोग्यानि मुक्त्यै तथा अनाद्यानि संस्थानान्यपि?, तत् किं तदप्याद्यमेव तद्योग्यमिति?

उ०-पापोदयेन नायोग्यत्वं प्रतिज्ञायते, अयोगिनोऽप्यन्त्यसमयात् प्रागसातोदयसम्भवात्, किन्तु परमशुक्लसाधनत्वाभावात्, न च संस्थानानि तत्र साधकानि बाधकानि वा, ध्यानोत्पत्त्यकारणत्वादिति।

ननु पापोदयप्राप्याण्यपि अनाद्यानि संहननानि, समोदयप्राप्याणि वर्णादिचतुष्कवत्, एकेन्द्रियादिजातिचतुष्कवद्विषमोदयप्राप्याणि वेति?।

उ०-यद्यपि सामान्येनानाद्यानि संहननानि पापोदयप्राप्याणीत्युक्तं, तथापि बन्धाधिकारे अन्त्यस्य मिथ्यात्वान्ते रोधः, चतुर्णां मध्यानां मिश्रान्ते, आद्यस्याविर-

तान्ते रोध इत्युक्तेरन्त्यस्य द्राघीयःपापोदयजन्यत्वं निर्धारयितुं न दुःशकं। मध्यानां हेतुभूतः पापोदयो तारतम्येन विद्यमानोऽपि न साक्षादुक्तः। परं तेषामाद्यपश्चानां हुंडावसर्पिणीवलात् छेदः क्रमिक उक्तस्ततोऽवसीयते एतद्यत् मध्यानां चतुर्णामपि तेषां पापतारतम्येनोदय इति।

ननु किं किं संहननं कदा कदा व्युच्छिन्नमिति?

उ०—भगवन्तं भद्रबाहुस्वामिनं यावत् षडपि संहननानि प्रवृत्तान्यभूवन्, स्वर्गते च तस्मिन् आद्यमृषभनाराचाङ्कितं वज्रं व्युच्छिन्नं। ततः परमर्वाग् वज्रस्वामिनं ऋषभनाराचं नाराचं च व्युच्छिन्नं। भगवति वज्रस्वामिनि स्वर्गमलङ्कुर्वति तुर्यमर्धनाराचं व्युच्छिन्नं। पश्चाचार्वाक् तन्दुलवैकालिकरचनायाः पञ्चमं कीलिकाख्यं गतं। यतः स्पष्टमुक्तं वैचारिके—'संपइ खलु आउसो! मणूयाणं छेवट्ठे संघयणे वट्टइ' त्ति।

ननु सम्प्रति सेवार्त्तमेव वर्त्तते संहननमित्यत्र श्रीमति भद्रबाहुस्वामिनि च सुरालयमलङ्कुर्वति वज्रर्षभनाराचं व्युच्छिन्नमित्यत्रापि च न कोऽपि विवादः, परं मध्यचतुष्कविच्छेदे विवादः। यतः सुबोधिकाकारैः 'तत्र च संहननचतुष्कं दशमं पूर्वं च व्युच्छिन्न'मित्युक्तम्। न च राभसवृत्त्या व्यलेखीदम् इत्यनाभोगमहिमेति, न चानाभोगदौर्लभ्यं छद्मस्थे 'न च नामानाभोगश्छद्मस्थस्येह कस्यचिन्नास्ती'ति प्रवादस्य प्रसिद्धतमत्वात्। यत आह स तत्रैव—'यत्तु किरणावलीकारेण तुर्यं संहननं व्युच्छिन्नमिति तच्चिन्त्यं, तन्दुलवैचारिकदीपालिकाकल्पादौ चतुष्कव्युच्छेदस्य चोक्तत्वा'दिति।

ननु सत्यमुक्तं सुबोधिकाकारेण यत्किरणावलीकारेण तुर्यं संहननं व्युच्छिन्नमित्युक्तमिति, परं तच्चिन्त्यत्वोक्तिर्व्यक्तिद्वेषदाहमूला। यतः कलिकालसर्वज्ञश्रीहेमचन्द्राचार्याः

परिशिष्टपर्वणि तुर्यस्यैव संहननस्य व्यवच्छेदमाहुः। तत्पाठश्चैवं–'दुष्कर्मावनिभिद्वज्रे, श्रीवज्रे स्वर्गमीयुषि। व्युच्छिन्नं दशमं पूर्वं, तुर्यं संहननं तथा' इति। आवश्यकचूर्णौ पूर्वधराचार्या, आचार्याः श्रीहरिभद्रसूरय आहुरावश्यकवृत्तौ–' तम्मि य भगवंते अद्धनारायसंघयण दसपुव्वाणि य वोच्छिण्णा' इति। आचार्याः श्रीमलयगिरयोऽपि प्राहुः स्वकीयावश्यकवृत्तौ तथैव, तथाच तत्पाठः–'तम्मि य भगवंते अद्धणारायं दसपुव्वा य वोच्छिण्ण'त्ति। सत्सु चैवंविधेषु शास्त्रसमुदायेषु तदनुसारिवचनं यत्प्रवेदितं तत्खण्डनाय को भवभीरुरुच्छेद् विहाय सुबोधिकाकारं। न च वाच्यं यत्–तन्दुलवैचारिकदीपालिकाकल्पोक्तिमनुसृत्य तदुक्तं। यतः तन्दुलवैचारिके दीपालिकाकल्पे च वर्त्तमानमनुष्याणां सेवार्त्तमेव संहननमिति साधयितुमिष्टं। श्रीमति च भद्रबाहुस्वामिन्यायं तद् व्युच्छिन्नमिति शास्त्रेषु स्पष्टतया दृश्यते इति तस्य तदा विच्छेद आख्यायि, परं द्वितीयतृतीये च व्युच्छिन्ने संहनने इति नागमे दृश्यते। भगवति श्रीवज्रस्वामिनि च चतुर्थं व्युच्छिन्नमिति स्पष्टं दृश्यते, ततस्तैः श्रीवज्रस्वामिनि चतुष्काभावरूपत्वाच्चतुष्कं व्युच्छिन्नमिति (विवक्षितं) कीलिकाव्युच्छेदस्य तु क्वापि निर्देशादर्शनान्न विवक्षितं। स्पष्टमेतत् तत्त्वं अनुद्धृत्य किरणावलीकारस्य खण्डनतत्परः सुबोधिकाकारो यद्वा तद्वा प्रललाप। परमपकर्णनीयमेतागमनीतिपरायणानामिति। अधुना सेवार्त्तमेव संहननं वर्त्तते इति निर्विवादमेव। इति आगमोद्धारक–आचार्यप्रवरश्रीआनन्दसागरसूरिग्रथितः संहननविचारः॥

———•—•———

# क्षायोपशमिकभावः (७)

शास्त्रेषु श्रूयते सूरे! भावे क्षायिक एव हि। केवलं
शेषबोधास्तु, क्षायोपशमिके पुनः ॥१॥ तत्र किं कारणं
यस्मात्, केवलावरणं ननु। प्रतिक्षणं भवी सर्वोऽनुभवन्
क्षपयत्यपि ॥२॥ अनुदीर्णस्य तस्य स्याद्, रसो मन्दो विशु-
द्धितः। ततः क्षायोपशमिको, भावस्तत्रापि युज्यते ॥३॥
यथा क्षायोपशमिके, सम्यक्त्वे कर्मपुद्गलाः। मिथ्यात्वीया
रसे मन्दा, वेद्यन्ते नात्र किं तथा? ॥४॥ यथा देशक्षयो-
ऽणूनां, केवलावरणात्मनां। तथा न किं रसस्याऽपि, नाशो
लेशेन युज्यते? ॥५॥ अन्यथा सर्वथा नाशः, केवलावरणस्य
न। प्रदेशेन रसेनैव, देशक्षयमृते भवेत् ॥६॥ मत्यादिज्ञा-
नघातानाा-मणवः कथमाप्नुयुः। क्षायिकत्वं न? यत् पूर्ण-
ज्ञाना मत्यादिभिः क्षितौ ॥७॥ सर्वे गणभृतः श्रेष्ठ-मति-

श्रुतधरा मताः। परमावधयश्चाप्ता', पुनर्विपुलबुद्धिकाः ॥९॥
नोक्तारिक्तं तु मत्यादि, न चैतावन्न लभ्यते। चतुर्णां न
ततः किं ते, मते मिश्रत्वमस्ति भोः? ॥९॥ सत्यं त्वदुक्त-
मेतद्धि, परं नांशेन केवलं। यदेकधैव तत्प्रोक्त-मतो नांशो-
ऽस्य वेद्यते ॥१०॥ यथाबद्धं केवलस्या-वरणं वेद्यते ननु।
ततः क्षायोपशमिको, भावो नैवात्र सम्मतः ॥११॥ सर्व-
थाऽस्य क्षयस्तु स्याद्, गुणस्थानप्रभावतः। क्षीणमोहस्य,
नान्यत्र गुणस्थाने तु सम्भवी ॥१२॥ उत्पद्येत विलीयेत,
यो गुणो मिश्रतामियात्। स एव, न च सम्पूर्णज्ञानं शास्त्रे
तथा मतम् ॥१३॥ न च केवललाभेऽस्ति, सत्तायामुदयेऽपि
च। केवलावरणं, तस्मान् नासौ मिश्रत्वसंयुतः ॥१४॥
सम्पूर्णमतिबोधादि-भावेऽपि तन्निरोधिनां बन्धश्चोदय आप्येते
सदा, तत्तेषु मिश्रता ॥१५॥ न च मत्यादिबोधानां, पदार्था
विषयः समे। कदापि, तत्कथं ते स्युः क्षायिकं भावमाश्रिताः?

॥१६॥ यत्रैषां विषयः शास्त्रे, वर्णित' सम्मितोऽमितः। न चैव तद्धि निश्चाय क्षायोपशमिकीं स्थितिम् ॥१७॥ न ज्ञानावरणानां स्याद्, भाव औपशमो यतः। चत्वार्यघातिपूर्णानि, सम्भवन्ति न च क्वचित् ॥१८॥ केवलं तु विना मोहो-पशमं नैव लभ्यते। मोहोपशमभावे तु, विश्राम्येद् घटिकाद्वयम् ॥१९॥ पश्चात्केवलविभस्यो-पशमायोगतो भवेत्। परं मोहोदयः शान्तः, पुनरायाति वेपनम् ॥२०॥ श्रद्धानदर्शनज्ञान-वीर्याद्या अंशतः सदा। सर्वेषामेव जन्तूनां, भवन्ति तारतम्यतः ॥२१॥ वर्धन्ते हानिमायान्ति, चत्वारोऽप्येत आत्मनां। अतो मिश्रो मतोऽमीषां, भावः श्रीजिनशासने ॥२२॥ यथा गुणा अवाप्यन्ते, नैतेषामुदये सति। तथा लब्धानपि घ्नन्ति, तदेते घातिनो मताः ॥२३॥ ज्ञानाद्या न तदावारि-कर्मणामुदये सति। लब्धेष्वप्यावृत्तिस्तज्ज-कर्मणामुदये पुनः ॥२४॥ नाव्याबाधसुखावाप्ति-र्जायतेऽमुमतो भवे। कथं तदावृतिर्नूनं? तदेतेऽघातिनो मताः ॥२५॥ ज्ञानादेर्गुणवृन्दस्य, यथा ज्ञानादिरोधकाः। आत्मनां, तेन घातीनि चत्वारि दुष्कृतानि तु ॥२६॥ तथाऽऽत्मनो निराबाधसुखादेर्घातका इति। नामादीनि न किं घाति-व्यपदेशमवाप्नुयुः? ॥२७॥ केवलज्ञानदृष्टी ना-प्येते यावत्तदावृतेः। उदयं, न च लब्धे ते हन्येते आवृतेर्बलात् ॥२८॥ ततो न किं मते ते ते, अघातिप्रकृती गणिन्?। वत्सांशः शेषमत्यादिचक्षुर्दृष्ट्यादिको गुणः ॥२९॥ घनो यथैव सूर्याभां सर्वथा वृणुते नहि। केवलज्ञानदृष्टिश्चे, न तथा ज्ञानदर्शने ॥३०॥ घनावृतस्य सूर्यस्य, कश्चिच्छिद्रैर्यथा विभा। तथात्मनां तदाच्छादे छद्मस्थज्ञानदर्शने ॥३१॥

इति श्रीआगमोद्धारक-आचार्यप्रवरश्रीआनन्दसागरसूरिपुङ्गवविरचितः क्षायोपशमिकभाव

---

# अर्हच्छतकम् (८)

श्रीगौतमाय नमः।

प्रातर्ध्येयं परं ब्रह्म, परमेष्ठिपदोत्तमम्।
अर्हत्पदमयं रम्यं, 'नमोर्हद्भ्यः' सनातनम् ॥१॥

लोकानुभावसंयोगः, पदेऽत्रैव यतो जिनाः। प्राग्भवस्यूतत्नामा–नुभावादेव जज्ञिरे ॥२॥ न्यासास्तेषां गतास्तत्रा–ख्यायन्तेऽतो मनीषिभिः। नाम्ना जिना यतः ख्याताव्याख्यातानि जिनेशिनाम् ॥३॥ स्थापना सत्यसंन्यास–वीतरागत्वादिभिर्वृता। मूर्त्तिर्मता, तथा द्रव्ये, जिनजीवाः परे नहि ॥४॥ भावतस्ते जिनाः ख्याता, ये तीर्थस्थापनोद्यताः। प्रातिहार्याष्टकोपेताः, सर्वातिशयशोभिताः ॥५॥ परमेष्ठिपदेष्वाद्यं, पदं स्वाभाविकं ततः। अर्हत्त्वं भगवत्त्वेन, युतं सिद्धं स्वभावतः ॥६॥ अतो न भावमात्रस्या–नुवृत्त्यर्थं परं पदम्। अत्रापरेषु सिद्धादि–ष्वनुवृत्त्यै पदं ह्यतः ॥७॥ नामार्हदादिवन्नैव, न्यासाः शेषपदेषु तत्। चत्वारः स्वाश्रितास्तस्माद्, भावाहर्यै ह्यादिमैर्युताः ॥८॥ अर्हन्मतोद्भवाः सिद्धा, आचार्याः पाठकैर्युताः। मुनयश्च नमस्कार्या, नान्य इत्थं स्फुटोदितिः ॥९॥ अतो न यत्र पञ्चानां, स्मृतिः शक्या परमात्मनाम्। तत्रैकमेव पाठार्हं, 'नमोऽर्हद्भ्यो' न चापरम् ॥१०॥ अनित्या द्वादशांगीयं, सर्वतीर्थेषु शब्दतः। ध्रुवं पदं नमोऽर्हद्भ्यो, न तच्छब्दार्थभेदभाक् ॥११॥ अतो गत्यन्तरे यातो,ऽमुष्माज्जातिं स्मरेत् पदात्। एवं हुंडिकयक्षाद्या, दृष्टान्ता योग्यताभृतः ॥१२॥ न केवलेन नाम्नैते, वन्द्यन्तेऽर्हन्त आदरात्। वृतास्ते पञ्चकल्याण्या, गर्भाज्ज्ञानत्रयान्विताः ॥१३॥ जाता गार्हस्थ्यमाप्तास्ते, जातु संक्लेशिनो नहि। कायपापा अतो नैषा–मायुर्बन्धश्चिरादपि ॥१४॥ सर्वदा देवराजानां, नरेशानां सयोगिनाम्। सदा पूजापदं तेना–र्हन्तः

स्तुत्यान्विता मता ॥१५॥ श्रामण्यमाप्य पूज्यास्ते, रागद्वेषौ परीषहान्। इन्द्रियाणि कषायांश्च, सर्वान् हन्यु क्षणे क्षणे ॥१६॥ साधुचर्यां परामेते, कथारस्तेन गीयते। शास्त्र शस्त्रादिदृष्टान्त-वृन्दं तद्भानसिद्धये ॥१७॥ ध्रुवं निघ्नन्ति कर्माणि, ज्ञानमार्दीनि मूलतः। तत केवलमाप्यार्हन्, ध्रुवं तीर्थं प्रवर्तयेत् ॥१८॥ इमे संसारिणो जीवा, पशुप्राया जडाशयाः॥ जन्मान्तादिवशं यान्ति, सिंहस्थाने मृगा यथा ॥१९॥ इमांस्त्रातुं ततस्तीर्थ-पञ्जरं जिन आदित। करोति तेन गीतो र्हन्, महागोप श्रुतोद्धुरैः ॥२०॥ तीर्थीया अपरेऽपि स्या-नीशान् पाशुपतीन् जगु। परं ते न पशोर्भिन्ना, अगत पुद्गलाश्रयात् ॥२१॥ पशुजातिर्यथा सिंहो, मतः पशुपतिस्तिरति। तथायमिति गीतोऽर्हन्, महागोपतया बुधैः ॥२२॥ पञ्जरगतर्यथा श्वानो, घातका स्यु परस्परम्। तथा स्वार्थपरा जीवास्त्वनस्तद्वारणं हितम् ॥२३॥ अहिंसायादिन सर्वं, तीर्थ्या स्वस्वमते स्थिता। विशेषेण विभागे स्यात्तेषां तीर्थ वचोगतम् ॥२४॥ नैते षण्णां निकायानां, ज्ञान विभ्रति मूलत। लोकदृष्ट्या त्रसान् जीवान्, यदेते मन्वते परे ॥२५॥ एवं च जीवबिन्दुं ते, मन्यन्ते सिन्धुसन्निभान्। स्थावरान् जीवभावेना-विदन्त किं दयापरा? ॥२६॥ अहिंसाध्येयवद् वृत्तं, न देवेषु न चागमे। नान्यो हेतवो नास्या, ईर्याद्या लेशतस्त्विह ॥२७॥ न तत्कृते फलं नास्या, बाधाया दोषसंहति। तदहिंसावचस्तेषां, जैनानाकल्पमाततम् ॥२८॥ वरोद्यताश्च कृष्णाद्या, ब्रूयुर्धर्मे कथं दयाम्?। आदर्शपुरुषा हिंस्रास्तर्हि ब्रूमः परान् किमु? ॥२९॥ तत षण्णां निकायानां, पुत्रवत्पालनापर। महामाहन इत्युक्तो-ऽर्हन्नेरोत्तममार्गगैः ॥३०॥ न चाज्ञारेटनानुज्ञा, युद्धाय प्रेरणं न च। न च कस्यापि शत्रुत्वं, किन्तु रक्षैव जन्मिनाम् ॥३१॥ न चात्र शङ्करो मर्त्या, अमर्त्या वा यतो वध।

तेषां कर्त्तव्यतास्थानं, सर्वेष्वत्रास्ति मित्रता ॥३२॥ कोऽप्य-
कार्षीन्न पापानि, कोऽप्यङ्गी मा च भूद् व्यथी। मुक्ति
गच्छन्तु सर्वेऽमी. मैत्रीति यत्र गीयते ॥३३॥ महामाहनतैषां
तत्, संयमोद्योगकारिणाम्। क्रियागतं फलं चेदमर्हत्ताद्या
गतोपमम् ॥३४॥ मोक्षसाध्यं मतं जैनं, षड्जिकायदयापरम्।
उक्त्वा तत्सिद्धये रत्न–त्रयीं चख्युर्जिनेश्वराः ॥३५॥
रत्नानामाकरः सिन्धुस्तत्तत्पारग आप्नुते। रत्नानि सुरसे-
व्यानि, तत्कृन्निर्यामकोत्तमः ॥३६॥ यावज्जीवं मुनीन्द्राणां,
रत्नत्रय्याः समाददति। कारयन् धारयन् सर्वान्, पोते
संयमनामनि ॥३७॥ प्रतिक्षणं नयन् वृद्धिं, मुनिरस्य
महात्मन.। सर्वं सहायमासाद्य, सिद्धिपुरं प्रयात्यलम् ॥३८॥
महानिर्यामका एते, गीताः शास्त्रे जिनेश्वराः। मान्ये यद्
भवपाथोधौ, शेषाः सर्वे निमज्जकाः ॥३९॥ वेलाकुलं गता
वार्धेः, परंपारं समीयुरति। तत्र यानं परं सार्था–धीनं
व्याबाधवर्जितम् ॥४०॥ सार्थवाहश्च सार्थेन, वहन् सार्थान्
यथा सदा। भवारण्ये व्रजन्नर्हस्तथा रक्षेत् सुमार्गगान्
॥४१॥ ध्येये समे पि वृत्तौ न, समा यत् सा क्रियात्मिका।
क्रिया शक्त्युद्भवा शक्ति–र्न सर्वेष्वसुप्रहिता ॥४२॥ तदत्र
सर्वविरतिस्तथा देशव्रतात्मिका। सरणिः सम्मता द्वैधैक-
र्जुर्वक्रा तथा परा ॥४३॥ प्रयाणं मोक्षगामी न, भनक्त्यत्र
द्विधाध्वनि। व्याघ्राभ्यां रागरोषाभ्यां, स्वं रक्षन् जिनवाग्रतः
॥४४॥ प्राङ् निरुध्याप्रशस्तौ तौ, शस्तावारुह्य द्राग् भवी।
निरालम्बत्वमायातश्छिनत्त्येतौ तु सुन्दरौ ॥४५॥ ततः स्थानं
श्रयेद् भव्यो, जिनवाक्यमनुश्रितः। स्त्रीपण्डकादिसंसर्ग–
हीनं मुनिभिराश्रितम् ॥४६॥ यत्र न ब्रह्मबाधा स्यात्,
स्याच्च संयमसाधनम्। तत्स्थानमाश्रयन् मोक्ष–मेत्यवश्यं
सुधीर्यमी ॥४७॥ जैन एव मतं शास्त्रे, द्वयोः स्थानं
पृथक् पृथक्। मुमुक्ष्वोः पुंस्त्रियोर्यस्माद्, दुर्जयो मोहसम्भवः

॥४८॥ यथाऽरण्य गत सार्थो, रक्षति स्वं दवानलात्। तथा क्रोधादिदावाग्नेरत्र रक्षोक्तितोऽर्हताम् ॥४९॥ दग्धाः परं स्वय क्रोध-मुग्वदावेन सन्ततम्। स्त्रीशस्त्रालङ्कृता मूर्त्तिस्तेषां नाशादगिता ॥५०॥ शान्ता मूर्त्तिर्जिनेन्द्राणां, वामाशस्त्राक्षवर्जिता। प्रशमास्या नसोऽग्रेऽक्षि यपु पर्यङ्कगं गा ॥५१॥ परे तु वीतरागत्व-द्विप क्रोधादिसङ्कुलाः। फलप्राप्ति पुर हत्वाऽऽगता दृप्यन्त्यलम् ॥५२॥ चिन्तामण्यादिवद् मार्गो, गतरागद्विषा न किम्। अत्र न प्राप्य मन्येभ्यः, सदा जीवो गुणालय ॥५३॥ विषयाणा वशं नेत्र, शब्दादीनां प्रजेत्सुधी। आहूयते ध्रुवं निर्युर्जी संसारसङ्कटम् ॥५४॥ नग्नु राज्यं न वा द्रव्य, किन्त्वरक्तद्विषात्मना। जेवा नान्य शिव पन्था, सन्त्वक्षाणि समानि यत् ॥५५॥ प्रशस्तान् विषयाञ्श्रितरा, जिनमूर्त्यादिगान् भरी। सरस्वतीं तटे यायात्, ध्यान शन्ततरं श्रयन् ॥५६॥

यथेक्षुधा मल तले, शोधयित्वा स्वयं प्रजेत्। प्रशस्ता विषयास्तद्वद्विनाश्याथ स्वयं यधु ॥५७॥ विषयाश्च कषायाश्च प्रशस्ता यत्र बन्धनम् तनुयु कर्मणां किन्तु, विदध्यु-र्निर्जरां पराम् ॥५८॥ परं रागः प्रशस्तोऽसौ, यो गुणे गुणधारिणि। द्वेषस्त्वपगुणे नैव-गुणिनि वैरवर्धक ॥५९॥ बहुविधानि यानि स्युस्तानि श्रेयांसि यद्भवे। ज्ञानघ्नादीनि कर्माणि, न मिथ्यात्वादिहानि तु ॥६०॥ मोक्षमार्गे जिनोदिष्टे, प्रजन भव्योऽपि बाध्यते। परिषहोपसर्गस्तज्जेया एते शुभात्मना ॥६१॥ जयाशेषा क्षयोऽध्याना, मुनितायाश्च पालनम्। पराजये द्वय नश्येदेभ्यस्तज्जयी भवेत् ॥६२॥ मुनिता संयमाद्योगोऽप्रमत्तस्य निरन्तरम्। नोद्विग्नः संयमार्थी स्याद् यतः स्वाध्याय सगत ॥६३॥ अन्नं प्राणा न चाकाले, मृत्योरागम इष्यते। साध्यो मोक्षश्च सिद्धो न, तद्युक्ति प्रायुक्ता मता ॥६४॥ छिन्नाशिता दोर्षमुक्ता भिक्षोदिता

जिनैः । मोक्षसाधनहेतोर्यत्, साधोर्देहस्य धारणम् ॥६५॥ मुमुक्षुर्भव्यजीवः स्यात् , मोक्षतानस्तथा यथा । यावन्मोक्षं भवेष्वन्येष्ववश्यं संयमं श्रयेत् ॥६६॥ अष्टभिर्जन्मभिर्नित्यं, चारित्रं पालयन् भवी । अवश्यं मुक्तिमाप्नोति, मृतेर्बाधा न तच्छिवे ॥६७॥ एवं निर्याणमार्गस्य, देशका वाहकाश्च ये। ते महासार्थवाहाः स्यु,-र्भवारण्ये जिनेश्वराः ॥६८॥ अर्हन्तो नैव संसार-मन्यां वा गतिमियूरति। किन्तु कर्मरजः क्षिप्त्वाऽऽप्नुवन्ति ध्रुवमव्ययम् ॥६९॥ व्रतं घाताय पापानां, संवराय नवात्मनां । परीपहोपसर्गाणां, जयात् संवरनिर्जरे ॥७०॥ तीर्थस्य स्थापनं दिष्टा, द्वादशाङ्गीं तनोत्ययं । जीविकर्मशत्रुविघातेन, सर्वान्नेतुं परं पदम् ॥७१॥ जीवितान्तं च संप्राप्तो, जिऽनोवश्यं विनाशनम् । समुद्घातेन संधत्तेऽन्यथा मोक्षे गमो नहि ॥७२॥ अयोग्यन्तं समायातोऽलेश्यो हन्ति समान्यपि। कर्माणि तत ऊर्ध्वं स, याति सिद्धिपुरं महत् ॥७३॥ जीवानां संसृतौ कर्माण्यरयो घ्नंस्ततो ह्यमून् । अरिहन्तार उच्यन्ते, जगत्पूज्याः सनातनाः ॥७४॥ मृता न ते परां यान्ति, गतिं सिद्धिं विना ततः । अर्हाः सिद्धेरवश्यं तदर्हत एव ते ततः ॥७५॥ एवंविधा जिनाः कालाल्लोकोत्तमपदं गताः । अनादेर्यत्तथाभव्य-भावो कृत्रिम इष्यते ॥७६॥ परापरे तथाभावाः, पारंपर्येण तद्गताः । विशिष्टा लोकजीवेभ्यस्तेन लोकोत्तमा इमे ॥७७॥ आद्यं सम्यत्त्वमप्येपां, विशिष्टं यत् फलं परं । जिनत्वं तस्य केपांचिदेवैतत्स्यात् तथाविधम् ॥७८॥ वरबोधिं लभन्ते ते, यदा तर्हिं विकल्पनम् । भवतीति यदैतेऽत्र जीवास्तिष्ठन्ति किं भवे? ॥७९॥ यतो निस्तारकं जैनं, शासनं रविसन्निभं। अन्धकारे कथं रक्ता, भवे दुःखाकरेऽसवः ॥८०॥ सर्वान्नेतांस्ततो जैन-वचनांशुभिरुध्धृतान् । कृत्वा मोक्षं नयाम्याशु, नान्यथा मम निर्वृतिः ॥८१॥ यैवं चिन्तयतोऽस्य

स्यादर्हदादिपदाश्रिता, । आराधना परार्था सा, नावि-
कस्य यथाम्बुधौ ॥८२॥ विंशते स्थानकाना याऽऽराधना
धार्मिके जने । नवपद्याश्च भेदोऽय, स्वान्याभिमायगो द्वयो
॥८३॥ विचारोऽयं जिनैर्दृष्टो, यावज्जिनभवे भवेत् ।
अपूर्वकरणारोही, तावद् ध्रौव्येण तिष्ठति ॥८४॥ अस्माच्च
जायते पुण्य, तीर्थकृन्नामसङ्गतं । जगत्पूज्यत्वदानार्हं, त्रिज-
गत्यपि सौख्यदम् ॥८५॥ च्यवनादीनि सर्वेषां, जन्तूना
पञ्च शर्मणे । अद्भुत जिननामेदं, किं न कुर्याज्जगत्त्रये ?
॥८६॥ जिननाम्नः पुरा बन्धाद्, यद्यायुर्नरोऽर्जित ।
यात्यसौ न तु तत्रास्य, दु ख तद्विधमाश्रयेत् ॥८७॥ न
च लोकं गतो दैव, प्राक् षण्मास्याश्च्युतेर्व्यथी । उभयत्रापि
वैशिष्ट्य, जिननाम्नो भवेत् परम् ॥८८॥ अम्बा स्वप्नाभि
वीक्षेत, चतुर्भिरधिकान्दशगजादीन् । पश्यति तीर्थ-कर
नामप्रभावतः ॥८९॥ स्नपनेऽस्य समेऽपीन्द्रा, शक्रस्तुत्या तु
तुष्टुवु । नन्दीश्वरे मह चक्रुः, सभाराज्जिनराड्गतात् ॥९०॥
जाते गुणाले स्नात्र, विदध्युः, परमर्द्धिभि । सदेवा देवनेतार ,
पश्चात् पुर्यां नृपः सृजेत् ॥९१॥ दीक्षाया उत्सवं कर्तुं,
समेऽपीन्द्राः समीयरु. । देवदूष्य च वामेंऽसे, जिनस्य
त्रिभिर्मुदा ॥९२॥ जाते कैवल्यबोधेऽस्य, देशनार्थं
जिनेशितु । तीर्थस्य चक्रिरे देवा , सेन्द्रा समवसंसरम्
॥९३॥ जातो यत्र न पूर्वं स्याज्जिनसमवसंसरः । तत्राश्चर्यं
सुरा चक्रुः, समवसृति मण्डनम् ॥९४॥ अत्रागच्छेच्च
श्रेयश्राद्धो, योजनेभ्यो बले सति । द्वादशभ्यो भवेत्तस्य,
प्रायश्चित्तस्य सङ्गति ॥९५॥ निर्वाणे श्रीजिनेशाना
जाते हर्षगुणाकुला. । कुर्युर्महोत्सव शक्रा, गत्वा नन्दीश्वरं
तथा ॥९६। निर्वाणमहसोत्सोते, जाते पश्चात् त्रिलोक्यपि ।
जिनोच्छेदाद् भवेन्मग्नान्धकारे दुस्तरे रणम् ॥९७॥ जिने-
शाना जनिर्दीक्षा, मताना पालन सह । विहृत्या सहने सर्वे,

परोपकृतिकर्मठम् ॥९८॥ पूजा जिनेश्वरततेर्भुवने वृषस्य, प्रौढिं परां निगदितुं सहते समन्तात् । तद्देवधर्मबहुमानपरैः सदेयं, कार्या यतोऽव्ययपदं लघु लभ्यतेऽस्याः ॥९९॥ (वसन्ततिलका)

जिनानां दर्शितुं प्रौढिं, व्यधामर्हच्छतीं मुदा ।

लभन्तां प्राणिनोऽमुष्या सततानन्ददं पदम् ॥१००॥

इति आगमोद्धारक–आचार्यप्रवर श्रीआनन्दसागरसूरिवरविरचितं श्रीअर्हच्छतकम् ।

---

## उद्यमपंचदशिका ( ९ )

यस्य द्रव्यस्य जीवादे–र्यदा यत्र यथा यथा । भावि कार्यं तथा सर्वं, जानात्यर्हन् प्रतिक्षणम् ॥१॥ ज्ञातो भावितया वस्तु–भाव आद्यक्षणेऽर्हता । तत्र तत्र क्षणे जाय–मानमर्थं तथेक्षते ॥२॥ कार्यप्राप्यविकार्याणि, हेतवो विविधास्तथा । वैचित्र्यं सम्प्रदानानां, सम्बन्धाश्च वचोऽतिगाः ॥३॥ स्थानान्याधारभूतानि, कर्तारो विविधाः पुनः । सर्वमेप जिनो वेत्ति, ज्ञानात् तत्प्रथमक्षणे ॥४॥ यद्यथा ज्ञातमर्हद्भिर्नूनं तद् जायते तथा । महाशिलाकण्टकेऽतो, जगाद ज्ञातनन्दनः ॥५॥ ज्ञातं श्रुतं च विज्ञात–मर्हतैतद् विनिश्चितम् । वज्री विदेहपुत्रोऽत्र, जेता नान्ये गणाधिपाः ॥६॥ कालिके च निपेधो यः, स त्वाशीर्वादमूलकः । निमित्तं च गृहस्थान् स्यादत्र तूक्तं गणाधिपम् ॥७॥ एपा वज्रार्गला भावि–चिन्तारोधे मनस्विनाम् । शतशो पि कृते यत्ने, नार्हद्दृष्टेर्विपर्ययः ॥८॥ लोके यथा नृणां बुद्धिर्मता भावप्रकाशिनी । पुंसां स्युरुद्यमा भावि–भावमाश्रित्य न परे ॥९॥ एवं विचिन्त्य स्वस्थः सन्, रमेतात्मनि बुद्धिमान् ।

। सुखे दुःखे भये शोके, जीविते मरणे पि च ॥१०॥ नन्वेवं किं जगत्यस्मिंस्तीर्थस्य स्थापनं जिन । करोति किं निवृत्त्यै किं, यतन्ते भविका अपि ॥११॥ सत्यमुक्त पर तीर्थ-करैर्दृष्ट शिवास्पदम्। प्राप्य ज्ञानादिभिर्भव्यैर्न वृथा तीर्थस्थापनम् ॥१२॥ नाकारणं भवेत्कार्यं, दृष्टं विश्वे पि तीर्थपे । तन्मोक्षकारणान्याप्य, यत्नो (मुक्त्यै) भव्यै प्रवर्त्यते ॥१३॥ अतोऽत्र शासने जैने, न वादः केवलो मत । भाविरूपः, परं पञ्च-हेतुकः सर्वसिद्धये ॥१४॥ तद् भाविना सहानेन, यत्नः सम्यग्ज्ञानादिषु । भव्यानां योग्य एवाय-मानन्दलय आत्मनः ॥१५॥ इति आगमोद्धारकाचार्य-श्रीआनन्दसागरसूरिसंदृब्धा उद्यमपञ्चदशिका ॥

## क्रियाद्वात्रिंशिका (१०)

नखद्युदीप्रदीपौघ प्रुष्टप्र-गूढसंहतिः। संहर्ति कर्मणां सिद्ध्यै, कुर्वन् स्तान् श्रेयसे जिनः ॥१॥ योग्यियेन तथाल्कयो, भव्यत्वपरिपाकतः। त्रिशत्या स्थानकैर्यस्मा-ज्ञानमार्हन्त्यमग्रिमम् ॥२॥ भव्यत्वमेकधा सर्वेऽपि प्राणिषु प्रोच्यते। परं विचित्रफलद, सामग्र्याश्रितता यतः ॥३॥ चतुर्णां शरणं गच्छेज् जिनादीनां शुभोदतः। निन्दन् स्वीयं दुराचारं, सुकृतं चानुमोदयन् ॥४॥ एवं भव्यत्वपाकस्स्यात्, ततः पापपरान्रिया। ततो धर्मस्ततो दुःख-फलमसारसंक्षयः ॥५॥ वीतरागा अरोगजा, इन्द्राद्याम्तत्त्वदर्शिनः। त्रैलोक्यगुरवः सर्वे, इति पर्षदग्र उचिरे ॥६॥ यथावादी तथाकारी, जिनो, नर हरादिवत्। जिन्दूपगांस्तस्मादेषोपादीयते बुधैः ॥७॥ चरणान्मोक्ष एतच्च, ज्ञानात् तद्दर्शनात् ततः। ग्रन्थिभेदात्स चापूर्वकानाभोगात्परं ततः ॥८॥ स च भव्यत्वपाकेन, मतिमंस्तत् निवेदय। चित्ते भव्यत्वपाकस्य, महिमानं गतोपमम् ॥९॥ नन्वेवं नोद्यमः कार्यो, धर्मांय

मतिधारिभिः। भव्यत्वपरिपाकेन, सर्वं भव्यं भविष्यति
॥१०॥ कृतिसाध्ये कृतो यत्नः, फलवान्न स्वभावजे।
अभव्यत्वविनाशाय, न जिनेन्द्रो पि यत्नवान् ॥११॥
अनन्तशो नरो जातो, दृष्टो पि जगदीश्वरः। पूजितो
विविधर्द्धयाऽसौ, स्थापितो हृदयाम्बुजे ॥१२॥ साधर्मिकैः
समायोगस्तद्भक्तिर्मानपूजने। तेषां कृते कृतं चैत्यं, पौप-
धाय च मन्दिरम् ॥१३॥ सपर्या गुरुवर्याणां, सामायिक-
स्य सत्क्रिया। पोषधप्रतिक्रान्त्योश्च, कृता तीर्थादिसेवना
॥१४॥ सङ्घस्याधिपतिर्जातस्तीर्थोद्धारकरो पि च। सप्त-
क्षेत्र्यां क्षिपन् द्रव्यं, दयापात्रे च सन्ततम् ॥१५॥
चारित्रं चीर्णवान् वैयावृत्त्यं च विनयं तपः। दशपूर्वी
पपाठोनां, प्रव्रज्याऽदायि शोभना ॥१३॥ असेत्सीत्
किञ्चिदपि न, विना भव्यत्वपाकतः। विहितं नैकशो
यस्मान्निर्वृत्तिर्नैयताऽभवत् ॥१७॥ सत्यं किन्तु न भव्य-

त्व-पाको पि यत्नमन्तरा। ज्ञानाद्यधिगमं मुक्त्वा, भव्यो
न भवतोऽमुचत् ॥१८॥ वृष्टिर्मोघाऽकणे क्षेत्रे, नेकशस्तद् बुधः
किमु। सबीजे मन्यते क्षेत्रे, मोघां वृष्टिं कदाचन ॥१९॥
उपदेशः श्रुतः शुभ्रो, जिनेशवदनोदितः। विना भव्य-
त्वपाकं न, फलवानभवद् भवे ॥२०॥ तथापि कश्चिदे-
वांगी, विनोपदेशमार्हतम्। सम्यक्त्वं लभतेऽसद्व्य-
गुणः पुनः श्रुतादरात् ॥२१॥ ततो भव्यत्वपाकाय,
चतुःशरणमुख्यकम्। अनुष्ठानं सदा कार्यं, भव्येन
मुक्तिमिच्छुना ॥२२॥ मोक्षैकतानमानसा, न जीवेन
कदाचन। लिङ्गित्वेऽनन्तशो लब्धे, कृता धर्मकृतिर्म-
नाक् ॥२३॥ व्यवहारमितेऽनन्त-कालादङ्गिनि सम्भवम्।
स्वीकृत्यैतत् समं प्रोक्तं, तत्राप्यस्ति विचारणा ॥२४॥
माता पिता सुतः पुत्री, भार्या सर्वेऽपि जन्तवः। यावत्क्र-
त्वो ह्यजायन्ता-नन्तांशे तन्न सत्क्रिया ॥२५॥ यन्न द्रव्यतया-

चीर्णं, धर्मानुष्ठानमङ्गिभिः । तद्भावधर्मसिद्ध्यर्थं, ज्ञेय ज्ञानसमन्वितैः ॥२६॥ आरूढेऽन्तिमसोपान, मविशेत् सौधमूर्धनि । नतावताऽन्त्यसोपाना-रोहो व्यर्था मनीषिणाम् ॥२७॥ भवसङ्ख्यासमादेशे, विहिते सर्ववेदभिः । यथाऽधर्मी भव भ्रान्तो, दीर्घ, मुक्तो कृपाल्लघु ॥२९॥ तथाम व्यत्यापाकस्यालम्बनेन वृषोज्झिता । भवेऽन्ति श्रुतादेशो धता मुच्यन्त आरत. ॥२९॥ कृतो न निष्फलो धर्मः, कदापीति जिनेशवाक् । यतते मतिमास्तस्माद्, धर्माय गतमत्सरः ॥३०॥ संशयानो यथा मापान, दक्षा भुञ्जन् विकारवान् । जातस्तथा सृजन् धर्मं, कुमत्युद्ग्राहितः पुनः ॥३१॥ नियति नियतं रम्या, भव्यत्वं पारसन्मुखम् । जानीहि त्वं यतो जैने, रतो धर्मे कृतादरः ॥३२॥ यथोक्ता-कार स्यात् परिणतिमित शास्त्रवचनं, जिनेन्द्रोक्तं सिद्ध्यै हृदयतनुवाक्सत्कृतिपरम् । विपर्यस्तं शस्त्रं भवगहनदं कोविद-जना, इत चित्ते धृत्वा विदधतु सदानन्दसुकृतम् ॥३३॥

इति आगमोद्धारकाचार्यप्रवर-श्रीआनन्दसागरसूरिमद्दृब्ध क्रियाद्वात्रिंशिका ॥

---

## अनुक्रमपंचदशिका ( ११ )

अनव्ययकृतोक्तोऽत्र, भावो द्रव्यनिभः खलु । उत्पत्तिव्ययपुक्तानि, द्रव्याणि प्रतीतिमयुः ॥१॥ उत्पन्नविगमोक्तानि, तन्निषधाद्द्वयेऽग्रिमे । यत्स्वभावयुग्मोत्थाउत्पत्तिविगमोभयौ ॥२॥ नैरुः कर्ता न हर्ता वा-नादिभावोऽयमर्थगः । तद्भावाव्ययता द्रव्ये, तत्सरं ध्रुवतान्वितम् ॥३॥ परदर्शनभिकारकारीयं जिनपैः सदा । निषधानां त्रयी सर्व-गणिभ्य उच्यते पुरा ॥४॥ स्वान्यसिद्धान्ततत्त्वानां, जाते बोधे यतोऽन्तिगे । समेऽपि गणिनः सूत्र-रचनायां

दधुर्मतिम् ॥५॥ गणभृन्नाम यत्कर्म, प्राग्जन्मनि समर्जितम् । तस्योदयात् समेऽप्येते, सूत्रग्रन्थे समोद्यमाः ॥६॥ मुग्धा धर्माय सङ्ग्राह्या, इत्युक्त्या गणिनः समे । चक्रुरेकादशाङ्ग्यास्तां, रचनां मुग्धसौख्यदाम् ॥७॥ चतुर्दश तु पूर्वाणि, पृथगर्हद्वचःश्रितैः । क्रियन्ते तेन तद्बद्धा, निपद्यास्तु द्विसप्तकाः ॥८॥ रचनाक्रम एषोऽत्र, बोधनं पुनरर्हता । पूर्वाणां प्रथमं सर्वशासनं धार्यते तकैः ॥९॥ देशनारचनास्थापनासु यद्यन्मतान्तरम् । दृश्यते तत्तु कालस्य, वैचित्र्यान्न तु तत्त्वगम् ॥१०॥ अभ्यस्यमानविद्यानां, नराणां रचनाक्रमः । सुगमानां पुरो दृब्धो, दुर्गमानां पुनः पुरः ॥११॥ इति स्यादङ्गरचना-ऽऽदौ पुनर्दृष्टिवादिकी । पश्चात् परं न वर्त्मैतदत्र लोकोत्तरे नरे ॥१२॥ दृब्ध्वा पूर्वाणि निश्शेषं, दृब्धं वाग्गोचरं श्रुतम् । शैक्षाद्यर्थं ततोऽङ्गानां, रचना गणधारिणाम् ॥१३॥ अनुयोगादिकः सर्वः, क्रम आम्नायते बुधैः । आचारादिक्रमेणात्र, बुद्धिर्यत् क्रमवर्धिनी ॥१४॥ अयं नो शेमुषीलेशो, न कणोऽत्राग्रहस्य च । बुधानन्दप्रदः पक्षः, श्रेयसे सर्वदेहिनाम् ॥१५॥ इति आगमोद्धारकआचार्यप्रवर-श्रीआनन्दसागरसूरिपुङ्गवसंदृब्धा अनुक्रमपञ्चदशिका

## क्षमाविंशतिका (१२)

क्रोधस्य निर्निमित्तस्य, यो विधाता न गण्यते । विदुषां समवाये, यन्न स प्रेक्षापरः पुमान् ॥१॥ अजीवेऽपि च मृत्स्नादौ, कुप्यत्यास्फाल्य यः स्वयम् । अवीक्ष्यात्मा मतिं तं को, गणयेत् सुज्ञपङ्क्तिगम् ॥२॥ आक्रोशादिक्रियायुक्त-जीवेभ्यः कुप्यति प्रभुः । तदा स्वचेतसा बुद्धिमाविष्कृत्याद उद्धरेत् ॥३॥ येनाक्रोशत्ययं मां स, दोषो मय्यस्ति वा न वा । चेदस्ति तर्हि किं

क्रोधस्त मूलादुद्धरिष्यति ? ॥४॥ आम चेत् कलिकालस्य, माहात्म्य किं वचोतिगम्। त्वयाऽऽप्तं क्रोधमादत्येहसे ख्यातिमदोषगाम् ॥५॥ त्वग्यशतोऽपि नास्त्येनाक्रोशेद् येन परा नर। दापश्चेत् किं मृषावादं, रोद्धुमज्ञस्य त्व क्षम ? ॥६॥ विरमेत् तु मृषावादात्, कथञ्चिदाप्य सद्धियम्। त्वं विधाय क्रो तस्मै, किं वारयितुमीश्वर. ? ॥७॥ किं चाज्ञाना स्वभावाऽयं, क्रुध्यति ज्ञेभ्य सर्वदा। विचारयन्ति ते नाल्प-मपि हेतुं क्रुधि व्रजन् ॥८॥ न च जगति केनापि, कस्यापि परिवर्तितुम्। स्वभाव शक्यते त्वं किं, शक्तोऽज्ञस्यापि तत्कृतौ ? ॥९॥ यथाऽग्निना गृहे दीप्ते, पुण्यं यद् यत्र दह्यते। कृत्वाऽऽक्रोश जडस्तुष्टो, व्यथमाप्यकृतिं पराम् ।१०॥ हतोऽप्यज्ञेन मनसा, चिन्तये मुनिसत्तम। ईश को रोद्धुमज्ञं स्यान्निर्हेतु मारणोद्यतम् ॥११॥ जीवितव्यपरोपेपि, मारब्धेऽज्ञेन चिन्तयेत्। मतिमान् सर्वथाऽभीष्ट, न मे धर्मं विबाधते ॥१२॥ अज्ञस्तु धर्मनाशाये, प्रवृत्तो न हि शोचति। सारासारविवेको हि, स्वप्नेप्यज्ञस्य नास्ति यत् ॥१३॥ ज्ञानक्रियामयो धर्म, कदापि बाध्यतेऽसता। आत्मारामतयाऽऽश्लिष्ट, धर्म कोपि न बाधते ॥१४॥ एवं चिन्तयतः साधोर्धर्म आद्यः क्षमामयः। तिष्ठत्यव्ययथामाप्त्यै, य सर्वज्ञैरुदीरित ॥१५॥ क्रोधाविष्टो नर प्राक् स्वं, सर्वतो देहमुज्ज्वलेत्। शिरो भ्राम्यति नेत्रे स्वे, ज्वलतोऽदृश्यवह्निना ॥ १६ ॥ नासाऽमानं विकसति, ओष्ठयोः भूरिकम्पनम्। गले शोष स्वरो त्रोटि, पादयो स्थिरता न हि ॥१७॥ दाहो दाह्यस्य स्याद् योगे, वह्निना नान्यथा क्वचित्। स्मृतिमात्रेण चित्तेऽग्नि, क्रोधाख्मातस्य दृश्यते ॥१८॥ मह्यमाक्रोशयन्नेष, सन्तोषं मनसैति यत्। मम तत्तादृशं कर्मो—दित साम्प्रतमस्ति नः ॥१९॥

अस्ति चेत् कर्मबन्धस्यास्येदं जातं तकत् पुनः। त्वं तदस्यास्ति बन्धाङ्गं, नात्मनेदं किमूहसे ? ॥२०॥ युग्मम् ॥ इति-आगमोद्धारकआनन्दसागरसूरिपुङ्गवविरचिता क्षमाविंशतिका।

---

## अहिंसाविचारः (१३)

ऐंनमः। ननु के हिंसकाः के वाऽहिंसका ? इति।

हिंसकास्तावत्प्रमत्तयोगमाश्रितास्त्रसस्थावरप्राणानां नाशयितारः। यतः 'सव्वो पमत्तजोगो हिंसे'ति वचनमार्षं। ततः प्रमत्तयोगे एव हिंसकत्वं, यद्यपि न कश्चनापि प्राण आपद्येत विनाशं तथापि 'अजयं चरमाणो उ पाणभूयाइं हिंसइ'त्ति पारमर्षात् प्रमत्तयोगी हिंसक एव। एवं च सर्वेऽप्यप्रमत्ता अहिंसका एव। अतश्च व्याप्त्या पारमर्षे अप्रमत्तानां आत्मपरोभयारम्भकत्वं निषिद्धं। अत्र केचित्-

'जा जयमाणस्स भवे, विराहणा सुत्तविहिसमग्गस्स।
सा होइ निज्जरफला, अज्झत्थविसोहिजुत्तस्से' ॥१॥

त्योघनिर्युक्तिगाथायास्तत्त्वं प्रकरणं चाबुद्ध्वा विराधनाया नियतफलवत्तामपलपन्ति, प्रत्युत च निर्जरां विराधनायाः फलतया वर्णयन्ति। तत्र सम्यक्, प्रथमं तावन्नैषा गाथा प्रकरणमाश्रिता, तत्रोपकरणप्रकरणस्य प्रस्तुतत्वात्, तत्र सत्युपकरणपरिग्रहेऽध्यात्मविशुद्धियुक्तत्वादपरिग्रहित्वं साधयितुमिष्टं, तत्र दृष्टान्तोऽयं यदुताध्यात्मशुद्धियुक्तानां हिंसा न साम्परायिकफलवती, तत्राऽपि सिद्धान्तितमनात्मशुद्धानामेव सेति। यतस्तस्या वृत्तौ द्रोणाचार्याः—'तस्य या भवति विराधना सा निर्जराफला भवति, एतदुक्तं भवति-एकस्मिन् समये बद्धं कर्मान्यस्मिन् समये क्षपयतीति, तथा नाप्रमत्तस्य साधोर्हिंसाफलं—साम्परायिकं संसारजननदुःखजननमित्यर्थः, यदि परमीर्याप्रत्ययं कर्म भवति,

क्रोधस्त मूलादुद्धरिष्यति ? ॥४॥ आम चेत् कलिकालस्य, माहात्म्यं किं वदोतिगम् । त्वयाऽऽप्तं क्रोधमादत्येहरसे ख्यातिमदोपगाम ॥५॥ त्वय्यशतोऽपि नास्त्येवाक्रोशेद् येन परो नर । दापयेत् किं मृषावादं, रोद्धुमज्ञस्य त्व क्षम ? ॥६॥ विरमेत् तु मृषावादात्, कथञ्चिदाप्य सद्धियम् । तं विधाय क्रुधं तस्मै, किं वारयितुमीश्वर ? ॥७॥ किं चाज्ञाना स्वभावोऽयं, क्रुध्यति ह्येभ्य सर्वदा । विवारयन्ति ते नाल्प-मपि हेतु क्रुधि व्रजन् ॥८॥ न च जगति केनापि, कस्यापि परिवर्तितुम् । स्वभाव शक्यते तं किं, शक्तोऽज्ञस्यापि तत्कृतौ ? ॥९॥ यथाऽग्निना गृहे दीप्ते, पुण्यं यद् यन्न दह्यते । तत्त्वाऽऽक्रोश उडम्तुष्टो, व्यथाव्यापकृतिं पराम् ॥१०॥ इत्थोऽप्यज्ञेन मनसा, चिन्तयेन्मुनिसत्तम । ईश यो रोद्धुमज्ञ स्याच्चिर्हेतु मारणोद्यतम् ॥११॥ जीवितव्यपरोपेपि, प्रारब्धेऽज्ञेन चिन्तयेत् । मतिमान् सर्वथाऽभीष्ट, न मे धर्म विबाधते ॥१२॥ अज्ञस्तु धर्मबाधाये, प्रवृत्तो न हि शोचति । सारासारविवेको हि, स्वप्नेप्यज्ञस्य नास्ति यत् ॥१३॥ ज्ञानक्रियामयो धर्म, कदापि बाध्यतेऽसता । आत्मारामतयाऽऽश्रित्य, धर्म कोपि न बाधते ॥१४॥ एवं चिन्तयत: साधोर्धर्म आत्त: क्षमामय: । तिष्ठत्यव्ययधामाप्त्यै, य सर्वज्ञैरुदीरित ॥१५॥ क्रोधाविष्टो नर माक्र स्वं, सर्वतो देहमुज्ज्वलेत् । शिरो भ्राम्यति नेत्रे स्वे, ज्वलतोऽहृद्यवह्निना ॥ १६ ॥ नासाऽमानं विकसति, ओष्ठयो: भूरिकम्पनम् । गले शोष फटो त्रोटि, पादयो स्थिरता न हि ॥१७॥ दाहो दाह्यस्य स्याद् योगे, वह्निना नान्यथा क्वचित् । स्मृतिमात्रेण चित्तेऽग्नि, क्रोधाध्मातस्य दृश्यते ॥१८॥ मत्यमाक्रोशयत्येव, मन्तोपं मनसीति यत् । मम तत्तादृग् कर्मो--दित साम्प्रतमस्ति न: ॥१९॥

अस्ति चेत् कर्मबन्धस्यास्येदं जातं तकत् पुनः। त्वं तद्-स्यास्ति बन्धाङ्गं, नात्मनेदं किमूहसे ? ॥२०॥ युग्मम्॥ इति-आगमोद्धारकआनन्दसागरसूरिपुङ्गवविरचिता क्षमाविंशतिका।

## अहिंसाविचारः (१३)

ऐंनमः। ननु के हिंसकाः के वाऽहिंसका ? इति।

हिंसकास्तावत्प्रमत्तयोगमाश्रितास्त्रसस्थावरप्राणानां नाशयितारः। यतः 'सव्वो पमत्तजोगो हिंसे'ति वचनमार्षं। ततः प्रमत्तयोगे एव हिंसकत्वं, यद्यपि न कश्चनापि प्राण आपद्येत विनाशं तथापि 'अजयं चरमाणो उ पाणभूयाइं हिंसइ'त्ति पारमर्षात् प्रमत्तयोगी हिंसक एव। एवं च सर्वेप्यप्रमत्ता अहिंसका एव। अतश्च व्याप्त्या पारमर्षे अप्रमत्तानां आत्मपरोभयारम्भकत्वं निषिद्धं। अत्र केचित्-

'जा जयमाणस्स भवे, विराहणा सुत्तविहिसमग्गस्स।
सा होइ निज्जरफला, अज्झत्थविसोहिजुत्तस्से' ॥१॥

त्योघनि र्युक्तिगाथायास्तत्त्वं प्रकरणं चाबुद्ध्वा विराधनाया नियतफलवत्तामपलपन्ति, प्रत्युत च निर्जरां विराधनायाः फलतया वर्णयन्ति। तन्न सम्यक्, प्रथमं तावन्नैषा गाथा प्रकरणमाश्रिता, तत्रापकरणप्रकरणस्य प्रस्तुतत्वात्, तत्र सत्युपकरणपरिग्रहेऽध्यात्मविशुद्धियुक्तत्वादपरिग्रहित्वं साधयितुमिष्टं, तत्र दृष्टान्तोऽयं यदुताध्यात्मशुद्धियुक्तानां हिंसा न साम्परायिकफलवती, तत्राऽपि सिद्धान्तितमनात्मशुद्धानामेव सेति। यतस्तस्या वृत्तौ द्रोणाचार्याः—'तस्य या भवति विराधना सा निर्जराफला भवति, एतदुक्तं भवति-एकस्मिन् समये बद्धं कर्मान्यस्मिन् समये क्षपयतीति, तथा नाप्रमत्तस्य साधोर्हिंसाफलं—साम्परायिकं संसारजननदुःखजननमित्यर्थः, यदि परमीर्याप्रत्ययं कर्म भवति,

बध्नात्येकस्मिन समये पदमन्यस्मिन् समये क्षपयति"। अत्र च नहि सर्वेषामात्मशुद्धिमतामीर्यापथकर्मबन्धः, वीतरागाणामेव तद्भावात्, परं परेषामप्रमत्तानां साम्परायिकबन्धस्याऽसंभवे स यद्यपि हिंसाभयिको न, तथापि तत्रवेदः, संयतरागस्य स्थितिरल्पाऽल्पकर्मणा। स्पष्टं चेदमाचाराङ्गचूर्णौ १४ पृष्ठे। ईर्यापथपर्यन्तानुधावनं सयोगिकेवलिनि विराधनाफलस्य दर्शनार्थं, अयोगत्वाच्च परतो बन्ध इत्ययोगिनि माऽफल्गा। एवं यावत् सयोगिता तावत् सफलैव विराधनेति, न चाप्रमत्तानां साम्परायिकफलेति च दर्शनार्थमेव नेदं निर्जराफलेति परं न तु निर्जराफलार्थं, आत्मशुद्धिधनकर्मनिर्जराकारिणीयत्र तु न विवादः ( ओघ० ७४८-७६२ पत्रे-२१९-२२१। सत्यपि विराधनायाः सफलत्वनियमे नैव विराधना हिंसाशब्दवाच्या या प्रमत्तानां। अत एव श्रीदशवैकालिकचूर्णौ 'मणवयणकाएहिं जोएहिं दुप्पउत्तेहिं पाणववरोवणं कज्जइ सा हिंसे'ति, तत्त्वार्थे च 'प्रमत्तयोगात् प्राणव्यपरोपणं हिंसे'ति परिभाषितं। अन्यत्र श्रीदशवैकालिकवृत्तौ श्रीओघनिर्युक्तिपाठ एवं-"जम्हा सो अपमत्तो सा य पमाउत्ति निद्दिट्ठा" चूर्णौ च 'रागदोसविरहिओ अपमत्तो तत्त घाएइ पाणाइवाओ न भवइ" (१४७ पृष्ठे)। एवं च श्रीभगवत्यादिष्वप्रमत्ता नात्मपरोभयारम्भका इति यदुक्तं, तदुपपद्यते। न हि सर्वेऽप्रमत्ता जीवव्यापादनशून्या, अयोगिनं यावद् व्यापत्तेरुक्तत्वात्। सिद्धं चातो विराधनाहिंसयोर्न नियतैकार्थतेति। अत एव पूर्वोक्त आचाराङ्गपाठो न बाधको, यतस्तत्र सामान्येन विराधनाजन्यो बन्धो विचारित, न तत्र हिंसाहिंसयोर्विचार। एवं च (न) श्रमणानां हिंसायास्त्रिविधत्रिविधकरणयोगैर्हिंसावर्जनप्रतिज्ञाया नद्युत्तारादौ भङ्गः। न चात एव नद्यादेश्चपरार्धद्यादीनां स्यावणो-

पदेशकत्वं। यत एवमप्रमत्तानां हिंसाया अभावस्ततः सम्भवोऽहिंसकत्वस्य। प्रतिपादितं श्रीओघनिर्युक्तावेतत्स्पष्टतया। तत्पाठश्चैवं—'अज्झत्थविसोहीए जीवणिकाएहिं संथडे लोए। देसियमहिंसगत्तं जिणेहि तेल्लोक्कदंसीहिं' ॥७४८॥ एवमेव च तत्र प्राणिवधावधयोः सतोरपि अप्रमत्तानामहिंसकत्वमितरेषामितरच्च स्पष्टीकृतं। तत्पाठश्चायं—'जयइ असढं अहिंसत्थमुट्ठिओ अवहओ सो उ ॥७५१॥ तस्स असंचेअओ संचेयओ य जाइं सत्ताइं। जोगं पप्प विणस्संति नत्थि हिंसाफलं तस्स ॥७५२॥ जो य पमत्तो पुरिसो तस्स य जोगं पडुच्च जे सत्ता। वावज्जंते नियमा तेसिं सो हिंसओ होइ' ॥७५३॥ सिद्धं चातो जीवविराधनायां सत्यामप्रमत्तस्याहिंसकत्वमितरस्य चेतरत्। तथा च हिंसकाहिंसकत्वयोर्व्यपदेशे न जीवविराधनाविराधने कारणे, किन्तु प्रमत्ताप्रमत्तत्वे।

एवं च सिद्धमेतदपि यदुक्तमोघनिर्युक्तावेव प्रमत्तमाश्रित्य—'जेवि न वावज्जंती नियमा तेसिं पि हिंसओ सो उ। सावज्जो उ पओगेण सव्वभावेण सो जम्हा' ॥७५४॥ तथा च प्रमत्तानामव्यापादितानप्याश्रित्य हिंसकत्वोदितिः पूर्वोक्तमेव पुष्णाति। एवमेव च श्रीदशवैकालिकसूत्रोक्तौ नियमावपि सङ्गतिमञ्चत। यतस्तत्र यतनावतां चरणादिषु—गमनादिषु पापकर्माभावो नियम्यते, अर्थाच्चाहिंसकत्वमपि, अयतानां च प्राणभूतहिंसकत्वनियमेन कटुविपाकपापकर्मबन्धकत्वं नियम्यते यत्—'जयं चरे जयं चिट्ठ जयमासे जयं सए। जयं भुंजतो भासंतो पावं कम्मं न बंधइ त्ति, अजयं चरमाणो उ पाणभूयाइं हिंसइ। बंधई पावयं कम्मं तं से होइ कडुयं फल'मिति च स्पष्टतयोक्तं। एतेन 'जयमेव परक्कमे'त्ति 'कप्पइ इमाओ पंच नईओ' त्यादि वचनप्रपञ्चेन विशिष्टस्यैव यतनागमनादिरूपस्योभयस्यैव

विधानं। न ह्येका मैषेषिक्येव सामाचार्युपदिष्टा, आव श्यकीनिमंत्रणाछन्दनोपसम्पदादीनामपि भगवद्भिरेवोपदिष्टत्वात्। अप्रमत्तानाश्रित्य तथाविशिष्ट उभयगोचर उपदेशश्चेत् सिद्धसाधकः, तस्यैव संसारजनककर्माबन्धकत्वभावात्। एतावता सिद्धमेतन्निर्विवादमप्रमत्ताना विराधना हिंसाशब्दवाच्या न, न च तत्फलजनिका, न च ते हिंसका इति। ननु भगवन्मार्गानुष्ठातारोऽप्रमत्ता प्रमत्ता देशविरताश्च। तत्राप्रमत्ताना विराधना न हिंसाशब्दवाच्येत्यायुक्तं, परं तेष्वनुष्ठातृषु अप्रमत्ता अल्पतमा एव। अप्रमत्तत्वकालश्च देशोनपूर्वकोटीपर्यायाणामपि अन्तर्मुहूर्तमान इति। जिनोपदेशस्यानुष्ठातारः स्वल्पा एवाहिंसका इति। सत्यं, पूर्वोक्तं सर्वमप्रमत्तानामहिंसकत्वादिसिद्ध्यै इति। पाक्षिकविधानस्य पाक्षिकविधानानान्तरीयकमिति, सत्य, परं पाक्षिकसंभवनियमः सिद्ध्येत् न तु व्याप्ति, तथापि विधिनिषेधयो सम्भाव्यमानत्वात्, परं तौ न व्याप्त्या किन्तु देशादिनेति। तथा च प्रमत्ताना सर्वेषां विराधना हिंसाशब्दवाच्येत्यादि न व्याप्त्या, तर्हि केषां तेषामिति चेदाकुट्टिकया विराधनाकारिणा, यतस्तेषामपि विराधनया संवत्सराष्टकमानो बन्ध आचारांगचूर्णि (१८५) प्रभृतिषूक्तः। भगवत्यां च शुभयोगा प्रमत्ता ह्यनारम्भकतयैव निर्दिष्टा, न चाकुट्टिरायै भगवान् जात्वप्युपदिशति। अत एव श्रीआचारांगे प्रमत्ताना कषायादिजयात् अप्रमत्तयतनेत्युक्त, तथा च भगवदुक्तानुष्ठातारः अप्रमत्ता प्रमत्ता वा द्वयेऽपि न हिंसका, न च तद्विहिता विराधना हिंसेति। अत एव श्रीओघनिर्युक्तौ भंगेष्वष्टसु आद्य शुद्धभंगद्वय कर्मक्षयप्रयोजनेनोक्त। तथा चानाकुट्टिकोऽहिंसक एकगुणस्थानकानुरोधेन प्रमत्तेतरविभागस्तत्र तत्रेति। अत एव न शुभाशुभयोगविभागोऽपीति। किञ्च–अप्रमत्तत्वं सर्वपुरोगुणस्था-

नव्यापकं, निर्ग्रन्थस्नातकानामपि तथात्वात्। शुभयोगवतां तेषां स्तिमितोदधिकल्पानां स्थानं च संयमस्यैकमेव तेषां यत इति। ननु शुभयोगेन विराधनाया अफलत्वे किं देशविरताविरतानां नैव शुभयोगः? अस्ति चेत्तेपि भवन्तु विराधनावन्तो पि अहिंसकाः, एवमेव चेत्, सूत्रे तथानुक्तत्वात् स्वमनीषिकैवेषा, न चेयं सर्वज्ञशासनवतां शोभावहेति चेत्। सत्यं, भगवदुक्तमनुसृत्य गणधरैर्ग्रथितानि सूत्राणि परं निर्ग्रन्थानुदिश्य, देशविरताविरतानां त्वनुवादरूपतया व्रतातिचारादिरूपो ग्रथितः। अतस्तेषां नाहोरात्रपर्वजन्मादिकृत्यविवृतिः सूत्रेषु, परमनुवादवाक्येभ्योऽपि तेषामर्हत्साधुसाधर्मिकभक्तिप्रभृतिक्रियाणां मोक्षसाधकताऽनुबन्धि शुभफलदातृत्वं सिध्यत्येव। ननु तत्कृतासु भक्तिषु पृथ्व्यादिकायोपमर्दसम्भवात्तथात्वं कथमिति चेत्। तीर्थकृद्भक्त्यादिना हेतुना तद्विधानात् कषायादिहेतुत्वाभावात्स्वरूपसदोषताया-

मपि परमगुणानुबन्धित्वं, साधूनामपवादपदप्रवृत्तिस्तादृगेव। किञ्च-सावद्यस्याप्यनुबन्धशुभत्वं न स्वीक्रियेत तर्हि सम्यक्त्वं पूजादिनैव वेद्यस्यैकान्तशुभस्य च जिननाम्नो हेतुरिति नाराध्येत? ततस्सम्यक्त्वादिगुणप्रभावनापराणामनुबन्धशुभैव प्रवृत्तिः, स्वरूपसावद्यत्वात् न तत्क्रिया कल्पातीतदेवत्वापादिका, न चानन्तरमोक्षफला, अकृत्स्नप्रवृत्तत्वाद्देशविरतत्वाद्वा कूपखननदृष्टान्तमुरीकृत्य प्रवृत्ता इति तेषामज्ञातत्रसानां विराधनाभावेपि तद्धिंसाफलं साम्परायिकवृद्धिकृद्। अत एव यतनातो न च हिंसेति। अत्र केचन केवलिनां स्याद्विराधनेत्यस्य सिद्ध्यै प्रवृत्ता अपि अन्यथाकारं सूत्राण्याचष्टे तत्त्वपकर्णनीयमेव। ते हि स्थानाङ्गस्थे छद्मस्थेतरत्वज्ञानयोर्हेतुसूत्रे प्राणानतिपातयितेति विवरणे वदन्ति, यदुत-तृचायोगे षष्ठीभावनियमात् अत्र द्वितीयायाः सत्त्वात् शीलार्थो यस्तृन् ग्राह्यः। ततश्च सदा

न विराधनशीलः सर्वज्ञ इतिपर, तदविचाररमणीयं। यतो यथाऽत्र द्वितीया तृंश्च तथा मृषावादिता अदत्तमादाता शब्दादीनामास्वादयितेत्यादिष्वपि तृना द्वितीया गृहीत्वा किं मृषावादितास्तेनत्वादिकमपि स्वीक्रियेते ते ? भवता तत्र का गतिरिति ?, प्राकृतसूत्रानुकरणे वाक्यान्येतानि, तत्र च 'व्यत्ययोऽप्यासा'मित्यस्य सिद्धतमत्वान्नास्माकं वक्रेणाध्वना धावन, ननु सूत्रव्याख्यायामस्तु सरलः पन्थाः, पर केवलिना काऽवस्था मते भवतामिति ? चेत्, निरतिशयशुभा सा तेषां महात्मना। कथमिति चेच्छृणु, यथाहि 'वचनाद्यदनुष्ठान'मिति 'आणाइ चिय धम्मो' त्ति 'धम्मो आणाइ पडिबद्धो' त्यादीनि वाक्यानि न तद्वस्तुस्वरूपव्यापीनि किन्तु श्रोतानुगुण्येन, तथैव चत्वार्यपि छद्मस्थेनस्त्रेयाज्ञेयचिह्नविषयाणि सूत्राणि तत्परीक्षकबुद्धिमानेन दृष्टानि। ततश्च द्वे छत्रे अन्ययोगस्य द्वे चायोगस्य व्यवच्छेदाय प्रवृत्तानि। अत एवात्रा न्यानि केवलिमात्रज्ञेयानि छाद्मस्थ्यलक्षणानि नोक्तानि। तत एव प्राणभूतसत्त्वजीवानगृहीत्वा परीक्षकप्रसिद्धाः प्राणशब्दवाच्यास्त्रसा एवोपात्ता। ज्ञातमङ्कुरुथाद्धवृत्तानां धर्मास्तिकायादीनां परीक्षाविषयता नात्रसिद्धा। यथाप्यादशदोपरहितत्वमन्यसर्वज्ञेषु सिद्धेषु घातिव्याप्तमप्यर्हत्त्वनिर्धारणाय कथ्यते, तचान्ययोगपरतयैवार्हति तथाऽत्रापीति न मोहलेशोऽप्यमोहशासनशालिनामिति। एतावता नैवमप्येव गार्य यदुत–गीतार्थस्य यतनावतो जीवविराधनाभावेऽपि हिंसाहिंसकत्वयोरभावान्न ज्ञानिनो दोष इति। परमत्रार्थमेतत् यदुत–न दुष्टे गीतार्थस्य यतनावतः प्रवृत्तिः। अत एव भगवता महावीरेण रेवतीश्राविकाकृतमाधाकर्मिकं भक्तं परित्यक्तं, केवलज्ञानवत्या पुष्पचूलिकाऽर्यया वर्षत्यपि धाराधरे प्रासुकावकाशेनाहृतमर्णिकापुत्रिकस्याचार्याय भक्तं। श्रुत्वा चैतत् नव श्रद्धातु द्व शकं–यत्केवलिनां नय-

त्तारादिषु तथाविधावकाशं विदित्वा तेन संचरेयुरपि। विराधनाव्यवहारत्याजनमपीष्टमेव केवलिनः। यतः प्रासुकतिलजलस्थंडिलानामपि व्यवहाररक्षणाय न दत्तानुज्ञा भगवता। वज्रस्वामिना च विद्यापिण्डपरिहाराय सह साधुभिः स्वीकृतमनशनं, श्रीओघनिर्युक्तौ भङ्गषट्कं निवारितमशुद्धमित्युक्त्वेति। ततो गीतार्थैर्यतनावद्भिर्भाव्यं। एष एव च गीतार्थविहार इति। इति आगमोद्धारक—आचार्यप्रवरश्रीआनन्दसागरसूरिभिः संदृब्ध अहिंसाविचारः



## आचेलक्यम् (१४)

ननु छेदोपस्थापनीयचारित्रं पूर्वान्त्यजिनसाधूनां, दशविध आचेलक्यादिः कल्पोपि तेषामेव, परेषामपि साधूनां स्यादिति ?।

आद्यान्त्यजिनयतीनां 'सप्रतिक्रमणो धर्मः' इति तेषां नित्यमुभयसन्ध्यं पक्षादिषु प्रतिक्रमणान्यवश्यं कार्याणि, तृतीयौषधज्ञातमपि मुख्यतस्तान्येवाश्रित्य, ततो लग्नो न वाऽतिचारः, लग्नोपि कुत्र व्रतादिषु लग्न इति प्रतिक्रमणकरणाकरणयोर्नोपयोगी, भवतु प्रायश्चित्तग्रहणाग्रहणयोस्तदुपयोगः, नियते च प्रतिक्रमणे प्रतिक्रान्तव्यगवेषणाऽऽवश्यकी, प्रतिक्रन्तव्यश्चाचेलक्यादिकल्प इति छेदोपस्थापनीयकल्पस्थितिरूपतया इयं दशधाऽऽचेलक्यादिका स्थितिः, श्रीस्थानाङ्गे प्रोच्यते द्वाविंशतिजिनसाधूनां विदेहसाधूनां च सामायिकचारित्रमिति तेषामेष दशविधः कल्पो नियत इति।

ननु छेदोपस्थापनीयचारित्रं तत्कल्परूपश्च दशधाऽऽचेलक्यादिकः कल्पः, तर्हि पूर्वान्त्यजिनयतीनां सामायिकचारित्रस्य षाण्मास्यादिका स्थितिरिति तत्र न नियतं प्रतिक्रमणमिति।

आद्यन्तजिनाभ्यां सप्रतिक्रमणस्यैव धर्मस्योपदेशात्तच्छा-

सनानुसारिणां सर्वेषामवश्यकर्त्तव्यतामापन्नं प्रतिक्रमणं ज्ञेयं, अत एव चानुयोगद्वारेषु–'समणेणं सावएण'मित्यावश्यकशब्दस्यान्वर्थता प्रकारेण सर्वान् साधून् श्रावकांश्चाश्रित्य सर्वान् सामान्येनोक्तं, तथाच आद्यान्त्यजिनयतिभि सामायिकचारित्रव्रतिभिरवश्यं प्रतिक्रमणं कार्यं, कार्येश्च दशविधोऽपि कल्प इति।

ननु पूर्वान्त्यजिनशासने धर्मस्यैव समतिक्रमणवान् श्रमणोपासकानामपि च प्रतिक्रमणस्यावश्यकर्त्तव्यत्वं स्यात्, परं दशकल्पानाश्रित्य कापि व्यवस्था सम्भविनी न वेति ?।

तेषामपि पौषधसामायिककाले यथायोगं स्यादेव, प्रविभागेन श्रमणोपासकस्वीकारस्तत्रादित इति।

नन्वाचेलक्यादिकल्पानां क्रम सार्वत्रिकः, परं स सहेतुको यथाकथञ्चिद्वेति ?।

सहेतुक एवेति सम्भाव्यामः। यत प्रविव्रजिषुर्मुण्डनप्रव्रज्याभ्यां लिङ्गं गृह्णाति, तत्र श्वेतमानोपेतादियुतं, तदपि भागौद्देशिकमपि स्यात्, तद्ग्रहणादनु वर्ज्यं चौद्देशिकं, ततः भागाचेलक्यमनु चौद्देशिकं। औद्देशिकवदेव निर्दोषमपि न शय्यातरदत्तं न च नृपसम्बन्धि ग्राह्यं लिङ्गमपीति पूर्वान्त्यजिनतीर्थयोर्वर्ज्यं तत्। स्वीकृतायां च प्रव्रज्याया तत्प्रथमतया पूर्वदीक्षितान् पूर्वं सहदीक्षितानप्यनयं वन्देतेति कृतिकर्मकल्पः। प्रव्रजिताय षड्जीवनिकायाध्ययनयोगोद्वहनोत्तीर्णपरिहारादिपरीक्षाय पूर्वान्त्यतीर्थपतितीर्थे व्रतविभागेन चारित्रं दीयते, तदेव छेदोपस्थापनीयमिति, इतरतीर्थगाभूना त्वादित एव चतुर्यामोच्चारः, यामा आदितो, व्रतविभागोऽन्विति यामव्रतयोर्विशेष। यामा न क्रियाविशेषाधादितयोग्यताकाः, व्रतानीमानि तु तथा। चतुर्थपञ्चमयोरैक्ये यामत्वं, पार्थक्ये तु व्रतत्वमिति व्रतकल्पः। आरोपिते महाव्रतोच्चारणेन

छेदोपस्थापनीये रत्नाधिकत्वं, ततो गणना च दीक्षापर्यायस्येति ज्येष्ठकल्पः। व्रताङ्गीकारावसरे 'उवसंपज्जित्ताणं विहरामि' त्तिप्रतिज्ञानात् तन्निर्वाहायाप्रतिबद्धेन विहर्त्तव्यं, विहारे न मासादधिकं निरालम्बनं स्थातव्यं क्वापीति मासकल्पः। नियतमासकल्पविहारिणाऽपि वर्षावास एव कार्य इति पर्युषणारूपश्चातुर्मासिककल्पः। इत्येवं दशकल्पीक्रमसम्भवः।

ननु छेदोपस्थापनीयकल्पस्थिततया पूर्वान्त्यजिनसाधूनां दशधा कल्पस्य नियतत्वं, परं शेषजिनसाधूनां सामायिककल्पस्थितिमत्त्वात् कतिधा कल्पस्थितिरिति ?।

तेषामपि औद्देशिकशय्यातरपिण्डत्यागकृतिकर्मज्येष्ठत्वलक्षणाश्चत्वारः कल्पस्थितित्वेन, तानन्तरेण चारित्रस्यैवाभावापत्तेः, ऋजुप्राज्ञत्वात्तेषां न शेषाः षट् कल्पाः नियताः, यतन्ते तेऽवश्यं दोषपरिहारायेति षडनियताः कल्पा शेषा इति।

ननु पूर्वान्त्यजिनयतीनां छेदोपस्थापनीयभावाद्दशापि कल्पा नियता यदि तर्हि पूर्वान्त्यजिनयोः शेषजिनानां च कल्पभेदोऽस्ति न वेति ?।

यद्यपि चतुर्विंशतिरपि सामायिकचारित्रवन्त एव, परं तेषां केवलोत्पादादन्वेव तीर्थप्रवर्त्तनकालात् कल्पमर्यादानिरूपणमिति कल्पातीताश्चतुर्विंशतिरपि जिना इति। सामायिकचारित्रबाधापरिहारिणस्तु तेऽपि स्युरेव।

ननु यदि सर्वेपि जिनाः सामायिकचारित्रवन्तस्तद्बाधापरिहारिणश्च सन्तोऽपि कल्पातीता इति न तानाश्रित्य कल्पव्यवस्था, तर्हि कथमाचेलक्याधिकारे सर्वत्र जिना अधिक्रियन्ते ? इति।

सत्यं, लोकानुभावजेयं मर्यादा यत्—सर्वेषु जिनेषु प्रव्रजत्सु तत्तत्कालीनाः शक्रा जिनानां वामस्कन्धे देवदूष्यं स्थापयेयुरिति। अत एव 'सव्वेवि एगदूसेण निक्खंता

जिणवरा उ चउवीस'त्याद्यावश्यकाचाराङ्गभगवत्यादिप्र-
थितारत्तस्य। सत्यप्येव तद्द्वयं सर्वेषां जिनानां यावज्जीवं
स्यादेव नैव वा स्यादिति न नियमः। एवं च भगवतो महावीर-
स्य साधिकमासाधिकसंवत्सरं यावत्तत्स्थितं, मतान्तरेण भग-
वतः ऋषभदेवस्यापि नवैव तत्स्थितं, ततः पश्चात्तौ द्वावपि
जिनभगवन्तौ छाद्मस्थ्ये कैवलित्वे च निर्वस्त्रावेव बभू-
वतुः। ततो भगवतोऽप्याश्रित्य सचेलाचेलत्वविचार
आवश्यकतां प्राप्त इति। यद्वा श्रुत्वा भगवतः श्रीमन्म-
हावीरस्याचेलक्यं तद्भावाभावस्वरूपमविचारयन्तो हंसानु-
करणमकुर्वाणाः केवलमाचेलक्यमेवावलम्ब्य शासन-
मशक्तिनिपतं द्रव्यलिङ्गमपि परित्यज्य बोटिका सर्ववि-
संवादिनो निह्नवा जाता इति जिनानाश्रित्य सचेला-
चेलत्वकल्पे विचार आवश्यकः। जमाल्यादीनां निह्नवानां
जिनशासनमुनीनां चैकैक वस्तु विवादपदं, गोष्ठामाहिलीयैस्तु

द्वे ते, परं नग्नाटैस्तु सङ्ख्यातुमशक्यानि विवादपदानि।
यतस्तैस्तावज्ज्ञानाद्युपग्रहेर्यादिसमितिसंरक्षणादिना स्वय-
ममुपकुर्वन्त्यप्युपकरणानि द्रव्यलिङ्गं परिजिहीर्षुभिरधि-
करणतया केवलावारकतया परमपदरोधकतया च
प्ररूपणैर्भूरिशः पदानि विसंवादितानि। अर्हतोऽधिकृत्य
देवेन्द्राद्यनुकृतया जन्माभिषेकं कुर्वाणैराभूषणपूजादि अप-
लप्तं, लज्जाकरं गतचक्षुः प्रतिबिम्बं च स्वीकृतं, सिद्धान-
धिकृत्य तीर्थवर्तिश्रुतमुच्छिन्नमिति प्रलप्तं, स्त्रीलिङ्ग
अन्यलिङ्ग गृहिलिङ्ग रजोहरणादिलिङ्गं च सिध्यमान-
ताऽभावं उद्घुष्टः, आचार्योपाध्यायानाश्रित्य सङ्ग्रहोपग्रह-
निरतता वैयावृत्त्यार्हतो चानादृतवन्तः, साधूंस्त्वधिकृत्य
शैक्षबालग्लानवृद्धतपस्विप्रभृतयस्तु वैयावृत्त्योच्छादनेनोच्छे-
दिता एव, परं 'जितांचेलपरीषहो मुनि'रित्यैकान्तिकं
प्ररूपणैः सन्ततिरेव साधूनामुच्छेदिता, सर्वेषां अप्यस्या

अनर्थपरम्पराया मूलं तावत् भगवतां जिनानां कीदृशी कदा चाचेलक्यावस्था तस्या यथावज्ज्ञानाभाव एवेति। तच्छिक्षायै अपि आचेलक्ये जिनानां तत्सम्बन्ध्याचारो विचारसरणिमवश्यमानेतव्य इति। एवं च कथं दशस्वपि कल्पेषु आचेलक्यकल्प एव कल्पो भावप्रधानः? शेषाश्च नवकल्पा वस्तुप्रधानाः कथं? कथं च तत्त्वार्थादिष्टेषु द्वाविंशतावपि परिषहेषु नाग्न्याख्य एव परीषहः भावप्रधान इति शङ्काया निरसनोपायः सुगमतमः। यतः आचेलक्यं नाग्न्यं च विवक्षावशीकृतं, तद्विवक्षा च जिनान् सामान्यसाधून् साध्वींश्चाश्रित्य पृथक्पृथग्रूपा, न चैवं शेषकल्पेषु परिषहेषु चेति न तेषु भावप्रधानो निर्देशः। इयं च दशकल्पीया गाथा यथारूपा जैनशास्त्रेषु तथारूपैव दिगम्बरकल्पितेष्वपि मूलाराधना—भगवत्यादिष्विति नात्र चर्च्यं नग्नाटैरपि किञ्चित्, तत्त्वार्थेपि नाग्न्यारतीति पाठः परिषहपरिगणनसूत्रे चारित्रमोहावतारसूत्रे च स्वीक्रियते एव जैनापसदैरपि तैः नग्नाटैरिति।

ननु आचेलक्येतिगाथायामविवादेन भावप्रधाननिर्देशाद्विवक्षायाः स्वीकार आवश्यकः, सा च जिनादीनाश्रित्य पृथक् पृथक् तत्स्वरूपेति परं कया रीत्येति तु विवेक्तुमर्हमेवेति। ननु सचेलकत्वमचेलकत्वं द्वयमपि द्विविधं—जिनानाश्रित्य साधूंश्चाश्रित्य तत्र जिनानाश्रित्य सचेलकत्वमन्यवस्त्राद्यभावेपि एकस्यापि देवदूष्यस्य यावत् स्थितिस्तावत् सचेलकतैव। वामस्कन्धस्थितिमतोऽपि तस्यापगमानन्तरमेव त्वचेलकत्वं। साधूनाश्रित्य तु संयमोपकारकौघौपग्रहिकोपधेरल्पमूल्यस्य श्वेतमानोपेतस्य जीर्णप्रायस्य धरणे विश्वविधिवैपरीत्येन परिभोगेऽप्यचेलकत्वं। बहुमूल्यविविधवर्णवस्त्राणां परिभोगे च सचेलकत्वमिति भावप्रधाननिर्देशोऽद्वान्यो भावः।

ननु कथ्यतां तावज्जिनानाश्रित्येयमाचेलक्येतरव्य-

चस्या कल्पनामूला आगममूलिका वेति ?।

अस्त्येवात्रागमा अपि मूलरूपा, तन्नेय समनीपिकामूला। यतः श्रीपर्युषणाकल्पाचाराङ्गजम्बूद्वीपप्रज्ञप्त्यादिष्वागमेषु भगवद्वीरादीना देवदूष्यापगमानन्तरमाचेलक्यमाख्यायि स्पष्टतया। सर्वजिनाना देवदूष्यधारण चावश्यकनिर्युक्तिसमवायाङ्गादिषु स्पष्टतयाऽऽख्यातं। महोपाध्यायाः श्रीधर्मसागरा अप्याहु कल्पकिरणावल्या—'तच्च तीर्थकरमाश्रित्य चतुर्विंशतेरपि तेषा देवेन्द्रोपनीतदेवदूष्यापगमे तदभावादेवे' ति। ततश्च सिद्धमिदं यदुत—जिनाना देवदूष्यकृता सचेलकता तदभावकृतेन चाचेलकतेति।

ननु महोपाध्यायधर्मसागराणामुपर्युक्त पक्षः (कल्प) सुबोधिकायां बाधिततया निर्दिष्टस्तत्कथं तस्य युक्ता साक्षितया धृतिरिति ?।

प्रथमं तावत् श्रीमद्भिर्धर्मसागरोपाध्यायैः कृता राजधन्यपुरे अहम्मदावादे च शतशः प्रतता, रचना च तस्या अष्टाविंशत्यधिकायां। न च ततः प्राक् सविस्तरा कल्पस्य वृत्तिरभूत्। विनयविजयोपाध्यायेन तु सप्ततेर्वर्षाणामप्यतिक्रमाभावे कृता। अतस्तत्र युक्ततमानामपि महोपाध्यायवचनाना खण्डनं साधितं, न तु जिनप्रभीयसन्देहविपौषध्युक्तस्यायुक्तस्यापीति। सुबोधिकायामेवमुक्तम्—"तच्च तीर्थेश्वरानाश्रित्य प्रथमान्तिमजिनयो शक्रोपनीतदेवदूष्यापगमे सर्वदा अचेलकत्वं, अन्येषां तु सर्वदा सचेलकत्वं, यच्च किरणावलीकारेण चतुर्विंशतेरपि जिनाना शक्रोपनीतदेवदूष्यापगमे अचेलकत्वमुक्त तच्चिन्त्य"मिति। विचारणापदान्यत्र विदुषामेतानि प्रथमं तावत् द्वयेऽप्येते तच्चेत्युक्त्वाऽऽचेलक्यकल्पोक्तमाचेलक्यमेव परामृशन्ति। तथा-च कल्पतया भावाविचार एवोपक्रम्यते, गाथाशोपि तदेवाख्याति। ततः किरणावलीसुबोधिके उभे अपि

तीर्थकरमाश्रित्येति तीर्थेश्वरानाश्रित्येति चोक्त्वाऽऽचेलक्य-स्य विवक्षां कुरुतः। परं तत् न साधूनाश्रित्य, तस्याग्रे वक्ष्यमाणत्वात्, तदनन्तरं किरणावली तीर्थंकराणां कथमाचेलक्यं मन्यते इति दर्शयति, तल्लक्षणव्याप्त्यर्थमेव तेषां चतुर्विंशतेरपीति ब्रवीति, ततश्च व्यनक्ति तत् यदुताद्यन्त्यजिनयतीनां शेषजिनयतीनां चाचेलक्याचारेऽनियतताऽस्ति। आद्यन्त्या नियतमचेलत्ववन्तः, तथा नेतरे। परं जिनेषु तु तत् नियतरूपं न, किन्तु यावद्देवदूष्यस्थितिस्तावत्तेषां नाचेलक्यं, तद्देवदूष्यापगमानन्तरमेव तदभावादेव तत्स्यादिति आचेलक्यकल्प एव तया दर्शितः। तत्त्वं बुद्ध्वापि सुबोधिकाकारो खण्डनाय प्रवृत्तः। ततश्च किरणावलीकृतानुक्तमपि चतुर्विंशतेरपि जिनानामाचेलक्यं प्रकटितं, न कल्पोक्ती रक्षिता, चर्चितं जिनेषु के सचेला जाताः कदा च जाता? इति। तथा च 'यन्माधवेनोक्तं तन्ने'ति खण्डितः शास्त्रानुसारी कल्पनिरूपितः सत्पन्था उद्भावितश्चानुपक्रान्तोऽप्रस्तुतश्च व्यक्तिभेदः, तद्व्याख्यातारोऽपि केचन तथातत्त्वमजानानाः प्रस्तुतस्य खण्डनाय अप्रस्तुतस्य मण्डनाय च रसमाविभृयुस्तत्र हुण्डावसर्पिणी दुष्षमाकालीनमिथ्यात्वमहत्तामनुप्रेक्षमाणानां नाभात्येव किञ्चिदाश्चर्यमिति।

ननु सुबोधिकाकृता बुद्ध्वापि किरणावलिकृतां कल्पप्रतिपादनरीतिं किं छलमवलम्ब्य पूर्वपक्षायितुं तत्रातितमिति?।

किरणावलिकृता हि सम्भावनादर्शनाय तथा जिनानां सर्वेषामप्याचेलक्यं भवेदिति 'भवेदि'ति क्रियापदमभिमेतं। सुबोधिकाकृता 'जातमस्ती'त्यध्याहृत्य पूर्वपक्षायितं, छलमप्येतन्न ग्रन्थकृदुक्तवचनसंश्रितं, किंत्ववगण्य सत्पथं स्वयमुद्भावितमिति।

ननु किरणावलीकृता कल्पनिरूपणं कृतं? येन स्या-

दिति भवेदिति वाऽध्याहार आवश्यकः स्यादिति चेत्।

स एव स्वकृतायां प्रवचनपरीक्षायां यतस्तथा प्राह तथा च तत्पाठः-'इहाचेलक्यं द्विधा-मुख्यमौपचारिकं च, तत्र मुख्यं तीर्थकृता कस्यचिज्जिनकल्पिकस्य चे'त्यादि, अत्र च न कदाचनापि जातमित्यध्याहारयितुं शक्यं।

ननु किरणावलीकारः सर्वेषां जिनाना देवदूष्यधृतेर्नियततां मनुते? इति।

मनुत एव। यतः प्रवचनपरीक्षायां-"जिनेन्द्रा अपि न सर्वथैवाचेलका" इत्यादिकायास्तदुक्तेरेव सत्वात्। अत्रैव श्रीकल्पे च श्रीपार्श्वचरित्रे श्रीनेमिचरित्रे श्रीऋषभचरित्रे च "एगं देवदूसमादाये'ति स्पष्टोक्तिश्च तस्य। न च क्वापि सर्वेषां जिनानामाचेलक्यं जातमुक्तं तेन। ततश्च तेनानुक्तमनभिप्रेतमयुक्तं चाध्याहार्य मनसा सुबोधिकाकारः प्रवृत्तः।

ननु किरणावलीकारेण कस्यापि भगवतस्तीर्थकरस्याचेलक्यं कुत्राप्युल्लिखितं न वेति?।

अत्रैव किरणावल्यां पुरतः श्रीवीरचरित्रं वर्णयन् प्रभोरचेलस्यभवनकालमाचख्यौ-'भगवान् ततः (साधिकमासाधिकसंवत्सरादूर्ध्वं) पर यावज्जीवमचेलको बभूवे'ति तदुक्तेरनुसरणमर्हमिति।

ननु अङ्गसूत्रेषु जिनस्य सचेलकतेतरते उक्ते न वेति?।

श्रीआचाराङ्गोपधानश्रुतप्रथमोद्देशके एव 'संवच्छरं साहियं मासं जं न रिक्कासि वत्थगं भयवं। अचेलए ततो चाइ तं वोसज्ज वत्थमणगारे' ॥१॥ इतिवचनात् सवस्त्रे सचेलकत्वमवस्त्रे त्वचेलकत्वमिति निर्धारं सुगममेवेति।

ननु आचेलक्यकल्पव्याख्यानं जिनापेक्षमन्यत्, शेषसाध्वपेक्षं चान्यदिति केवलं पर्युषणाकल्पवृत्तौ, अन्यत्रापि प्रत्नग्रन्थेष्वस्तीति ?

श्रीहरिभद्रसूरिसूत्रिते पञ्चाशके श्रीअभयदेवसूरिसूत्रि-तायां तद्वृत्तौ किरणावलीकृतव्याख्यानस्य मूलमस्त्येव। तत्पाठौ चेवं—'दुविहा एत्थ अचेला, संतासंतेसु एत्थ विण्णेया। तित्थयरऽसंतऽचेला, संताऽचेला भवे सेसा' ॥१॥ इति। वृत्तिपाठोप्येवं—'द्विविधा—द्विप्रकाराः, अत्र—आचेलक्यविचारे, अचेला—निर्वाससः, सदसत्सु—विद्यमाना-विद्यमानेषु, चेलेष्विति गम्यं, भवन्ति—स्युः, विज्ञेया—ज्ञातव्याः, ते च तीर्थंकरा—जिनाः असच्चेलाः सन्तोऽचेला भवन्ति, शक्रोपनीतदेवदूष्यापगमानन्तरं। तथा सद्भिर्वस्त्रैरचेलाः सन्तोऽचेलाः स्युः—भवेयुः, शेषा—जिनेभ्योऽन्ये साधव' इति सत्योरप्येवंविधयोः स्पष्टयोस्तदनुसारि खल्वक्तं कस्तिरस्कर्तुं प्रवर्त्तेत ?। तत्तु सुज्ञाः स्वयमेवालोचयन्तु। किञ्च—श्रीमति प्रवचनसारोद्धारसूत्रे श्रीनेमिचन्द्रसूरिसंदृब्धे तद्वृत्तौ श्रीसिद्धसेनसूरिरचितायामेवं व्याख्यातं। तथाच तत्पाठः—'अयमत्र भावार्थः—अचेला द्विविधा—अविद्यमानवस्त्रा विद्यमानवस्त्राश्च। तत्र तीर्थंकरा अविद्यमानवस्त्राः सन्तोऽचेला भवन्ति, पुरुहूतोपनीतदेवदूष्यापगमानन्तरं। तीर्थंकरव्यतिरिक्तास्तु साधवो विद्यमानैरपि वस्त्रैरचेला' इति। श्रीमद्भिरभयदेवसूरिभिरपि श्रीस्थानाङ्गवृत्तावेवमेव विवृतं। तत्पाठश्चैवं—'तत्राचेलकत्वमेवं—दुविहो होइ अचेलो, असंतचेलो य सन्तचेलो य। तत्थ असंतेहिं जिणा, संताऽचेला भवे सेसा' ॥१॥ सत्सु चैवंविधेषु विविधशास्त्रपाठेषु तदनुकरणैकतत्परं किरणावलीकृदुक्तं पक्षं खण्डयन् कीदृग् दौर्भाग्यभाजनं भवेत् तत्तु ज्ञानविज्ञानसौभाग्यनिधयः स्वयमेव कलयन्तु।

नन्वेतावता ग्रन्थेनैवं निर्धारयितुं शक्यते यत्—देवदूष्यधारणं यावत् सचेलका एव जिनाः, गते च तस्मिन् त एवासदचेलाः, शेषास्तु साधवः सचेला एवाचेला, नान्यथा। ततश्च जिना न सचेला अचेलाः, साधवश्च

नासचेला अचेला इति तत् किं सम्यगसम्यग्वेति ?।

पूर्वोक्तग्रन्थसमुदायाद्यद्यप्येतावदेव निश्चेतु शक्यं, पर न तत्सम्यग्, ग्रन्थान्तरेण विशेषव्याख्यावगमसम्भवात्। स चैव-असदचेलत्व मुनीनामपि अस्ति। यद्याचेलक्य शब्दवाच्यमवस्त्रत्वमेकविधमेव निरूपचरित भवेत् स्थिता स्थितरूपेषु कल्पेषु परिगणयेत् नैव च निर्दोषासेवनरूपेषु नान्यमिति, कल्पेष्वपि व्रतकल्पेन पञ्चाना महाव्रताना चतुर्णां च यामाना परिग्रहात्, परिग्रहविरमणे च सचित्ततर-मिश्रद्रव्यपरिहाराद्वस्त्राद्यचित्तत्याग. स्यादेव सार्वत्रिक स एवाचलकत्व मुख्य स्यात्, भिन्नमेव कल्पतया परिपठतया च यदभ्यधायि तत् तस्यापेक्षिकतामेव ज्ञापयितु, तत्र यथा जिनेश्वरानपेक्ष्य मुख्यमसदचलत्व तथा वेपाश्चित्तथा भूत तत्तथैव, यथा पूर्वान्त्यजिनमुनीना सदचेलत्व तथाऽन्यजिनमुनीना सचेलसचेलकत्वमपि, न च तत्तेपामृजुप्राज्ञत्वात् परिग्रहरूप बाधाविधायि च यमानामिति। सदचेलत्वमपि मुनीनामुत्सर्गपक्षीय,इतरथा त्वन्यग्राहिलिङ्गकरणमपि न मुनित्व बाधाविधायि, एतस्य सर्वस्यैदम्पर्यस्योहनाय श्रीपञ्चकल्प जीतकल्पभाष्ययो पाठौ दर्श्येते, तद्यथा यत पञ्चकल्पभाष्ये दुविहो होति अचेलो, असतचेलो य सतचेलो य। तित्थकरऽसत चेला सताचेला भवे सेसा ॥६६॥ दुविहो होति अचेलो, पडिमाचेलो तहा परिज्जुण्णे। पडिमाचेलो दुविहो, सावेक्खो चेव णिरवेक्खो ॥६७॥ णिगिणो अचोलपट्टो, निरवेक्खो सो भवे अचेलो उ। णिगिणो सचोलपट्टो, सावेक्खो सो पुण अचेलो ॥६८॥ णिगिणो वसणो अवसणो, अचेलो अ कडिचोलपट्टो य। पडिमाचेलस्सेए नामा एगट्ठिया होंति ॥६९॥ उग्गमउप्पायणएसणाए जदि हुति अपरिसुद्धाइ। मोक्खगरुयाणि ताणि तु अपरिज्जुण्णाइ चेलाइ ॥७०॥ उग्गम उप्पायणएसणाए जदि हुति सुपरि

सुद्धाइं । मोल्ललघुयाणि ताणि हु परिजुण्णाइं तु चेलाइं ॥७१॥ एत्तो सावज्जाइं, चेलाइं संजमावघातीणि । वज्जित्तो विहरंतो, होति अचेलो उ परिज्जुण्णो ॥७२॥ णिग्गहितरागदोसो, अणवज्जेहिं अहापरित्तेहिं । अप्पेहि वि विहरंतो, होति अचेलो उ परिज्जुण्णो ॥७३॥ णिरुवहतलिंगभेदे गुरुगा कप्पइ य कारणज्जाते । गेलण्णरोगलोए सरिरविवेगे य कितिकम्मे ॥७४॥ असिवे ओमोदरिते रायदुट्ठे पवादिदुट्ठे वा । आगाढे अण्णलिंगं कालखेवो व गमणं वा ॥७५॥ जीतकल्पभाष्ये–दुविहा होंति अचेला, संताचेला असंतचेला य। तित्थगरऽसंतचेला, संताचेला भवे सेसा ॥१९७५॥ संतेहिं वि चेलेहिं, किह पुण समणा अचेलया होंति ?। भण्णति सुणसू चोदग !, जह संतेहिं अचेला उ ॥१९७६॥ सिस्सावेढियपोत्तिं, णतिसंतरणंमि णग्गयं बेंति। जुण्णेहिं णग्गिय म्हि, तुरसालिय ! देहि मे पोत्ती ॥१९७७॥

जुण्णेहिं खंडिएहि य, असव्वतणुपाउएहि ण य णिच्च। संतेहिं वि णिग्गंथा अचेलगा होंति चेलेहिं ॥१९७८॥ एवं दुग्गयपहिया, वऽचेलया होंति ते भवे बुद्धी । ते खलु असंततीए, धरंति णतु धम्मसद्धाए ॥१९७९॥ सति लाभंमि साहू, गेण्हन्तऽसहट्ठणाइं ताइं तु । ताणि वि खंडियमादी, धरेंति तह धम्मबुद्धीए ॥१९८०॥ आचेलुक्को धम्मो, पुरिमस्स य पच्छिमस्स य जिणस्सा। मज्झिमगाण जिणाणं, होति सचेलो अचेलो वा ॥१९८१॥ पडिमाए पाउया वा णऽतिक्कमंते तु मज्झिमा समणा। पुरिमचरिमाण सहणहणा तु भिण्णाणिमो मोत्तुं ॥१९८२॥ णिरुवहयलिंगभेदो, णिकारणयो ण कप्पये कातुं। किं पुण तं णिरुवहयं ? भण्णति अहजायलिंगं तु ॥१९८३॥ जम्मं दुविहं होति, मातुकुच्छिमि पढम जं जम्मं । भवसंसारचउके, णिप्फिडितो बितिय पव्वज्जं ॥१९८४॥ तस्स इमे

भेदा खलु, खधदुवारे य समणे पाउरणे। गकलद्धंसे पट्टे लिंगदुवे या इमा भयणा ॥१९८५॥ निक्कारणयो- लहुओ लहुओ लहुगा, तिसु चतुगुरगा य होंति बोद्धव्वा। गिहिलिंग अण्णलिंगे, दोसुवि मूलं तु बोद्धव्वं ॥१९८६॥ सुसियअ कारणे पुण, भेदं लिंगस्सिमेहि कज्जेहिं। गेलण्ण रोग लोए, सरीरवेपावडियमादी ॥१९८७॥ अहवा इमेहिं कारणेहिं—आसज्ज खेत्तकप्पं, वासावासे अभाविए असहू। काले अद्धाणम्मि य, सागरि तेणे य पंगुरण ॥१९८८॥ असिवे ओमोयरिए, रायदुट्ठे पवादिदुट्ठे वा। आगाढे अण्णलिंगं कालक्खेवो व गमण वा ॥१९८०॥

ननु अन्यजिनयतीनां कल्पानां स्थितास्थितस्वरूपत्वादाचेलक्यस्य चास्थितकल्पत्वात् गृहन्यलिङ्गरूपेण बहुमूल्यादिवस्त्रपरिभोगेण वा सद्भावसचेलकता परं पूर्वान्त्यजिनयतीनां स्थितकल्पत्वान्नियतमेवाचेलक्यं, ततः कथं बहुमूल्यवस्त्रादेरन्यलिङ्गादेश्चानुज्ञा सुषिरघटामादीनेतेति ?। उत्सर्गेण स्थितकल्पत्वात् श्वेतमानोपेतस्वलिङ्गधारणेनाचेलकत्वं, अपरं त्वापवादिकं। व्यवहारः प्ररूपणा च सामान्येनौत्सर्गिकेति।

ननु यदि कल्पतयाऽऽचेलक्यं परीषहतया नाग्न्यं च सम्मतं, तत. असदचेलादिविवक्षामादत्य व्यवस्था परिग्रहत्यागे, तर्हि औद्देशिकापराभिधानाधाकर्मिकस्य हिंसात्वगात्रस्यागोऽनियतता वा तत्र, तथैव स्त्रीरोगालाभतृणस्पर्शादीनां ब्रह्माहिंसाऽस्तेयापरिग्रहैकगतत्वात् कथ परिषहतोदिति समाधेयेति ?। यथा क्षुदादिपरिषहेषु सचित्ताशनादित्यागेन महाव्रतरक्षणं अचिन्तनीयाहारालाभेऽप्यदैन्यादिना परिषहता तथा स्त्रीप्रभृतिषु मैथुनसचित्तौषधादत्तत्यागेषु तत्प्रसङ्गानवसहनानैक्यारिवन्नत्वादिभिः परिषहता। परिग्रहवत्तृणदृष्यचर्मपञ्चकानां परिहारात्कथं तृणस्पर्शपरिषह इति ?। यथाऽऽचेलक्यमौत्सर्गिकोपकरणव्यवस्था। गृह्णाति तथा तृण-

स्पर्शे औपग्रहिकव्यवस्थां । तेन सकारणं तदुपभोगः ॥ इति आचेलक्यम् ॥

---

## उपकारविचारः ( १९ )

मुनयोऽत्र परां कोटी–माश्रिता जन्तुसन्ततेः । उपकारततौ ख्यातं, विश्वेऽप्येतद्विपश्चिताम् ॥१॥ तर्हि ते जगतां द्रव्यो–पकारे किमुदासते ?। येनाहारौषधाद्यैरते, नोपकुर्वन्ति जन्तुषु ॥२॥ सत्यमुक्तं यतो नम्याः, सद्दायादेव साधवः । अन्यथाऽकृतकृत्यानां, नमस्कारः कथं हितः? ॥३॥ सत्यं मुनिर्व्रतेष्वादौ, निषेद्धुं ग्रहमुद्यतः । परं परिग्रहस्तेन, निषिद्धो न ग्रहः पुनः ॥४॥ भेदोऽनयोरेष एव, यत् स्यात् परिग्रहो मुनेः। संयमे साधनान्येव गृहीतव्यानि साधुना ॥५॥ अतिरिक्तं न चेद् ग्राह्यं, किं दद्यात् स परं प्रति ?। द्रव्यं यद् ग्राह्य धार्यं त–द्दानाद् व्युच्छित्तिमेति च ॥६॥ ततः सङ्कोचनं याति, मनो दाने प्रवृत्तिमत् । ज्ञानादीनां दाने तु, वृद्धिः प्रतिपदं भवेत् ॥७॥ विहारोऽप्रतिबद्धो न, देयद्रव्यपरिग्रहे । दानाधिक्याय तद्वृद्ध्यै, भवेत् साधो· समुद्यमः ॥८॥ एवं सम्यक्त्वमुख्योऽयं, मार्गः स्यात् समुपेक्षितः । गृहिणां च महानेवं, संसर्गः स्याद् भयावहः ॥९॥ उपकारश्च द्रव्येभ्यो, नात्यन्तिक उपार्ज्यते । न चैकान्तिकताऽस्त्यत्र, बुधैरेतद् विचार्यताम् ॥१०॥ ततो ज्ञानादिदानेनो–पकारं जगतां मुनिः । कुर्यात् स स्याद्यतोऽत्यन्तै–कान्तसौख्यविधानकृत् ॥११॥ परिग्रहाद्विरता मुनीन्द्राः, शिवाध्वसिद्ध्यै · विहितावधानाः । ते सेवकेभ्यो ददतेऽपवर्ग–मार्गं सदानन्दसुखैकहेतोः ॥१२॥

इति उपकारविचारः॥

---

## मिथ्यात्वविचारः (१६)

ननु 'जीवो अणाइणिहणो' इत्यादिवचनाज्जीवानामनादित्वं, गत्यादय औदयिकभावा अपि संसारितत्त्वादनादिका एव, परं गत्यादयस्तेषां बन्धे उदये च भवन्ति ये मिथ्यात्वादिबन्धहेतुयुक्ताः, मिथ्यात्वे सति च कषायादिहेतूनामवश्यं भावः। किञ्च—नष्टे च तस्मिन्नवश्यं कषायादयो निर्मूलकाषं कषिता इव विद्यमाना अपि, तन्नाशे अर्धपुद्गलपरावर्तान्त सिद्धिप्राप्तिनियमात्। परं किं तन्मिथ्यात्वं कतिभेदं च तदिति?।

स्वरूपतस्तावदात्मगुणः सम्यक्त्वं, यतस्तत्सिद्धेष्वन्यौपशमिकादिभावशून्येष्वपि तिष्ठति, तदावारकं च दर्शनमोहनीयं। नन्वेतस्य मोहनीयत्वे कथमावारकत्वं?। सत्यं, आभोगादिमिथ्यात्ववता सत्यपि श्रद्धानोत्पादानुकूले सयोगे ज्ञातेऽपि चार्हततत्त्वे नैति तत् श्रद्धानपथं यदा तदा तस्य मोहनीयता, परमतथाविधानां यन्नात्मगुणरूपं सम्यक्त्वं जायते, तस्यावारकत्वं। अत एव तत्त्वार्थभाष्ये—'तदावरणीयस्ये'त्याहुः।

ननु सम्यक्त्वगुणस्यावारकं दर्शनमोहनीयं, कथमनन्तानुबन्धिचतुष्कस्य तद्घातकतेति?।

सत्यं, रागद्वेषयोरुदयेन देवादितत्त्वत्रय्यां सम्यग्दर्शनादिरत्नत्रय्यां वाऽप्रीतिलक्षणो द्वेषस्तद्विपर्यये च प्रीतिरूपो रागो यावत्तिष्ठति तावन्न यथार्थप्रतीतिरूपं सम्यक्त्वमाविर्भवति, अपूर्वकरणेन भिन्ने एव तस्मिन् तदाविर्भवेत्। जातेऽप्यस्मिन् प्राक् तावत् तत्प्रीत्यप्रीतिनाशे एव सम्यक्त्वस्य प्रतीतिरूपस्य दर्शनमोहनीयोदयेन घातः। स्पष्टं चैतत्सास्वादनविचारणया। ततो युक्तं द्वयोरप्यनयोरावारकत्वं मोहनीयत्वं चेति। सति च तदुदये तत्त्वाश्रद्धानं, तदेव

मिथ्यात्वं। एवं यथा सम्यक्त्वं तत्त्वप्रतीत्यादिकृत् अनन्तानुबन्धिशमश्च तल्लक्षणं तथा तत्त्वाश्रद्धानरूपं मिथ्यात्वं कुदेवादिप्रीत्यादिश्च तल्लक्षणमिति।

सम्यक्त्वस्य यथा निसर्गादिभिर्भेदाः तथा मिथ्यात्वस्यानाभोगादिभिर्भेदाः। तथा चानाभोगसंशयादीनां ज्ञानावरणीयोदयोद्भवत्वे लेशोऽपि न विरोधस्येति, तेषां तद्धेतुत्वेन तद्भेदत्वानपायात्। एवं 'जावइया नयवाया, तावइया चेव मिच्छत्त'त्तिवचनं 'संमत्तं सव्वगय' मिति च वचनमुपपद्यते।

ननु अनाभोगसंशयविपर्यया मिथ्यात्वतयोक्तास्तर्हि 'सद्दहइ असब्भावं, अणभोगा गुरुनिओगा वे'तिनिर्युक्तिकारवचनस्य का गतिरिति ?, तत्र तेषां श्रद्धानस्याघातकतयाऽमिथ्यात्विनोऽपि कथनादिति।

सत्यं, लब्धायाः श्रद्धायास्तस्या उपन्यासोऽपि किं न दृष्टः ? दृष्टत्वादेव संशय इति चेन्मा संशयिष्ठाः। तथाविधे गहनेऽर्थे सति तथाविधमत्याद्यभावे प्रवचनार्थश्रद्धाने चाविकले अज्ञानादिनाऽन्यथाश्रद्धानेऽपि सम्यक्त्वस्याव्याघातः। देवादौ जीवादौ च प्रवचनप्रतिपादितेऽर्थे यद्यनाभोगादयस्तदा मिथ्यात्वमप्रतिहतमेव। अन्यथा जमाल्यादीनां तदाश्रितशिष्याणां च न स्यादेव मिथ्यात्वं। न च युक्तं स्यात् तं परिहृत्यानेकपां तच्छिष्याणां भगवन्महावीरप्रभुपादानामाश्रयणं, न च युक्तं स्यात् ढंकादीनां यत्नस्यापि साफल्यं, ततस्तत्त्वतोऽनाभोगादयो घातकाः सम्यक्त्वस्य पोषणहेतवश्च मिथ्यात्वस्य। यतस्तदुदयादेव प्रवचनार्थस्याश्रद्धानादि, त एव चेज्जिनोक्तप्रवचनश्रद्धानपूर्वा न स्युस्ततो मिथ्यात्वसंवलितत्वान्मिथ्यात्वरूपास्तत एव चानाभोगादीनि मिथ्यात्वानीति।

नन्वेवं भेदत्रये मिथ्यात्वस्योरीकृते आभिग्रहिकानभिग्रहयोरन्तर्भावोऽसत्त्वं वेति ?। शास्त्रोक्तावेव ताविति

नासन्तौ, परं विपर्यये अन्तर्भाव्यौ। विपरीतश्रद्धानस्य यथा विपर्ययता तथा तत्त्वातत्त्वसाम्यस्यापीति।

नन्वेवं सत्यभव्यानां मिथ्यात्वं पञ्चसु भेदेष्विति स्वीकाराभीकृतदेवादीनामपि नास्तिक्याभावान्नियतमास्तिक्यं, सति च तस्मिन् मोक्षश्रद्धालुत्वनियमाच्चामीषां एतयोर्द्वयोरप्येकतरत्।

ननु किमभव्या अन्ययूथिका वैनयिकादिकत्वेनापि न भवन्ति? भवन्ति चेदाभिग्रहिकानाभिग्रहिकौ कथं न भवतः?। न भवन्ति चेत्, श्रीयोगशास्त्रे कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिभिः गुणस्थानक्रमारोहे च श्रीरत्नशेखरसूरिभिरभव्यानामपि कथं मिथ्यात्वपञ्चकमप्यधायीति?।

सत्यं, तत्र हि व्यवहारं क्रियां चाश्रित्योक्तं, यथा जैनकुलजातोऽभव्यश्चिह्नादिकं सतत्त्वानि चाश्रयति परं नैतावता स सम्यग्दृष्टिः, परिणतेरन्यथाभिधाया अभावात्। तथैतानपि मोक्षश्रद्धाया अभावादास्तिक्याभावस्तदभावाच्चाभिग्रहिकत्वाद्यभाव इति पारिशेष्यादनाभोगिकमेव तत्त्वतस्तदिति।

ननु अन्ययूथिकाभव्यानां यदि व्यवहारेणाभिग्रहिकानभिग्रहिकौ मिथ्यात्वभेदौ स्वीक्रियेते तर्हि जैनमते नवमग्रैवेयके असंयतभव्यद्रव्यदेवानां गतिश्रुतेः किं सम्यग्दृष्टित्वं देशविरतत्वं सर्वविरतत्वं च स्वीक्रियते न वेति?

स्वीकर्तुं योग्यान्येव तानि तेषां व्यवहारेण। अन्यथा असर्वविरतानां ग्रैवेयकेषु नोपपात इति वचनं व्याघातपदवीमापद्येत। किञ्च—अभव्यजीवानामनन्तानन्तशो द्रव्यलिङ्गानां ग्रहणात्तत्प्रतिबोधितानां तेषां गुरुत्वेन श्रद्धानात् सम्यक्त्वं नावतिष्ठेत। अभव्यप्रतिबोधात् सम्यक्त्वं भव्यैः प्राप्यत एव। अत एव हेतोरभव्यानामपि शास्त्रकृद्भिर्दीपकाख्यं सम्यक्त्वं स्वीक्रियते।

ननु पूर्वोक्तनीत्या अभव्यानामपि न तु निश्चयेन किन्तु व्यवहारेण सम्यग्दृष्टित्वसंयतत्वयोः स्वीकारे असाधौ साधुत्वबुद्धेरापातात् तत्स्वीकर्तृणां सम्यक्त्वादेर्बाधो न वेति चेत्।

उ०—शास्त्रकृद्भिरत एव 'सुस्सूसधम्मराओ' इत्यादीनि सम्यग्दृष्टेर्लिङ्गानि 'आलएणं विहारेण'मित्यादीनि च सुविहित-साधोर्लिङ्गानि प्रतिपादितानि, ततस्तत्तल्लिङ्गाश्रयेण तथा तथा मन्वतां न कोऽपि बाधः। गोपालकघटिकादिषु निरग्निधूमसद्भावे ततो वह्न्यनुमानस्य बाधितत्वेऽपि न सानुमदादिषु तथात्वे बाध इति पन्था अत्राप्यनुसर्त्तव्यः।

ननु व्यवहारेण पूर्वोक्तनियमानुसारेण सम्यग्दृष्टि-त्वादिस्वीकारो योग्योपि कथं शास्त्रकृद्भिर्न स्वीक्रियते? न स्वीक्रियते कथमिति कथमिति चेदनाद्यनन्तमिथ्या-दृक्त्वस्य असंयतभव्यद्रव्यदेवेत्यत्र चासंयतत्वस्य भणनात् तत्त्वदृष्ट्या तथा मिथ्यात्विताया असंयततायाश्चैव भावात्। अभव्यविषये निश्चयेन मिथ्यादृष्टित्वसंयतत्वव-दनाभोगिकस्यैव मिथ्यात्वस्य सद्भावस्य पारमार्थिकत्वेन ये व्यवहारं पुरस्कृत्य स्थापयन्तोऽन्यथा पारमार्थिकपथस्य व्यक्तिद्वेषदुष्टाः खण्डनाय प्रयतन्ते तेषां का गतिर्भाविनी तत्केवलिनो विदन्ति।

ननु 'नमो दंसणस्से'त्यनेन श्रीसिद्धचक्रान्तर्गतष-ष्ठपदेन यत् सम्यग्दर्शनं नमस्क्रियते तत् त्रिविधेषु कारकरोचकदीपकभेदेषु किं गृह्यते? इति। 'सव्वण्णुपणीया-गमसत्थतत्तसद्दहणरूवं'ति श्रीपालचरित्रं 'तत्त्वार्थश्रद्धानं सम्यग्दर्शन'मिति तत्त्वार्थसूत्रं 'रुचिर्जिनोक्ततत्त्वेष्विति योग-शास्त्रं 'भूयत्थसद्दहाणं'ति श्रीमन्त्युत्तराध्ययनानि इत्यादि शास्त्रवृन्दं समर्त्ता रोचकमेव तत्र नमस्करणीयतया ब्रूयात्। कारकं सम्यक्त्वं यद्यपि नैश्चयिकं तथापि मुख्यत्वेन रोचकांशस्यावश्यंभावः स एवात्र नन्तव्यः। दीपकसम्यक्त्वं तु

'तमेव सच्चं नीसंकं जं जिणेहिं पवेइयं'ति शास्त्रोक्तामप्रतिहतामर्गलां धारयन्नज्ञानवान् सन् तथाविधगुरूपदेशयोगात् कथञ्चिदसद्भावं श्रद्धीत तद्विषयं तद्वाक्यमिति। अत्र तूत्सूत्रं प्ररूपयतो मिथ्यादृष्टित्वस्य नियमनात्। श्रीभगवदुक्तमट्टुकदृष्टान्तस्य रहस्यं जानानानां 'दुब्भासिएण इक्केणं'ति मरीचिवचनस्य सापेक्षस्यापि कुमतमूलदुर्भाषितस्य विपाकं विचारयतां 'किं एत्तो कट्ठयरं सम्मं अणहिगयसमयसब्भावो'त्ति वचनमाकलयतां च कथं तज्ज्रूद्धानपदं नेयात्? यदि परं निह्नवानां पक्षपातितता व्यतिक्तिद्वेषदुष्टता वान्तरा नैति प्रवेशमन्तःकरणे तदा सरल एव पन्था इति।

ननु उत्सूत्रभाषणमापादकं मिथ्यात्वस्य चेत्तर्हि किमिति मिथ्यादुष्कृतापराभिधानेन प्रतिक्रमणेन तच्छुद्धिर्मता शास्त्रकृद्भिर्यतस्तत्सूत्रे 'काइओ वाइओ माणसिओ उस्सुत्तो' इत्यादि पठितं। सत्यं, तद्धि अतिचारविषयं, मतप्रवर्त्तकस्योत्सूत्रदेशनं न तथा। अत एव निह्नवादिकृतानामर्हदादिनमस्कारादीनां स्पष्टतया द्रव्यनमस्कारादित्वमेव प्रतिपादितं। न च जमाल्यादयो न सप्रतिक्रमणधर्माणो बभूवुः, ततश्चैतन्यवद्भिरुत्सूत्रभाषकाणां मिथ्यात्वे न संशय्यमंशतोपीति।

ननु निह्नवानामुत्सूत्रभाषित्वस्य नियमात् मिथ्यात्वे, ततश्च तत्कृतनमस्कारादीनां द्रव्यनमस्कारत्वे सिद्धे च साम्प्रतीनानां मतप्रवर्त्तकानां तदनुयायिनां च किं तथात्वमिति? चेद्। बाढं जमाल्यादयो निह्नवा एकस्यैव सूत्रस्य नयतात्पर्यार्थस्यापलापिनः, साम्प्रतीनास्त्येते मतप्रवर्त्तकास्तदनुयायिनश्च दिगम्बरवत् प्रभूतसूत्राणां विसंवादिन इति तथात्वे एषा कैव शङ्केति।

ननु शास्त्रकृद्भिर्निह्नवानां परिसङ्ख्यानं कृतं यदि-

वोपलक्षणं ?। आद्ये, साम्प्रतीनाना कथं निह्नवत्वं ? अन्त्ये- 'सत्तेया दिट्ठीओ'त्ति वाक्यस्य कथं सङ्गतिरिति ?।

वर्तमानप्रवचनानुयोगकृत श्रीस्कन्दिलाचार्यात् प्राग्नि-ह्नवानां सप्तकं जातं, ततः 'सत्तेया दिट्ठीओ'त्ति वाक्यं। तथा च न तद्वाक्य निह्नवेयत्तानिर्णायक। पुस्तकारूढ-सिद्धान्तकृद्भ्य श्रीदेवर्धिगणिक्षमाश्रमणेभ्यः प्राग् बहुत-विसवादिनो भिक्षवेपाश्च दिगम्बरा जाता इति शास्त्रेपु वानामष्टकं व्याख्यायीति स्पष्टमेव निह्नवानां सङ्ख्यानं नियतं, किन्तूपलक्षणमेव। तेन साम्प्रतीनानां निह्नवत्वे तन एव मिथ्यात्वत्वनिर्णये न कोपि वाध इति।

ननु शास्त्रोक्त्या निह्नवाना सङ्ख्यानमुपलक्षणं, ऽष्टाधिकानामपि निह्नवत्वसिद्धौ सप्तदशशतीयाचार्यै-ाधिकानां निह्नवतोक्तिर्न्यपेधीति सत्यं ?,

यथा चौरस्य चौरत्वेन पण्डकस्य पण्डकत्वेनोक्तेः शास्त्रकृद्भिर्निषेधे तदुक्तौ स्पष्टतया प्रायश्चित्ताचरणस्यापि च प्रतिपादने चौरपण्डकयोश्चौरपण्डकभावो नश्यति ? न चेदत्रापि अष्टाधिकाना निह्नवोक्तेर्निषेधेपि तेषां तथात्वं न नश्यति, प्रत्युत यथा विशेपनिषेधः सामान्यविधान-मूलकस्तथाऽत्रोक्तिनिषेधोपि तथात्वविधायक इति सिद्धं साम्प्रतीनानां उत्सूत्रभाषकाणां निह्नवत्वमिति।

ननु श्रीस्कन्दिलाचार्यैः सप्तकं निह्नवानामष्टकं चावश्यकविवरणकारैर्व्याख्यातं पाश्चात्यैरधिकानां निह्नवो-क्तिर्न्यषेधि तथापि सेयं सङ्ख्या न नियामिका किन्तूप-लक्षणीभूतेति कुतो ज्ञायते ? इति चेत्। सत्यं, तस्यैवावश्यकस्य व्याख्यातारः श्रीमलयगिर्याचार्याः तस्या एव गाथाया विवरणे 'उपलक्षण चैतदुपधानाद्यपलापिना'मिति तत्सङ्ख्यो-पलक्षणभूतेत्याचख्युरिति।

ननु मरीचिना 'कविला ! इत्थंपि' इत्यनेन श्रीजैन-

धर्मस्य निरुपचरितसम्पूर्णधर्मत्वमुक्त्वा पश्चादेव 'इहयंपि' त्यनेन पारिव्राज्ये धर्मस्य कविधानादल्पता अपिशब्दात् सोपचारता चोक्ता तथापि शास्त्रकारास्तद्वच इति निजगदुः। परं तथावचनात् मिथ्याधर्मोपदेशकता मिथ्यादृक्त्वं च जातमिति नोक्तमितिचेत्। सत्यं,श्रीहैमीये वीरचरित्रे 'मिथ्याधर्मोपदेशना'दिति श्रीगुणचन्द्रीये तस्मिन् 'विवरीयजिणागमपयमेत्तस्स परूवणेऽवि मिच्छत्तं' ति स्पष्टमेव भणितम्।

नन्वेवं प्रथमं तावत् जैनधर्मः श्रावितः, बुद्धे च तद्ग्रहणाय प्रेपितः, पश्चादागताय स्वमतस्याधमता ज्ञापिता, पुनस्तल्लेशस्य प्रश्ने कृतेपि अप्रश्नितामपि जैनधर्मस्य निरुपचरिततां प्रतिपाद्य कुत्सितमामल्पतां च स्वमार्गे धर्मस्य प्रोचे। तथापि यदि मिथ्याधर्मोपदेशनं मिथ्यात्वं च शास्त्रकृतः स्पष्टतया प्राहुस्तर्हि साम्प्रतीनानां सन्मार्गलोपनबुद्धिमतां येन केन प्रकारेण स्वमार्गमेव पुपोषयिषूणां मिथ्योपदेशकत्वे मिथ्यादृक्त्वे का शङ्केति? चेन्न किञ्चित् क्षुण्णं, तेषां तथात्वे परमन्येषामत्र हानिरेकैव दृष्टिगोचरमायाति यद्व्यक्तिद्वेषपुष्ट्यै धृताया धारणाया निर्मूलकापं कपितता भवेदिति।

ननु उत्सूत्रप्ररूपकाणामस्तु नियमान्मिथ्यादृष्टित्वं, निर्विवादं सिद्धेः, परं संसारभ्रमणस्य सङ्ख्यायां विसंवदन्ते मिथो विद्वान्सः, ततस्तन्निर्देश आवश्यक इति चेत्। ननु मिथ्यात्वस्योदयोऽनन्तानुबन्धिनामुदयेनाविनाभूतो यतोऽविनाश्यानन्तानुबन्धिनोऽपूर्वेणादौ लभते कोपि मिथ्यात्वनाशाज्जायमानं सम्यक्त्वं, न चानन्तानुबन्ध्युदयं विना लब्धसम्यक्त्वस्य मिथ्यात्वादयः, क्षीणानामप्यनन्तानुबन्धिनां मिथ्यात्वस्याक्षये पुनर्बन्धसम्भवात्। यदि चोत्सूत्रप्ररूपणात् मिथ्यात्वस्योदयस्तस्माच्चानन्तानुबन्धिनां तर्हि उत्सूत्रभाषकाणामनन्तसंसारसमुपार्जने कैव शङ्का?। 'अनन्तान्यनुबध्नन्ति

यतो जन्मानि भूनरे' इति शास्त्रेषु स्थाने स्थानेऽन्वर्थतानन्तानुबन्धिना या स्याना सापि संसारानन्त्योपार्जनमेवाख्याति।

ननु मिथ्यात्वोदये ध्रुवोऽनन्तानुबन्ध्युदयस्तत्स्वभावाच्चानन्तभवाभ्योपार्जनं, तर्हि कथं मिथ्यात्वोदये वर्तमानानामल्पसंसिद्धिकत्व पारदन्तकत्वे नलिनवपि सम्भवेदिति ?।

सत्यं, यथा क्षपकश्रेणिगत निकाचितानां क्षपणेऽपूर्वकरणं समर्थ तथा यथाप्रवृत्त्यपूर्वकरणाभ्यां तदनिष्टस्य क्षयस्त्वमुसर। नहि तत्त्वस्य कस्याप्यन्तःकोटाकोटीसागरोपमेभ्योऽधिका स्थितिः सम्भवतीति।

ननु यथाप्रवृत्त्मिथ्यात्विनामप्यनन्तानुबन्धिनामुदयोऽपरेषामुत्सूत्रभाषिणामपि तथाऽन्यथा वेति ?।

यथाप्रवृत्तानामनन्तसंसारत्वाभावे शोधितासस्य शुभ्मता, तत्र औपशमिक इत्यागम्यं ते तत्रेऽपि मोक्षस्य साधना न नूत्सूत्रभाषकानामन्यथा। अत एव गोधैः स्वभावेन दुर्मन्तेपि ते यथाऽभिधीयते तद्दोषाधिकारे–'गोही पुण दुक्खा नोम'ति।

ननु परम्परसिद्धमंदेषु कथं तद्वन्यलिङ्गिनां सिद्धरधिकार ? इति।

सम्मार्गपक्षपातिनस्ते, अतो भावलिङ्ग प्रतीत्याविकल्पा सिद्धा इति भाष्यकारादयः, उत्सूत्रप्ररूपणेन कुमार्गप्रवर्तकास्तु दूरीकृतभावलिङ्गा इति तेषां सिद्धिस्तु दूरापास्ता। गोशालप्रभवस्थिति तत्फलं विमृशता विदुषा मुग्धदेवोत्सूत्रभाषकाणां नैव मुदुर्लभतापि। अत एव चानन्तसंसारपरिभ्रमणमुत्सूत्रभाषकाणां कष्टेन 'अणंतसंसारो'त्ति वोनिनाक्षोवत्या सिद्धमप्युतमिति।

ननु एवं चेदुत्सूत्रप्रवक्तानां प्रवचननिह्नवानां मिथ्यात्वोदयादिनाऽनन्तसंसारसर्जनं गीयते, तर्हि मरीच्यादीनां तथात्विनापवि कथं तन्न सम्पन्नमिति ?।

सत्यं, 'शास्त्रे हि जैनानां यथाबद्धं तथावेद्यमिति नियम्यते न, अनुभावबन्धेन व्यभिचारः। तद्वदेवात्रानन्तसंसारपरिभ्रामककर्मोपार्जनं नियम्यते निह्नवानां। एतन्नियममनङ्गीकुर्वाणा अपि निरर्गलतयैवमुदाहरन्ति यदुत्सूत्रभापणेनानन्तसंसारवृद्धिरिति। तथा चापत्तिर्न सम्पत्त्याऽपलपनीया। नियमस्य तादृशोऽस्वीकारेऽनिष्टापादने तदुक्तिर्वैयर्थ्यमेव व्यञ्जयेत्। किञ्च—यथा नोत्सर्गस्य बाधकोऽपवादस्तथा कस्यचित्तत्सम्पत्त्यभावो नापत्तेर्बाधकः। अपि च—यथा चिलातिपुत्रप्रदेशिनृपादयो हिंस्रादिस्वभावा अपि न दुरन्तं भवं भ्रान्ता इति किं हिंसादीनां तथापादकत्वं न नियम्यं? न वा प्रज्ञापनीयं?। परमेतावांस्तु विशेषः—यथान्यजीवहिंसाया दुरन्तत्वेपि ऋषिहिंसायास्तादृशी दुरन्तता यथा बोधेर्लब्धस्य नाशेन भवान्तरे च दुर्लभत्वेनानन्तसंसारपरिभ्रमणस्यापादिका, तथा प्रवचनापलाप्युत्सूत्रभापकाणां गम्येतेति।

ननु 'इच्छा छन्दुत्ति एगट्ठे'ति वचनाद्यथाछन्दानां नियतोत्सूत्रभापकता, यथाछन्दाश्च निरयावल्युक्ताः कालीदेव्यादयस्ताश्चैकावतारिण्य इति स्पष्टतया निर्विशेपं सूत्रादेशस्तत्कथं नामोत्सूत्रभापकाणामनन्तसंसारार्जकत्वं नियम्यते?

सत्यं, यथा हि पार्श्वस्थादयो गुरुषु परिभापिता नियमिताश्च पृथक् पृथग्व्यक्तिरूपेण तथा न तत्राभिप्रेतं, एकस्या अपि व्यक्तेः पार्श्वस्थादिपञ्चकतया वर्णनात्। किञ्च—श्रीभगवतीदशमचतुर्थोद्देशादौ श्रावकाणामपि पार्श्वस्थादित्वेन वर्णनं दृश्यते। अन्यच्च तत्र तत्र पार्श्वस्थत्वादिभिः पार्श्वस्थत्वादितया विहारोपि पृथग्निर्दिश्यते। तद्यथाछन्दत्वेन नोत्सूत्रभापकाणां संसारानन्त्ये बाधो न कश्चिदपीति।

ननु यद्युत्सूत्रप्ररूपकाणां मिथ्यात्वानन्तानुबन्ध्युदयो

बोधेर्दौलभ्यमनन्तससारपरिभ्रमणं च भवेत्, तर्हि निह्नवचूडामणेर्भगवद्वीरसार्वज्ञ्यापलापिनः कथं न तत्सर्वमिति ?

सत्य अन्तर्मुहूर्तेनानन्तकृत्वोऽपि लाभवतो मिथ्यादृग्घनन्तानुबन्ध्युदयवत आपत्त्या भवने क्वचिदपराद्ध्या सम्यक्त्या न भवेदपीति प्रागुक्तं मा विस्मार्षीः। जमालेर्न नियतोऽनन्तसंसाराभावः, श्रीवीरवत् चतुष्पञ्चदेवतिर्यङ्मनुष्यभवा स्थूला अपि मनसातिकालसमानान्तरत्वाभावात्तस्य न काप्यनुपपत्तिः। किञ्च—भवग्रहणेन भवन् विशिष्टभवाना ग्रहणं नायुक्तं। यथा ज्ञानाद्युत्कृष्टाराधनाया श्रीभगवत्यां 'अत्थेगइए दोच्चेणं भवग्गहणेणं'ति, यथा च पर्युषणाकल्पे पर्यन्ते 'अत्थेगइए दोच्चे भवग्गहणे'त्ति। न चोत्कृष्टाराधनाढिमना नरगतिर्नं चान्यत्र सिद्धिरिति विशिष्ट एव द्वितीयो नरभवस्तत्र गृहीतः, तद्वदत्रापि ग्रहणं कृत्वा जमालेरनन्तसंसारसमर्थोक्तिरविरुद्धा। श्रीसमवायाङ्गे नन्दीसूत्रे द्वादशाङ्ग्या विराधनायाः फलमुपदर्शयता त्रिकालमपि संसारानन्त्य दर्शितं। मलयगिरिभिश्च जमालिर्दृष्टान्तीकृतः। फलदर्शकसूत्राणा श्रुत्यापत्तिफलदर्शकत्वात्तद्वाक्यानां तथात्वमविरुद्धमेव ॥ इति उत्सूत्रभाषणकृत्यम्।

## ज्ञानपञ्चविंशतिका (१८)

प्राणाना धारणात् प्राणी, जीवोऽपि प्राणधारणात्। स्वाभाविका साधनोत्थाश्चेति प्राणा द्विधा पुन ॥१॥ आत्मनो ज्ञानरूपत्वाज्ज्ञानं प्राणाः स्वभावजाः। अतस्ते चेतनाः प्राणा नाशादत्र जडाश्रय ॥२॥ इन्द्रियाणि बलान्यायुःश्वासश्चेति दशाप्यमी। औदारिकादिदेहाना—माश्रयेणैव नान्यथा ॥३॥ ज्ञानादिमानतः सिद्धाः, प्राणिनो जीवतत्त्वगा। यत्र देहादि तेषां स्याद्, यद्धेतु प्राणधारणे ॥४॥ मन इन्द्रियहेतूत्थं,

ज्ञानं लोकैरपीष्यते । मतिनाम्नाऽत एवाप्तैराद्यं ज्ञानं प्रकीर्तितम् ॥ ५ ॥ श्रुतं शब्दोत्थितं ज्ञानं, मतं श्रवणसम्भवम् । लोके न परमस्त्यत्र, मतेर्भिन्नत्वसाधनम् ॥६॥ मतेः प्रामाण्यमितरच्चेन्द्रियाणां गुणदोषतः । श्रुतेर्गुणाच्च दोषाच्च, स्यान् मानतेतरे मतेः ॥७॥ वक्तुर्गुणांश्च दोषांश्चाश्रित्य लोकेन सम्मते । मानतेतरते यस्माच्छ्रुतं वक्तृसमुद्भवम् ॥८॥ परं वक्तृविवक्षाया, ज्ञानाय बहुधा मताः । सङ्केता लौकिकैर्विज्ञैस्तेपि तेषां मते श्रुतम् ॥९॥ परं लोकोत्तरे मार्गे, केवलज्ञानभास्वता । जगदालोक्य सर्वज्ञैर्यदाख्यातं श्रुत तकत् ॥१०॥ जिनो भूतोऽस्ति भावी वा, न यो नाख्याति देशनाम् । जीवादितत्त्वविषयां विज्ञाय केवलार्चिषा ॥११॥ जीवादीनां जिनोक्तानां, प्रामाण्यस्य विनिर्णयः । जिनस्यैव समास्थाय, प्रामाण्यं नान्यथा पुनः ॥१२॥ अतः पृथक् श्रुतं वाच्यं, यदतीन्द्रियसाधितम् । परमानसमुद्भूत-मानरूपं न चान्यथा ॥१३॥ जीवाः पुण्यं च पापं च, श्वभ्रं स्वर्गः शिवं समम् । श्रद्धेयं श्रुतवाक्येन, जिनप्रामाण्यमाश्रितैः ॥१४॥ प्रकृष्टपुण्यपापानां, कृतानां फलमाप्यते । प्रकृष्टसुखदुःखानां, स्थानान्येत्यसुभिः स्वयम् ॥१५॥ परं नाज्ञानतो भोगे, हर्षः खेदोऽथवा भवेत् । ततोऽतीतभवे वृत्तं, यत्तज्ज्ञेयं जगद्धितम् ॥१६॥ तदेवं तृतीयं ज्ञानं, रूपिद्रव्यावबोधकम् । तदेवावधिनाम्ना ज्ञैराख्यातं शास्त्रसन्ततौ ॥१७॥ तज्जातीयं मनुष्याणां, तिरश्चां चापि यद् भवेत् । ऊनं समं बृहद् वापि, तदप्यवधिरुच्यते ॥१८॥ मुनीनामन्यक्षेत्रेषु, स्थितानां सर्ववेत्तृणाम् । निराकार्यः संशयो यस्तुर्यज्ञानान्निवार्यते ॥१९॥ अनागमाः सुरा येऽत्र, तेषां संशयभेदनम् । सर्वज्ञो मनसा कुर्यात्, सम्बुध्यन्ते सुरास्ततः ॥२०॥ मुनीनां पूर्वधारित्वात्, संशयाः स्युस्तथा-

विशः। मनसो विस्तृताद्बोधाच्छिद्यन्ते नान्यथा पुनः ॥२१॥ सर्वेषामर्हतां बोध, एव सर्वैर्जिनेश्वरैः। स्यात्कर्तुमत आम्नातं, ज्ञानं मनोविबोधकम् ॥२२॥ एकरूपममिश्रं यत्, स्यात् परेण तु केनचित्। तद्वस्तु केवलं प्रोक्तं, लोकव्यवहारसश्रितैः ॥२३॥ तथाऽत्र यन्न मिश्रं स्या-दज्ञानांशेन केनचित्। तदेव केवलज्ञानं, प्रोक्तं भव्याब्जभास्करैः ॥२४॥ यन्मत्यादीनि चत्वारि, क्षायोपशमिकानि तत्। ज्ञानं स्याद्देशतस्तत्र, ज्ञान पूर्णं तु केवलम् ॥२५॥ समूहं ज्ञानानां प्रतिपदममुं सज्जनगणः, समादायात्मानं सुगतमतमाश्रित्य सुमनाः। स लोपं धर्माणां प्रवितरतु पदानां शुचिविधिं, सदानन्दाब्धौ स्यादनुसमयमाप्तोदितविधेः ॥२६॥ इति ज्ञानपञ्चविंशतिका ॥

## ईर्यापथिकानिर्णयः (१९)

नत्वा नाभिसुतं शक्र-श्रेणिपूज्यं सुधागिरम्।
ईर्यापथप्रतिक्रान्ति-निर्णयोऽथोच्यते मया ॥१॥

आवश्यकादौ क्रियाया आदौ नेर्यापथिकीप्रतिक्रमणनिबन्धः, प्रतिक्रियमादौ तस्याः क्रियमाणतायाः स्वयं सिद्धत्वात्, महानिशीथे ईर्यापथिकीप्रयोजनं दर्शयता तयैव क्रियामात्रस्य शुद्धिप्रतिपादनात्। दशवैकालिकचूलिकावृत्तावपीदमेव जगाद सूरिः। अत एव अनुयोगद्वारेषूद्देशादिविधौ आवश्यके उत्तराध्ययनेषु दैवसिकादिप्रतिक्रमणकालग्रहणानुयोगारम्भादौ नैवारम्भकालीनोक्तेर्यापथिकी। दर्द्दुरश्रावकेण पुष्कलिना च यथाक्रमं आवश्यके भगवत्यां च कृतासेति यत् प्रतिपादितं तत् ज्ञापयति–उपाश्रयप्रवेशे एव कार्येर्यापथिकी। अत एव च कृतसामायिकस्य परः शतशः पदेभ्यो मुनिसमीपमुपागतस्य श्राद्धस्यापि नोदिता तत्प्रतिक्रान्तिरावश्यके। न च साधोरिव कृतसामायिकस्य श्राद्धस्य हस्तशतादतिरेकेण गमागमे 'अरिहंतसमणसेज्जासु' इत्युक्तेः विनेर्यापथिकीं शुद्ध्यति काचिदपि

क्रियेति। सिद्धं अनिवन्ध ईर्यापथिक्या। सामायिकक्रियाया
आदौ प्रसिद्धयनुरोधेन, नत्वक्रियमाणत्वात्। तत्र मुख-
वस्त्रिकाप्रत्युपेक्षणसन्दिशनस्थापनानां सामायिकोच्चारणस्यादौ
क्रियमाणानां पश्चात्क्रियमाणानां च स्वाध्यायसन्दिशनकरणोप-
वेशनसन्दिशनस्थापनानामुभयसम्मतानामप्यनिवन्धादकरणा-
पत्ति। अत एव च सर्वत्र सामायिकोच्चारानन्तरमेवोदितं यदुत—
एवं कृतसामायिकः सामायिकं करोति 'करेमि भदन्ते'त्या-
द्युच्चार्येत्यादि। तथाच न तत् सामायिकयावद्विधिप्रति-
पादकं वचनं, किन्तु साधुसामायिकसूत्रात् श्रावकसामा-
यिकसूत्रस्य पाठभेदादिमात्रदर्शकं। अत एवोत्तराध्ययन-
बृहद्वृत्तौ 'सामायिकं च प्रतिपत्तुकामेन तत्प्रणेतारः स्तोतव्याः
ते च तत्त्वतस्तीर्थंकरा इति चतुर्विंशतिस्तवेन तत्स्तुतिमाहे'ति
वाक्येन सामायिककरणस्यादौ योदितेर्यापथिकी सा न
विरोधभाग्। षड्विधावश्यकसाहचर्याच्च तत्रापि श्रावकविधि-

गतता। न च साधूनां षड्विधावश्यकरूपप्रतिक्रमणादौ सामायि-
कायादावीर्यापथिकी न च सर्वसावद्यत्यागरूपसामायिकोच्चार-
स्यादौ साधुभिः क्रियते केवलः स्तुतिरूपः चतुर्विंशतिस्तवः, तत्र
वर्धमानस्तुतिभिर्देववन्दनस्य सकलसमाजसिद्धत्वात्। ततश्चो-
त्तराध्ययनोक्तेर्यापथिकी चतुर्विंशतिस्तवोपलक्षिता श्रावक
सामायिकस्यैवादौ महानिशीथेपि 'चिइवंदणसज्झायावस्सये'-
त्यत्रावश्यकादौ ईर्यापथिक्युक्तिः श्रावकाश्रितैवेति ध्येयं।
साधूनां प्रतिक्रमणादौ देववन्दनस्यादावेवेर्याप्रतिक्रान्तेः
श्रावकस्य तु सामायिकोच्चारस्यादावेव सा। न च वाच्यं
कथं तर्हि पश्चात् ईर्यापथिकीप्रतिक्रान्त्युक्तिः?। यथाहि
आवश्यके कालग्रहणमृतकपरिष्ठापनागमनचैत्यादावादावीर्या-
पथिक्याः उभाभ्यामपि क्रियमाणाया अनुक्तावपि काल-
मण्डलागतस्य उक्तेर्यापथिकीप्रतिक्रान्तिः, सा गमागमाद्य-
भावेनानापन्नेतिहेतुना, आविर्भावितश्च तत्रैव स तथात्रापि

सामायिकादनन्तरं गमनाद्यभावेन चन्दनालोचनादिक्रिया-
करणे कैवेर्यापथिकीति? स्यादाशङ्केति जगाद सामाचार्यः,
परं नैतावता कार्या नादौ सा, अत एव पञ्चाशकचूर्णौ
अर्थदीपिकावृत्तौ धर्मरत्नवृत्तौ सङ्घाचारवृत्तौ प्रतिक्रमण-
गर्भादिषु चोदितिरीर्यापथिक्या सामायिकस्यादौ। ननु
कथं सोक्ता प्रसिद्धापि? चेत्, विमतिपत्तिनिरासाय, आव-
श्यके श्रीआर्यरक्षितानुसरणार्थं पुष्कलिश्रावकस्यान्यक्रिया-
विधानाभावात् पौषधिकेन सह वार्त्तालापमात्रविधानप्रयो-
जनस्यासिद्धत्वात्। तदवैत्यैदम्पर्यं पौर्वापर्येण सुधीभिः
श्रद्धेया कार्या चादौ सामायिकस्येर्यापथिकीति शं। न च
वाच्यं महानिशीथदशकालिकादिवाक्यानां सामान्यत्वात्
आवश्यकादिवाक्यानां विशेषत्वात् विशेषेण सामान्यस्य
बाधनात् भगवत्यावश्यकोक्तढड्ढरशङ्खपुष्कल्यादिश्राद्-
कृतेर्यापथिक्याश्चरितानुवादत्वात् आवश्यकाद्युक्तसामायि-
कविधेर्विधित्वात् विधिवाक्यस्यैव बलवत्त्वं स्वीकार्यं,
अन्यथा स्थूलभद्रस्य मषीकूर्चकनिवासस्यापनीयेन कर्त-
व्यता न तु भावार्थनिरूद्धसनिवासस्य। उत्तराध्यय-
नवाक्यस्य तु साधुमूलगुणत्वेन श्रावकविधावनुपयुक्तत्वात्
पञ्चाशकचूर्ण्यादीनां न प्रकीर्णकत्वेन पाश्चात्यमुनिप्रणी-
तत्वात् मूलत एव न पूर्वमुनिवाक्यबाधनसामर्थ्यमिति नेव
कथञ्चिदपि युक्तिरत्ननिमार्गोऽयमिति श्रागीर्यापथिकयुक्तिरत्नं।

३०-तथाविधस्यागत्यतमस्य कुयुक्तिविवर्णस्य धुतु-
श्राहितमस्य वचसः श्रवणेऽपि पापारम्भे। यतो न
तावदिदं साधनाय बाधनाय वा प्रभवति, न येषां-
मतिसान्तिः पुनोऽपि सामायिकस्यानिरुद्धतया सामायि-
कानन्तरं कर्त्तव्यतया सिद्धा, न चानन्तगोक्तिः मतिरन्यदर्शिका,
अभक्तार्थादीनां पौष्येराशनादिभिः स्थूलमृगादादिविर-
तीनां स्थूलहिंसादिविरतिभिः प्रतिसन्धापनेः। स्याद्य मन

आदीनां वच आदिभिः करणादीनां करणादिभिश्च। न चोक्तो भवदभिमतोऽपि क्रमस्तत्र, मुखवस्त्रिकाप्रत्युपेक्षणादिविधेस्तत्र स्पष्टतयैवानुक्तेः। तथा च नावश्यकादिवाक्यं सामायिकयावद्विधिप्रतिपादकं। किन्तु गृहसाधूपाश्रयर्द्धिप्राप्तानृद्धिप्राप्तसामायिककारकश्राद्धानां सामायिकपाठदर्शकम्। अत एव 'जाव नियमं जाव साहू पज्जुवासामि'इत्यन्तं क्वचित्, क्वचित् 'दुविहं तिविहेणं' इत्यन्तं, क्वचित्तु 'वोसिरामी'त्यन्तं सामायिकसूत्रं। ततश्च सामायिकपाठभेददर्शनेन तस्य सार्थकता, न तु विधिदर्शकतया। तथात्वे च तदतिरिक्तकरणे भवतामेव विधिवाक्यप्रकोपापत्तेः। ईर्यापथिकीप्रतिक्रान्तिस्तर्हि वन्दनाप्रतिबद्धेति कुतो निश्चितिरितिचेत्?, आर्यरक्षितसूरिवृत्तान्ते ढड्ढरश्रावक आर्यरक्षितमिश्रैस्तथाकरणात्, तथाकरणेऽपि सूरिभिरभिनवश्राद्धतयाऽलक्ष्यमाणत्वात्, श्राद्धावन्दनकरणेनैव तस्य तथात्वावगमात्, विधिरेव तथा प्रतिक्रान्तिर्वन्दनादाविति। न सा तत्र विधिव्यतिरिक्ता चरित्रानुवादमात्रालम्बना। सिद्धे हीर्यापथिकीप्रतिक्रमणे पश्चात् सामायिकात्, विशेषवाक्यता विधिवाक्यता च आवश्यकादीनां स्यादत्र। ततश्चान्येषां सामान्यवाक्यतया चरितानुवादतया च बाध्यता स्यात्, न च तदेव विवादास्पदतया महानिशीथादिवाक्यैर्विरोधादिना अप्राकरणिकत्वात् यावद्विधित्वानभ्युपगमात् सिद्धं। तथा चास्य न विशेषवाक्यता विधिवाक्यता वा न च तथा सति महानिशीथादीनां तदितरतेति स्पष्टैवान्योन्याश्रयताऽपि, तदसिद्धौ तदसिद्धेः तत् सिद्ध्यनन्तरीयकतया च तत्सिद्धेः। अत एव समानोद्देश्याभावात्, क्वैच सामान्यविशेषविधिचरितानुवादवाक्यतया बाध्यबाधकभावतापि। नहि 'इवर्णादेरस्वे स्वरे यवरल'मित्यस्य 'ह्रदहस्वरस्ये'ति बाधकं। तथाऽत्रापि वन्दनप्रतिबद्धेर्यापथिकीदर्शनं न सामायिकात्

पूर्वं क्रियमाणाया ईर्यापथिक्यास्तद्वाक्यस्य वा बाधकं। उत्तराध्ययनगतस्य तु पाठस्य सम्यक्त्वपराक्रमस्य साधुश्राद्धसाधारणतया श्राद्धानालम्बनोक्त्यन्यथ्यमेव वक्तुर्व्यञ्जयति। 'सड्ढी सामायगाणि एमरत्त न हावए' इत्यादीनामनेकेषां श्राद्धालम्बनानां सूत्राणां तत्र तत्र प्राचुर्येणोपलम्भात्। पञ्चाशकचूर्ण्यादिप्रतिपादकमुनीनामप्रामाण्यं न कथञ्चनापि सम्पादयितुं शक्यते विरोधमन्तरा। विरोधश्च परिहृतानाग्रहस्य दूरापास्तप्रसर एव। महानिशीथादिवाक्यना तु पूर्वतमराजीनानाममान्यता मिथ्यामूलिकैव, कथमन्यथा ऽसाध्यं बाधयितुमुद्यतो भवेद्भवभीरुः। तथा च हृदयमिदमत्र यदुत–आवश्यकमहानिशीथदशवैकालिकभगवत्यादिसूत्रपञ्चाशकचूर्ण्यादिप्रामाणिकाग्रेसरमुनिप्रवरवाक्यप्रामाण्यात् प्राक् सामायिकात् ईर्यापथिकीप्रतिक्रान्तिरभ्युपगन्तव्या, अभ्युपगन्तव्या चावश्यकाद्युक्ता सामायिकादनन्तरीयेर्यापथिकी वन्दनाया अर्वाक्कृतनत्वात् तत्प्रतिबद्धैव। तथाच 'इरियावहियाए अपडिक्कताए न किंचिवि काउं कप्पइ' 'ईर्यापथिकीमप्रतिक्रम्य न किञ्चिदपि कुर्यात् तदशुद्धतापत्ते'रिति प्रामाणिकवाक्यचक्रस्य चक्रवर्त्तित्वेन चतुरन्तप्रभुतया वर्त्तित्वे न किञ्चिदपि स्याद् बाधकं शुभदृशां सुदृशां। अत एवाभयदेवसूरिसामाचार्यां ईर्यापथिकीं प्रतिक्रम्य सामायिकोच्चारः स्पष्ट एव प्रतिपादितः। न च वाच्यं नियमानङ्गीकारे क इवातिचारस्तदभावे केयं प्रायश्चित्तरूपेर्यापथिकीति। पौषधोच्चारादर्वाक् भवता तदभावेऽपि तद्दिष्टेर्धजस्तीयमालम्बने। भवन्मते ननु पौषधग्रहणायागते प्रतिक्रान्तायामीर्यापथिक्यां तद्भावापगमे सामायिकोच्चारपरिणामे केव दशा भवता, पौषधसामायिके च स्पष्टमेव न पश्चादीर्योक्तिर्भवतामिति। सहचरितन्यायेन सामायिकात् पश्चात् क्रियमाणाया ईर्याया न तत्प्रतिबद्धता,

किन्त्वावश्यकीयार्यरक्षितचरितोक्तवंन्दनादिसाध्वाश्रयादिप्रतिबद्धैवेति श्रद्धेयं सुधीभिः ।

अत्रोत्सूत्रं भवेत् किञ्चिद्, हब्धे मध्यस्थया दृशा ।
आगमोक्त्येकरागेण, प्रमार्ज्याद्रियतां सुधीः ॥ १ ॥

४ ५ ९ १
वेदर्पिनिधिराजाब्दे, पौषशुक्लदले तिथौ । एकादश्यां जगावेत–दानन्दोदधिरादरात् ॥२॥ इति ईर्यापथिकानिर्णयः ।

---

## सामायिकेर्यास्थाननिर्णयः (२०)

वीरं नत्वा प्रतिक्रान्ते–रीर्यायाः स्थाननिर्णयः ।
युक्त्यागमाभ्यां क्रियते, सुश्राद्धानां हितोद्यतैः ॥१॥

ननु श्रीजैनशासनानुसारिभिः श्रावकैरावश्यकादिक्रियां कुर्वाणैः सामायिकाङ्गीकारे प्रागीर्यापथिकीप्रतिक्रमणं क्रियते। तत्र खरतरसन्तानीयैः प्रेर्यते यदुतैवं यत् क्रियते तन्न शास्त्रानुगतमिति, ततोऽत्र किं प्रमाणं वाच्यं? शास्त्रानुसारिभिरिति चेदत्रोच्यते–प्रथमं तावत् श्रीमहानिशीथसूत्रवचः (१)–से भयवं! जहुत्तविणओवहाणेणं पंचमंगलमहासुअक्खंधमहिज्जिताणं पुव्वाणुपुव्वीए पच्छाणुपुव्वीए अणाणुपुव्वीए सरवंजणमत्तबिंदुपयक्खरविसुद्धं थिरपरिचिअं काऊण महता पबंधेण सुत्तं अत्थं च विण्णाय तओ णं किमहीएज्जा? गोयमा! इरिआवहिअं, से भयवं! केण अट्ठेणं एवं वुच्चति जहा णं पंचमंगलमहासुअक्खंधमहिज्जिताणं पुणो इरियावहिअं अहीए? गोअमा! जे एस आया गमणागमणाइपरिणामपरिणए अणेगजीवपाणभूअसत्ताणं अणोवउत्तपमत्ते संघट्टणअवद्दावणकिलामणं काऊण अणालोइअ अपडिकंते चेव असेसकम्मक्खयट्ठयाए किंची चिइवंदणसज्झायज्झाणाइएसु अभिरमेज्जा तथा से एगग्गचित्ता समाही भवेज्जा न वा. जओ णं गमणागमणाइअणेगअण्णवावारपरपरिणामा-

सत्तचित्तयाए केइ पाणी तमेव भावंतरमच्छिड्डिय अट्टदुहट्टज्झवसिए किंचि कालं खणं विरत्तेज्जा, ताहे तं तस्स फलेण विसंवएज्जा, जया उण कहिंचि अण्णाणमोहमायादोसेण सहसा एगिंदियाणं संघट्टणं परिआवणं वा कयं हवेज्जा तया य पच्छा हा हा हा दुट्ठुकयमम्हेहिंति घणरागदोसमोहमिच्छत्तण्णाणंधेहिं अदिट्ठपरलोगपच्चवाएहिं कूरकम्मनिग्घिणेहिंति परमसंवेगमावण्णे सुपरिफ्फुडं आलोइत्ताणं निंदित्ताणं गरहित्ताणं पायच्छित्तमणुचरित्ताणं निस्सल्ले अणाउलचित्ते असुहकम्मक्खयट्ठा किंचि आयहिअं चिइवंदणाइ अणुट्ठेज्जा तया तयट्ठे चेव उवउत्ते से हवेज्जा, जया तस्स णं परमेगग्गचित्तसमाही हवेज्जा, तया चेव सव्वजगजीवपाणभूअसत्ताणं अहिट्ठफलसंपत्ती हवेज्जा, ता गोअमा! अपडिक्कंताए इरिआवहियाए न कप्पइ चेव काउं किंचिवि चिइवंदणसज्झायज्झाणाइअं फलासायमभिकंखुगाणं, एएणट्ठेणं गोअमा! एवं वुच्चइ–जहा ण गोअमा! ससुत्तत्थोभयं पंचमंगलं थिरपरिचिअं काऊण तओ इरिआवहिअं अहीए, से भयवं! कयराए विहीए तमिरीआवहिअमहीए? गोअमा! जहा ण पंचमंगलमहासुअक्खंधंति (१९–२०) तदुद्देशस्यानुष्ठानविषयतायाः प्रतिपादकं श्रीहारिभद्रीयं श्रीदशवैकालिकवृत्तिवचश्च (२) 'ईर्यापथप्रतिक्रमणमकृत्वा नान्यत्किमपि कुर्यात् तदशुद्धतापत्तेरिति। अत्र श्रीमहानिशीथसूत्रवचने 'किंची चिइवंदणे'त्यादिना यावन्तः समाधिहेतुकाः क्रियाविशेषास्ते सर्वेऽपीर्यापथिकीप्रतिक्रमणमन्तरा नैकान्तेन समाधिहेतुका इति निर्णीय तदप्रतिक्रामकाणां आर्त्तदुःखार्त्ताध्यवसायिता क्रियाफलविसंवादश्च स्पष्टतयोक्तौ। न च सामायिकार्थी समाध्यनाकाङ्क्षी आर्त्तध्यानकल्मिसंवादेष्सुश्च कादाचिदपि स्यात्। अन्यच्चैतदपि स्पष्टीकृतं यदात्महिताय चैत्यवन्दनाद्यनुष्ठानं तदा निःशल्ये-

नानाकुलचेतसा अशेषकर्मक्षयाय कार्यं । सा च निश्शल्यतावस्था सामायिकार्थिनां नेष्टेति नैव शक्यं वक्तुं केनापि इति । तथैव श्रीदशवैकालिकवचनमपि प्रोक्तश्रीमहानिशीथगतस्येर्यापथिक्याः प्राक् प्रतिक्रमणाधिकारस्यैव किमपीतिपदेन अशुद्धतापत्तेरितिपदेन च सम्पूर्णस्य सूचकं, एवं सूत्रे चैते समाध्याद्युद्देशेन सर्वानुष्ठानेषु प्रागीर्यापथिक्याः प्रतिक्रमणं प्रतिपादयन्ती नान्येनापोदितुं शक्ये, अन्यार्थोत्सृष्टस्यान्यार्थेनापवादनीयताया अभावात् । एतेन ये खरतरसन्तानीया एतयोरुत्सृष्टत्वं प्रोच्यावश्यकचूर्ण्यादिवचनानामनवबुद्धतात्पर्या अपोद्यतां प्रतिपादयन्ति तेऽवसेया निरस्ताः, समाधिभावादेरैकान्तिकत्वान्निरपोद्यत्वाच्च । नहि कापि शास्त्रे ईर्यापथिकीप्रतिक्रमणमन्तरेण क्रियमाणेऽनुष्ठाने समाध्यादेः सद्भावो ज्ञापितः, समाध्यादेर्वा कर्मक्षयस्यासाधनत्वं वा ज्ञापितं स्यादेते अपोदिते। एवंच खरतरसन्तानीयैरभिप्रेतेष्वप्यावश्यकचूर्ण्यादीनामर्थेषु विशिष्टातिदिष्ट इति न्यायेन न प्रकृतस्य सर्वेभ्योऽनुष्ठानेभ्यः समाध्यादिहेतुकेभ्यः प्राक् क्रियमाणस्येर्यापथिकीप्रतिक्रमणस्य बाधो भवितुमर्हति । अन्यच्च खरतरसन्तानीयानामभिप्रायेणावश्यकादिवचनैः सामायिकोच्चारादन्वीर्यापथिकीप्रतिक्रमणस्य सिद्धावपि न समाध्यादिहेतवे क्रियमाणस्य प्रागीर्यापथिकीप्रतिक्रमणस्य कथञ्चनापि बाधः, समाध्यादिहेतूनां तादवस्थ्यात् । 'यस्य तु विधेर्निमित्तमस्ति नासौ विधिर्बाध्यते' इति न्यायोऽवश्यमवलम्बनीयः । न च कर्मक्षयाय क्रियमाणानामनुष्ठानानामादौ वन्दनादीर्यापथिकीप्रतिक्रमणस्य समाध्याद्यभावहेतुता, अन्यथैव वा समाध्यादिसद्भावनियमः केनापि प्रतिपादितः, खरतरसन्तानीयैर्वाऽभ्युपगतः । तथा च मेरुगिरिवदप्रकम्प्यमेव कर्मक्षयाय समाध्यादिसहचरितानां सामायिकाद्यनुष्ठानेभ्यः

श्रागीर्यापथिक्याः प्रतिक्रमणमिति ।

ननु कर्मक्षयार्थत्वात् समाप्त्यादिसद्भावस्यावश्यकत्वाच फलशुद्ध्यभिलाषिभिरादौ सामायिकस्येर्यापथिकीप्रतिक्रमणीयस्य न्याय्यत्वात् सत्यपि विधौ क्वापि तन्निषेधस्यासत्त्वाच न निषेध्यं तत्र मोक्षार्थिभिः, परमावश्यकचूर्ण्यादिषु सामायिकोच्चारादनु सामायिकानन्तरमीर्यापथिकीप्रतिक्रमणस्य स्पष्टतयोक्तत्वात्तत्र तत्कथं निषेध्यपदं गायादितिचेद् । अत्राप्युच्यते, शृणु सावधानीभूय–श्रीआवश्यकचूर्णिसावद्यानवश्यकवृत्त्यादिशास्त्राणां भवदभिमतानां मूलरूपा मतान्तरा च, तत्पाठोऽयं–(१) "सामाइयं नाम सावज्जजोगपरिवज्जणं निरवज्जजोगपडिसेवणं च, तं सावएण कथं कायव्वं? सो दुविहो–इड्डिपत्तो अणिड्डिपत्तो अ,जो सो अणिड्डिपत्तो सो चेइयघरे साहुसमीवे वा घरे वा पोसहसालाए वा जत्थ वा वीसमइ अच्छइ वा निव्वावारो सव्वत्थ करेइ सव्वं, चउसु ठाणेसु निअमा कायव्वं, तंजहा–चेइयघरे साहुमूले पोसहसालाए वा घरे वा आवस्सयं करतोत्ति, तत्थ जइ साहुसगासे करेति तत्थ का विही? जइ परपरभयं नत्थि, जइवि केणइ समं विवादो नत्थि, जइ कस्सति ण धरेति, मा तेण अछविअंछिअ कड्ढिज्जति, जइ धारणगं दट्ठूण ण गेण्हति मा भासिअहिति पढमं जइ अ वावारं ण वावारेति ताहे घरे चेव सामातितं काऊण उवाहणाओ मोत्तूणं सचित्तदव्वविरहिओ वच्चति, पंचसमिओ तिगुत्तो इरिआए उवउत्तो जहा साहू, भासाए सावज्जं परिहरंतो, एसणाए कठं लेठुं वा पडिलेहित्तु पमज्जित्तु एव आदाननिक्खेवणे, खेलसिंघाणे ण विगिंचति,विगिंचतो वा पडिलेहिअ पमज्जिअ थंडिले, जत्थ चिट्ठति तत्थ गुत्तिनिरोहं करेति, एताए विहीए गंता तिविहेण णमिऊण साहूणो पच्छा साहुसक्खिअं सामाइअं करेति

'करेमि भंते ! सामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेण जाव साहू पज्जुवासामि'त्ति काऊण, जइ चेइआइं अत्थि तो पढमं वंदति, साहूणं सगासातो रयहरणं निसिज्जं वा मग्गति, अह घरे तो से ओग्गहिअं रयहरणं अत्थि, तस्स असति पोत्तस्स अंतेण, पच्छा इरियावहिआए पडिक्कमइ, पच्छा आलोइत्ता वंदति, आयरियादी जहा रायणिआएत्ति, पुणोवि गुरु वंदित्ता पडिलेहेत्ता निविट्ठो पुच्छति पढति वा, एवं चेइएवि, असति साहुचेइयाणं पोसहसालाए सगिहे वा, एवं सामाइअं आवस्सयं वा करेति, तत्थ नवरि गमणं नत्थि, भणति—जाव नियमं समाणेमि, जो इड्ढिपत्तो सो किर एंतो सव्विड्ढीए एति तो जणस्स सड्ढा होति, आढिता य साहुणो सप्पुरिसपरिग्गहेण, जति सो कयसामातितो एति ताए आसहत्थिपात्तिणेण य अहिगरणं पवड्ढति ताहे ण करेति, कतसामाइएण य पाएहिं आगंतव्वं, तेण ण करेति, आगतो साहुसगासे करेति, जइ सो सावओ ण कोइ उट्ठेति, अह अहाभद्दउत्ति पूआ कया होहित्ति भणति ताहे पुव्वरइअं आसणं कीरति, आयरिआ उट्ठिता अच्छंति, तत्थ उट्ठंतमणुट्ठंते दोसा भाणिअव्वा, पच्छा सो इड्ढिपत्तो सामातितं काऊण पडिक्कंतो वंदित्ता पुच्छति, सो किर सामातितं करेंतो मउडं ण अवणेति, कुंडलाणि णाममुद्दं पुप्फतंबोलपावारगमादि वोसिरति, अण्णे भणंति—मउडंपि अवणेति, एसा विही सामाइयस्सत्ति'। अत्र हि 'घरे चेव सामाइयं काऊणे'त्यत्र श्रावकसामायिकस्य सत्यपि नोक्तमेवं यत्—सामाइयं इरियापडिक्कमणं च काऊणत्ति। चेत् सा सामायिकाङ्गं पश्चात्क्रियमाणेर्यापथिकी तर्ह्यवश्यं, वाच्याऽत्र स्यात्। न च वाच्यं सामायिकरूपेणाङ्गिना अङ्गभूता सा स्वयं सिद्धेति नोक्तेति

चेत्, पश्चाच्चूर्णिकारैर्भणद्भिः सामायिककरणेऽनन्तरं चैत्य-वन्दनप्रतिक्रमणयोः पश्चाद् गुरुवन्दनालोचनस्वाध्या-यादेश्च पूर्वं क्रियमाणाया ईर्यापथिक्या भवदीयाभिप्रायेण सामायिकाङ्गरूपता चेत् कथं पृथगुक्ति सङ्गतिमङ्गति ?। अन्यच्च-कृतं सामायिकं गृहे येन श्रावकेण स साधुसमीप-मागतः 'तिविहेण णमिऊण साहुणो पच्छा सामाइय करेति'त्तिवाक्यं दृष्ट्वा किमिदं वचनमयथार्थयितुमुद्यतो भवसि यत्-कृतसामायिकेन साधुसमीपमित्यापि नेर्याऽऽदौ कार्या, तापन्तरेण च सामायिकं कर्त्तव्यमिति। नैवं चेत्, किं एकोऽपि यद्भावश्यकचूर्णिवाक्यमादौ सामायिकस्येर्यापथा निषेधकमिति। किञ्चात्र 'सामाइयं करेंती'ति वाक्येन सामा-यिकचूर्णेना स्पष्टमुक्ता, सा कथं नानुष्यते?, अनुष्यते चेत्, चैत्यवन्दनाद्यनेकभिन्नक्रियान्तरितायाः आलोचना-गुरुवन्दनादीनां चादौ क्रियमाणाया ईर्यायाः व्यतीत-तस्या सामायिकक्रियया कथं सम्बद्धत्वं तदङ्गत्वं चोद्भाव्यते कथमिति ?। आलोचनगुरुवन्दनस्वाध्यायानां त्वीर्यापूर्वकत्वं नियमेन भणितमिति तदादौ क्रियमाणाया ईर्याया अपि समुत्थितोऽसि ?, आममिति चेद्, भस्मग्रहप्रभाव स्पष्टीभूत इति शासनानुरागिभिर्निश्चेयमिति। अन्यच्च-स्वगृहे पौषध-शालायां वा साध्वभावे सामायिककृतिं प्रतिपादयद्भिः कैरपि नेर्योक्ता, न च सामायिकोच्चारादन्वयुक्ता, 'जाव नियम पज्जुवासेमि (समाणेमि') इत्येतावत एवोक्तत्वात्। तथा च सहचरितैतिन्यायेनापि ईर्या पश्चात् सामायिकस्य पूर्वं चालोचनादेः क्रियमाणा नैव सामायिकेन सम्बद्धा भवितुमर्हति। किञ्चार्थेर चूर्णौ पौषधशालादौ तत्क्रियाया अतिदेशे 'सामइयं आवस्सयं वा करेइ'त्तिवाक्यस्य सद्भावात् किं सामायिकस्य पश्चात् कार्याया ईर्याया अभावे न्यूनतायाः स्वीकारस्तद्वावश्यकस्यापि सदोषत्वस्य

पश्चादीर्यायाः क्रियमाणता तदभावे च न्यूनाङ्गता स्वीक्रियते ? न चेदेवं, किं विधिकृतेन सामायिकेनापराद्धं यत्समानैकवाक्येऽपि तस्य पश्चात् क्रियमाणाया ईर्याया अङ्गत्वमध्यवसायतदन्तरा तस्य न्यूनाङ्गता पूत्क्रियते। पुनश्चात्र चूर्णौ ऋद्धिमत्सामायिकाधिकारे 'सामाइयं काऊण पडिक्कंतो वंदित्ता पुच्छति'त्तिपाठः स्पष्टो विद्यते, स च वन्दनपृच्छारूपस्वाध्यायाभ्यामीर्याप्रतिक्रमणस्य स्पष्टतया सम्बद्धत्वमाख्याति। न चात्र खरतरसन्तानीय इतिनापि प्रतिक्रान्तशब्दः 'वंदित्ता पुच्छती'त्यत्र सम्बद्धो विघटयितुं 'सामाइयं काऊणे'ति स्पष्टतमवाक्यसद्भावेऽपि सामायिकाङ्गतया सामायिकेन योजयितुं शक्तिमता भाव्यं। अन्यच्च गृहादिस्थानकरणीयायाः सामायिकक्रियायाः साधुसमीपे क्रियमाणायास्तस्याः 'जाव नियमं'त्यस्य स्थाने 'जाव साहू'त्ति भणनस्य नवीनत्वसूचनाय यदुक्तं-'सामाइयं करेति करेमि जाव साहू पज्जुवासामित्ति काऊणे'त्येनदन्तं, यथा काऊणेत्यनेन क्त्वान्तं सामायिकस्य विशेषो ज्ञापितः तथैव 'जइ चेइयाई'त्याद्यनेकाधिकारोक्तेरनन्तरं 'पच्छा इरियावहियाए पडिक्कमइ पच्छा आलोएत्ता वंदती'त्यादौ पश्चाच्छब्दस्यासकृदुपयोगः स्पष्टतया सामायिकाङ्गत्वमीर्यायाः प्रतिषेधं विधत्ते इति। नन्वेष आवश्यकचूर्णेरर्थः पश्चात्तस्याः स्पष्टमेवेर्याया सामायिकस्याङ्गतां क्त्वाप्रयोगेण पच्छाच्छब्देन च निषेधयति, विशेषेण च चैत्यवन्दनादयोऽन्तराधिकारा, परमावश्यकवृत्त्यादिषु शास्त्रेषु सामायिकविधौ न चैत्यवन्दनादिका अन्तराधिकाराः उक्तास्तत्र को हेतुरिति ? चेत्। सत्यम्, 'देयं तु न यतिभ्य'इत्यादीनि भगवद्धरिभद्रसूरिपुरन्दराणां वचनानि तदीयग्रन्थेषु स्पष्टं विलोक्यन्ते, ततश्च व्यक्ततरमेतद्यदुत-भगवतां श्रीहरिभद्रादिसूरिवराणां सत्ताकाले चैत्यवासो व्यापको

जात', एतस्योन्मार्गस्य पुष्टीकृतेर्निवारणाय नोक्तास्ते साधुवसतिगतसम्भविचैत्यवन्दनादयोऽधिकारा इति। पर क्त्वान्तादिप्रयोगास्तु विवेकिजनवेद्याः सन्त्येव तत्रापीति। इदमप्यवधेयमत्र धीधनै यत्-श्रीमद्भिरावश्यकचूर्णिकारादिभि श्रावकाणा नियतसामायिककरणस्थानदर्शनावसरे 'घरे आवासय करेंतो'त्ति प्रतिपादितं। तथाच श्रावकाणा आवश्यकतदतिरिक्तसामायिकयोर्न कश्चिद्विशेष। आवश्यकाधिकारे च भगवन्तश्चूर्णिकाराश्चतुर्विंशतिस्तवेनोत्कीर्त्तनायाऽवश्यभाविनीयापथिकीगते कायोत्सर्गे तदनन्तरं च सामानन्तरतया करणीयेत्याख्यान्ति, किन्तु विविधक्रियान्तरितेति पश्चाच्छब्दस्य प्रयोगमकृत्वा प्राप्तकालमित्याहुः। तद्वचश्चैव-'सामायिककव्यवस्थितेन 'पत्तकाल उक्कित्तणादीणिवि अगस्स कायव्वाणि'त्ति। एवमभिसम्बन्धनायोक्तमवधृत्य पश्चाद्धयरत्यारम्भायोक्त, 'तत्थ सामाइयाणतर चउवी सत्थओ भण्णति'त्ति। यदि सामायिकस्वीकारादनन्तरमीर्याप्रतिक्रमण तदङ्गतयाऽवश्यकर्त्तव्यतया सम्मतमभविष्यत् तदोत्कीर्तनाव्याख्याक्रिययोरेकतरदभविष्यत्, भिन्ने च ते स्पष्टे इति। तथोक्त्या ध्वनितमेतत् यदुत-न सामायिकोच्चारादनु तदङ्गतयेर्याप्रतिक्रमणमिति।

ननु पूर्वोक्तागमयुक्तिवादेन सामायिकोच्चारादनु तदङ्गतयेर्याप्रतिक्रमणमिति वचन युक्त्यागमबहिर्भूतमिति युक्त्यागमानुसारिभिरवश्य निर्णेतव्य जायते, पर सामायिकोच्चारात् प्रागपि तत्प्रतिक्रमण तथाविधयुक्त्यागमानुपलम्भात्तद्रूपमेवास्तीति ज्ञायते, यतोऽनृद्धिप्राप्ताना गृहादौ ऋद्धिप्राप्ताना च साध्वादीना स्थानेऽपि सामायिकक्रिया सामान्येन 'सामायिकं करोती'त्येवरूपैव प्रतिपादिता, न तत्र तत्क्रियाया अन्विव प्रागपीर्याप्रतिक्रमणं प्रोक्तमिति सामायिकोच्चारात् प्रागपि प्रतिक्रमणमीर्याया न युक्त्यागमानु

कूलमिति तत्त्रापि नैव कार्यमिति चेत्। सत्यम्, संयमादीनां स्वीकारे श्रावकाणामपि पौषधोच्चारव्रतोच्चारप्रतिलेखनादेववन्दनादिषु प्रतिक्रमणमीर्याया यन्मान्यते कार्यते तत्किमागमोक्तिमाश्रित्य? यतो 'नावाणइसंतारे'इत्यादिषु न तत्प्रतिक्रमणं प्रतिपादितमिति। ननु तत्र 'अरिहंतसमणसेज्जा'स्वित्यादेरस्त्युक्तिरिति। चिरंजीव, त्वद्भणित्यनुसारेणैवार्हच्चैत्योपाश्रयादिष्वागतमात्रेणप्रागेवेर्यायाः प्रतिक्रमणं कार्यमिति सिद्धं। श्रीभगवत्यामप्युपाश्रयमागत्य प्रागेव पुष्कलिना सामायिकादिहीनेनापि 'गमणागमणं आलोएई'त्युक्त्या तदीर्याप्रतिक्रमणं वसतिप्रवेशादनन्तरमन्वेव कृतमिति। पौषधादेः प्रागीर्याप्रतिक्रमणं युक्त्यागमानुसारि तथैव सामायिकं कर्तुकामेनोपाश्रयमागतेन प्रागेव सामायिकाज्ञाकारात् कार्यमीर्याप्रतिक्रमणमितिसुधीभिरूहयमिति। नन्वेवं सामान्योक्तीनां महानिशीथोक्तव्यापकविधेः सद्भावेन सामान्यलक्षणज्ञापकन्यायैः सिद्धेऽपि सामायिकोच्चारात् प्रागीर्याकर्त्तव्यतायाः सामान्यादिविधीनां विशेषादिविधिभिर्बाधसम्भवात् न तस्या निश्चला प्रतीतिरुन्मज्जेत्, सा तु प्रतिपदोक्तविधिना साधनात् स्यादिति, स चेत् स्यात् तदा निराबाधं प्रतीमो यत्—सामायिकोच्चारात् प्रागेव तदङ्गतयेर्याप्रतिक्रमणं कार्यमेवावश्यमव्याबाधकामुकैरिति चेत्। सत्यम्, पूज्यपादैः श्रीदेवेन्द्रसूरिभिः श्रीधर्मरत्नप्रकरणवृत्तौ श्येनश्रेष्ठिसामायिके प्रोक्तो विधिरयं—(४) 'इरियं सुपडिक्कन्तो कडसामाइओ व सुद्धपिहियमुहो। सुत्तं दोसविमुत्तं सपयच्छेयं गुणइ सड्ढो' ॥१॥ 'अयं च श्रावकसामायिकक्रियाधिकरण इति प्रतिपदोक्तो विधिरस्त्येव, परमवधेयमिदं—यत् शास्त्रसूचितानां सामान्यादिविधीनां बाधकलेशेप्यदृष्टे बाधकवाक्यान्तरकल्पनादिभिरनाश्वासकृतिर्न स्वप्नेऽपि सम्यग्दृशां शुभङ्करी स्यात्। ये हि

बाधकसम्भवकल्पनामाश्रित्य सिद्धं विधिं न बहुमन्यन्ते तेषां मार्गान्तरादिकथनानां श्रवणे तु कथं 'तमेव सच्च'-मिति प्रवचनीया सुमार्गार्गला हृदयनिष्ठेत्? । ननु श्रीमद्भिर्देवेन्द्रसूरिभिर्यैः प्रतिपदोक्तविधिना सामायिको-च्चारात् प्रागीर्यायाः करणमुक्तं श्रीधर्मरत्नप्रकरणे श्वेन-श्रेष्ठवृत्ते तैरेव श्रीदेवेन्द्रसूरिभिः श्रीश्राद्धदिनकृत्यसूत्रवृत्तौ सामायिकोच्चारात् पश्चादैर्यायाः प्रतिक्रमणमाख्यातमिति, कथं परस्परविरुद्धस्याधिकारस्यादित्वात्तेषां देवेन्द्रसूरीणां वचः स्याद्बाधास्पदं? किञ्च—श्वेनश्रेष्ठपरिसरोक्तः व्याख्या-र्थिक सामायिकविधिश्चरितानुवादरूप, न च चरितानु-वादस्यानुसरणीयता, अन्यथा श्रीमद्भगवन्महावीरस्येव ज्ञामन-वर्जिता केनापि प्रव्रज्या मातापित्रोर्जीवतोरस्वीकार्या स्यात्, स्याच्च स्वीकार्यं दीक्षाऽऽदानदनन्तरं भ्रात्रादिज्ञातिवचन-मिति। श्रीश्राद्धदिनकृत्योक्त सामायिकविधिस्तु विधिवादरूपः।

विधिवादश्चान्याबाधबाधाभिलाषुकैः सेव्य एवायमिति चेत्।

सत्यम्, श्रीश्राद्धदिनकृत्यादिषु केषांपि शास्त्रेषु न सामायिकाङ्गतया सामायिकोच्चारादनु प्रतिपादितमीर्यायाः प्रतिक्रमणं, पश्चात्तीर्यायाः प्रतिक्रमणं तदालोचनागुरुवन्दन-स्वाध्यायक्रियाणामङ्गत्वं, न विप्रतिपत्तिरस्ति कस्यापि यावद्दूरगमनहस्तशतगमनाद्यागमनस्य गुरुवन्दनादेः प्राक् पैर्यायाः कृतौ। तथा च नैव परस्परविरुद्धत्वं विषयभेदादिनो भगवन्तः श्रीदेवेन्द्रसूरयः। न चैवं निशीथादावीर्यामनङ्गा-मत्यनमानुवादपरस्य चरितानुवादनाम्ना विधेर्दूषितत्वाल्लेशो-ऽप्यस्तीति। ननु सामायिकोच्चारणात्प्राक् तदङ्गतयेर्यायाः प्रतिक्रमणं प्रतिपादितं, परमागमीयार्थाधिकारे वचनस्य प्रामाण्यनिश्चयो वक्तृप्रामाण्यनिश्चयाविनाभावीति विदुषा-मविगीत प्रवादः। यस्मात्तत्र श्रीदेवेन्द्रसूरयः, ते च भवदभिप्रायेणापि श्रीजैनशासनगौरवादितीयासाधारणमाहात्म्यमाय-

मानश्रीतपोगच्छधुराधौरेयाः। प्रस्तुतश्च विवादस्तपोगच्छखरतरसन्तानीययोरित्यस्मिन् विवादे व्यतिरिक्तगच्छीयप्रामाणिकप्रकाण्डपुरुषसूक्तिरेव विश्वसनीयोभयेषां, ततः सैव प्रमाणतयाऽत्रोदाह्रियतामितिचेत्। शृणु, प्रथमं तावदुपाश्रयमागतस्य सामायिकस्य स्याच्चिकीर्षा न वा स्यात्तथापि तस्येर्यायाः प्रतिक्रमणमावश्यकमिति। तत्र च श्रीभगवतीसूत्रोक्तः पुष्कलीदृष्टान्तो यथा श्रद्धालुभिरनुसरणीयस्तथैव श्रीआवश्यकचूर्ण्याद्युक्तौ ढड्ढरश्राद्धश्रीआर्यरक्षिताचार्यदृष्टान्तौ श्रीतोसलिपुत्राचार्यवसतिप्रवेशाधिकारगतावनुसन्धेयौ। तथाच 'अरिहंतसमणसेज्जा'स्वित्यादिना विधिमुखेनावश्यकचूर्ण्याद्युक्तढड्ढरादिश्राद्धदृष्टान्तेन चरितानुवादविधिमुखेनोपाश्रयमागतमात्रस्य श्राद्धस्येर्याप्रतिक्रमणनियमं न कोपि भगवज्जिनेश्वरोक्ताकलङ्कान्याबाधरसिकः प्रागेवेर्यायाः प्रतिक्रमणस्यापलापं विपर्यासं वा कर्त्तुमुत्सहेत। भगवन्तो देवेन्द्रसूरयश्च सुविहितसंविग्नगीतार्था निश्चिता इति तद्वचस्य तथाकारोऽभिनिवेशसहकृतमिथ्यात्वोदयवत्ताया एव 'कप्पाकप्पे'त्यावश्यकनिर्युक्त्युक्तेर्लक्षणमिति। ननु द्विविधेष्वाज्ञादृष्टान्तग्राह्यरूपेषु पदार्थेषु यदाऽऽज्ञासिद्धेषु सर्वेष्वपि ये दृष्टान्तग्राह्यास्ते दृष्टान्तेन दृढीकृत्य पश्चात्तेषां श्रद्धादार्ढ्यायागमोल्लेखो दर्शनीयः। अत एव व्याख्याकारैरनुयोगावसरे प्रागेव युक्तयो दर्शिताः। तद्वदत्रापि भगवतां श्रीदेवेन्द्रसूरीणां वचसः श्रद्धानात् प्राग्युक्तिं प्रति पर्यनुयुञ्जामहे। आज्ञाग्राह्यताऽपि गच्छभेदकालात् प्राक्तनानां शासनधुरन्धराणां वचसि यादृशी भवेत्तादृशी गच्छभेदपक्षपातिनां वचसि नैव निश्चलतरा स्यादिति। सत्यम्, प्राक्तावत् श्रीमहानिशीथादिसिद्धान्तवचनान्याज्ञाग्राह्यरूपाणि प्रागीर्यायाः सामायिकस्य सिद्ध्यर्थं दर्शितानि, दृष्टान्तान्यप्यावश्यकादिगतानि दर्शितान्येव। तथाच भग-

तस्य विशुद्धिः तदुपघातिकर्मापगमेन निर्मलीभवनं तां जनयतीति। अत्रेदमवश्यमवधेयं यद्—यदि भगवतां वादिवेतालशान्तिसूरीणां सामायिकोच्चारात् प्रागीर्यायास्तत्सहचारिणश्चतुर्विंशतेश्च कर्त्तव्यता नेष्टाऽभविष्यदभविष्यच्च सामायिकोच्चारादन्वीर्यायास्तत्सहचारिणश्च चतुर्विंशतिस्तवस्य कर्त्तव्यतानुमता, तदा 'प्रतिपन्नसामायिकेने'त्यवक्ष्यत्, नैव 'प्रतिपत्तुकामेने'ति। इत्येवं शास्त्रसिद्धं मतमनुमनुते यो भवेन्नासुदृग्वान्, श्राद्धः पूर्वं विशुद्ध्यै फलमयितुमनाः माक्तु सामायिकस्य। कुर्यादीर्यां विशुद्धापरकृतिषु यथा पौषधे सद्व्रतेषु, लोके पक्वान्नपक्तेरनु नहि भवति क्षालनं भाजनानाम् ॥१॥ शास्त्राणां वाक्यैर्विदितमिह कृतं साधनमलं, श्राद्धाः सन्मार्गा विदधत उदारां कृतिमिमाम्। ईर्यायाः पूर्वं सकलनृपकृतौ यद्वदुदितां, तर्कैस्तत्सिद्ध्यै शृणु हि सुमनो मत्प्रकथितम् ॥२॥ ननु कुस्वप्नदुःस्वप्नैर्यैपणापारिष्ठापनिकानद्युत्तारगमनागमनसूत्रोद्देशसमुद्देशादिगतिव्याघात्यपशुकनस्खलनप्रभृतिषु विविधक्रियासु यथा पश्चादेर्यायाः प्रतिक्रमणं सर्वैरपि शास्त्रानुसारिभिरनुमतमाचरितं च, तथाऽत्रापि सामायिकोच्चारमहाव्रतोच्चारादन्वेव प्रतिक्रमणमीर्याया अनुमन्तव्यं कर्तव्यं चावश्यं भवतीति चेत्। सत्यम्, प्रतिबन्द्यैव तावदत्रोपस्थीयते तर्हि भवद्भिरपि प्रतिलेखनादेववन्दनपौषधोच्चारमहाव्रतोच्चारसामान्यव्रतोच्चारप्रभृतिषु क्रियासु विविधासु किमितीर्यायाः प्रतिक्रान्तिः प्रागेवानुमन्यते क्रियते कार्यतेऽपि चेति ?। नन्वत्रेर्यायाः प्रतिक्रान्तेः साम्येऽपि पूर्वपश्चात्स्थानभेदस्तदुद्देशभेदकृत इति। ननु कोऽयमुद्देशभेदो विधानेषु विविधेषु ? इति पर्यनुयोगे उत्तरमिदमस्माकं यदुत—यासु क्रियासु चित्तविशुद्धिसमाधिस्थैर्यादि विधित्सितमीर्यया भवति, तास्वादावेवेर्यायाः प्रतिक्रान्तिरभिमन्यते क्रियते कार्यते च। यत्र

तु प्रायश्चित्तरूपेण लग्नानां दोषाणामपनयनार्थं सा भवेत्, तदन्ते एव तत्र साऽऽचर्यते। यतश्चित्तस्य विशुद्ध्यादि शरीर क्रियाभ्यः कार्यं, अन्यथा सकृच्चवरभाजनभोजन मिव क्रियाया फले शुद्धौ समाधौ धर्म्यादिध्याने च समूलोच्छेदकस्य दुष्प्रणिधानस्य दुर्निवारः प्रसरः स्यात्। प्रायश्चित्तं च लग्नेष्वेव दोषेषु तत्पापनिवारणार्थं दीयते, न तु दोषाणामासेवनावसरे, सदनदोषस्यैव प्रायश्चित्ता-ऽर्हत्वात्। अतीतानामेव च दोषाणां निन्दागर्हादिविधि-रुपामेव प्रायश्चित्तग्रहणार्हत्वादिति। समाप्तात्र प्रतिवन्दी, यत सामायिकोच्चारादनन्तरं क्रियमाणेर्या न सामायि-कोच्चारस्य प्रायश्चित्तरूपेति वावदूकेनापि शक्यं वक्तुं, पारिशेष्याच्चेत् समाध्यार्थं कर्तव्येत्यभिमन्यते तर्ह्यनायासेन मस्माकं सिद्धिपदवीमध्यास्त प्रागेवेर्यायाः सामायिको-च्चारात् प्रतिक्रान्तिरिति। सिद्धः प्राग्देवात्, प्रागी-र्यायाः प्रतिक्रम । युक्त्या युक्त्यागमैः सिद्धेऽर्थे सम्यक्त्वी न संशयी ॥१॥ इति सामायिकेर्यास्थाननिर्णयः ॥

## ईर्यापथपरिशिष्टः (२१)

न च वाच्य मूले आवश्यकपट्कस्यानुक्रमेण सत्वा-त्तत्सम्बद्धैव व्याख्या युक्ता, नत्वेवं व्याख्याकारोक्तरीत्या, आवश्यकक्रमभङ्गप्रसङ्गात्। एवं वन्दनकावश्यकव्याख्या-वतरणे 'स्तुत्वाऽपि तीर्थकरान् गुरुवन्दनपूर्विकैव तत्प्रति-पत्तिरिति तदाहेति यदुक्तं' तदपि वन्दनकस्य तृतीया-वश्यकत्वादयुक्तमिति। यतः मूले आवश्यकपट्कस्यानुक्रमेण यद्यप्यस्ति सत्ता तथापि क्रियाकाले श्रावकैः प्रथममी-र्यापथिकीं कृत्वा क्रियमाणस्य चतुर्विंशतिस्तवस्य संदिश-नादौ क्रियमाणस्य च लघुवन्दनकस्य प्रथममुपस्थितस्य

मूलोक्तफलवत्ताज्ञापनायैवं सम्बन्धयोजना, सति तथाफलकत्वे तयोरावश्यकयोर्द्वितीयतृतीययोः सिद्धैव तथा फलवत्ता । अत एवोच्यते श्रावकमाश्रित्यानयोर्द्वयोरपि तत्त्वतः सफलता । अत एव च सामायिकावतारे आलोचनादीनि च सामायिकवत एव तत्त्वतो भवन्तीत्यादिनाऽनियमितसामायिकवतः सामायिकाधिकारोऽत्रास्तीति ज्ञापितं, तस्य च तथा फलकत्वे सर्वसामायिकस्य तथा स्वयं सिद्धैव । सामायिकव्याख्यायां सावद्ययोगविरतिरित्येव व्याख्यातवान् न तु सर्वसावद्ययोगविरतिरिति । अत एव चारित्रफलसूत्रादस्य भिन्नफलकता न्यूनफलकता च सूत्रोक्ता सङ्गच्छते । सिद्धैव चैवं प्रागीर्यापथप्रतिक्रान्तिः पञ्चाशकचूर्णौ श्रीयशोदेवसूरिभिः पश्चिमयामे रजन्याः सामायिककरणे श्रीदेवेन्द्रसूरिभिः स्वाध्यायाधिकारे धर्मरत्ने 'इरियं सुपडिकंतो कडसामाइओ'इत्यादि श्रीधर्मघोषपादैः सङ्घाचारवृत्तौ 'सामायिकादि विदधीत ततः प्रभूतं, तत्पूर्वमत्र च पदावनिमार्जनं त्रि'रितिवाक्येन स्पष्टं बबन्धिरे, न त्वनाभोगेनाग्रहेण वा । न चास्ति क्वचनापि वचो वन्दनालोचनारहितं पाश्चात्येर्यापथिकीयुक्तं, यद् दृष्ट्वा स्यात् कस्यापि व्यामोहः, प्रत्युतावश्यकचूर्णिर्या पूर्वधराचार्यैर्विहिता, यां च मूलटीकाकारतया निर्दिशति भगवान् हरिभद्रसूरिः, त एव सामायिकविधानमूचाना अनूचाना ऊचुरेवं—' एयाए विहीए गंता तिविहेण साहुणो नमिऊण पच्छा साहुसक्खियं करेइ 'करेमि भंते ! सामाइयं सावज्जं जोगं पच्चक्खामि जाव साहू पज्जुवासामि' त्ति काऊण जइ चेइयाइं अत्थि तो पढमं वंदति, साहुसगासाओ रयहरणं निसेज्जं वा मग्गइ, अह घरे तो से उवग्गहियं रयहरणं अत्थि, तस्स असति वत्थस्स अंतेणं पमज्जइ पच्छा इरियावहियाए पडिक्कमति पच्छा आलोएत्ता वंदति

आयरियाई' प्रेक्ष्यैव वचोऽनूचानीयं कः खलु प्रेक्षावान् न प्रेक्षेत ईर्यापथिकी प्रोच्यमाना वन्दनालोचनादिना प्रतिबद्धा, न तु सामायिकेन। यतोऽत्र व्यवधानं व्यक्त चैत्यवन्दनरजोहरणादिमार्गणप्रमार्जनैरव्यवधानं च वन्दनादिभिः, चैत्यवन्दनादेश्चाङ्गत्वान्नाव्यवधायकता लेशेनापि। सामायिकवत साधुसमीपे पुन सामायिकोच्चारक्रियाऽपि न परःशतेभ्य पदेभ्य आगतस्य शुद्धयति, समयव्यापोपापत्तेः। तत' स्त्रीमार्गमीक्षित्वैतदविसंवादिवचनं यत्मागेवेर्यापथिकी सामायिकोच्चारात् तदनन्तरं चैत्यवंदनं विधायालोचनाद्येव सेति। ततश्चावश्यकवृत्तिपञ्चाशकवृत्तियोगशास्त्रवृत्यादिष्वपि तदनन्तरीयेषु ग्रन्थेषु निरद्धापि यत्किञ्चित् प्रयोजनमुररीकृत्य विरहय्य चैत्यवन्दनादिविधान आनन्तर्येण प्रत्यपादि, परं सहचरितासहचरितयोरिति न्यायेनालोचनादिप्रतिबद्धैव सापीति सम्यग्मध्यस्थया धियालोकनीयं धीधनैः। विचार्यं च विचक्षणैः समग्रेषु खरतरैर्दीयमानेषु पाठेषु ईर्यापथिकीप्रतिक्रमणाद् भिन्नमालोचनं उभयत्र च वन्दनं, येन पौषधिकवन्दनवत् पूर्वकालीनः सामायिककृता विधेयो वन्दनविधिः प्रकटो भवेत्, भवेच्च तेनापि ईर्यापथिकीक्रियाया प्रतिबन्धो वन्दनालोचनादिना, न तु सामायिकेन। अन्यच्च सामायिकादनन्तरं तत्प्रतिबद्धा चेदीर्यापथिकी तर्हि सापि तत्र गमनादिकमन्तरा किंप्रत्यया?, प्राक् कृतगमनादिजा चेत्, सुष्ठुतरां प्रागेव कार्या, तमन्तरा क्रियायाः अशुद्धेः। न च वाच्य सामायिकोच्चारात् प्राग् व्रताभावात् कैव? तद्वाचेति। यत पौषधोच्चारे यत्प्रभवा सा प्राक्क्रियते तथैवात्र वन्दनायां पौषधिकैः सह नमस्कारानन्तर चिकीर्ष्यमाणे आलापमात्रे च क्रियमाणा मा किंप्रत्ययेति विचार्यं विवेकचक्षुष्कैः। आचारप्रत्यया चेदत्रापि तथा। न च

# श्रुतशीलचतुर्भङ्गी (२२)

यशोभृतजगज्जाल, स्याद्वादार्थनिदेशकम् ।
नत्वा जिनं श्रुतशील-चतुर्भङ्गीं विचारये ॥१॥

अथसंतावदिदमवधेय यद्-यथा श्रुतशीलचतुर्भङ्ग्या देशाराधकदेशविराधकसर्वाराधकसर्वविराधकता प्रतिपादिता भगवद्भिर्भगवत्यां, तथा श्रीज्ञातधर्मकथासु दावद्रवज्ञाते अन्यस्वतीर्थिकाक्रोशादिकानामसहनसहनयो साधुसाध्वीश्रावकश्राविकाणां देशविराधकदेशाराधकसर्वाराधकसर्वविराधकत्वैश्चतुर्भङ्गी स्पष्टं सपष्टिता। किञ्च-औपपातिकोपाङ्गादौ असंयतादीनामनाराधकतोल्लिखिता, अन्यतीर्थिकमतानि चार्वाकेर मिथ्यात्वरूपेण निरूपितान्येव भगवद्भि, औपपातिकेऽन्यमतान्यनन्यमदगाचारतपोऽभिग्रहयुतान्यनाराधकतयोक्त्वा अकामब्रह्मचर्यादीनि नाराधकेतरतया लौकिकप्राधान्यात् नोक्तानि। एवं चेत् श्रीमद्भिरभयदेवसूरिवर्यैर्बालतपस्वी प्रथमभङ्गे देशाराधकरूपे धृत । सत्यं प्रोक्तः, परं प्रौढरीत्या नाङ्गीकृत', किन्तु गीतार्थानिश्रितः साधुरेव सम्मतस्तत्र भङ्गे। अत एवेत्यन्ये इत्युक्त्या स्वस्वारस्यमाविश्चक्रुः। अन्यथा द्वितीयविकल्पोदाहृतिगत इव विकल्पमाख्यास्यन्। सम्यग्दर्शनादित्रितयरूपमोक्षमार्गस्य चारित्रस्याराधनादेव देशाराधकत्व। एकं हि त्रितयस्य देश इति न सुधियामगोचरं। अन्यतीर्थिकानामनाग्रहवत्तया स्वस्वाचारानुष्ठायिनां मार्गानुसारिताऽनाग्रहमूलेत्युक्तेर्न तत्तन्त्रोक्ता क्रिया देशाराधकताया मूलं, सयमाद्बलतामन्तःशल्यवन्मरणादीना बालमरणत्वात्तद्वतां च बालतपस्वितया तत्त्वार्थवृत्तौ स्पष्ट परिभाषणात् कुलवालकादीना बालतपस्वितया रुद्रिरपि, देशाराधकता तूपरततया। यद्यप्यविज्ञातधर्मत्वेन न यथार्थोपरति, ज्ञात्वाऽभ्युपेत्याकरणस्यैवोपरतिविरत्यपरपर्यायत्वात्, पर

श्रुतसम्पद्रहितत्वेनाश्रवादिपदार्थानां तथारूपहेयत्वाद्यज्ञानेऽपि हिंसादिविपाकाद्याकर्णनेन तद्विरतेर्भावात्। एवं चारित्राराधना देशाराधकताहेतुः। न च वाच्यं 'नाणेण विणा न हुंति चरणगुणा' इत्युक्तेर्नाज्ञानिनश्चारित्रमिति। श्रमणानामपि सकाङ्क्षादीनामपि सद्भावोक्तेस्तथा हेयत्वादिज्ञानहीनानामपि हिंसादिविपाकज्ञानयुक्तोपरतिमतां चारित्राभ्युपगमात्, अन्यथा सम्यग्दर्शनादित्रयरूपस्य मोक्षमार्गस्यांशरूपस्य चारित्रस्य देशतामभिप्रेत्यैव देशाराधकताया भावात्। मिथ्यादृशां तु चतुर्थभङ्गपतितता स्पष्टैव। न च मिथ्यादृशामुपरतिश्चारित्ररूपा, येन सा सम्यग्दर्शनादित्रयरूपस्य मोक्षमार्गस्य देशो भवेत्, स्याच्च तद्वतां तेन देशाराधकता, बालशब्देन सर्वथा मिथ्यादृग्ग्रहणे तु न तदुपरतेर्मोक्षमार्गस्य देशता, अन्यथाऽभव्यानां भव्यानामपि चानन्तशो ग्रैवेयकाप्त्युचितचारित्रसद्भावात् सुतरां देशाराधकापत्तेः, देशाराधकस्य चाराधकताहेतुत्वेव कालान्तरे सर्वाराधकताप्राप्तेर्लघुबीजादपि महाबीजोद्गमवन्नियमभावात्। अत एव भव्यद्रव्यचारित्राणां मोक्षहेतुकभावचारित्रप्राप्तिहेतुता श्रीहरिभद्राचार्यैरुदाहृता पञ्चवस्तुके या सा सङ्गच्छते। अत एव च गीतार्थानिश्रितागीतार्थसाधुस्तत्त्वतो द्रव्यचारित्रयुक् प्रथमदेशाराधकतापक्षे पक्षान्तरतयोदाहृतः सङ्गच्छते। न हि गीतार्थानिश्रितागीतार्थस्य तथाभावचारित्राभावेऽपि मिथ्यादृक्त्वनियमः, न चातथात्वे बालतपस्वीत्यत्र बालशब्दो मिथ्यादृक्त्वपर्यवसितः शोभते, समानत्वाभावेन पक्षान्तरत्वाभावात्। वस्तुतः चतुर्विधस्यापि सङ्घस्य यथा परतीर्थिकाक्रोशादिसहनं देशाराधकतासाधनं तद्युक्तमेव च स्वसाधर्मिकाक्रोशादिसहनं सर्वाराधकताहेतुस्तथाऽत्रापि तथाविधचारित्राराधनं देशाराधकताहेतुः तद्युक्तमेव च विज्ञातधर्मत्वं सर्वाराधनाहेतुः। प्रथमस्य तथाविधहेयत्वादि-

ज्ञानराहित्यं द्वितीयस्य गुरुपारतन्त्र्याभावोऽविज्ञातधर्मत्वे हेतुरिति पार्थक्यं। ओघश्रद्धामत्र द्वयोरपि चारित्रस्य देशाराधकतायाश्च हेतुः, पूर्णाराधकताया तस्यावस्थानमावश्यक देशस्यैवलक्षणात्। न हि वस्त्रवाणिज्य रत्नवाणिज्यस्यांशः, लघुमहद्रत्नवाणिज्ययोरंशांशीभावस्तु स्पष्ट एव। अपुनर्बन्धकानां तत्तत्तन्त्रोक्तक्रियाणां मार्गानुसारित्वमनाग्रहसाम्राज्येन स्यादपि, न सा परमनुमोदनीयाः, अनुमोद्यास्तु जैन्यस्तदनुसारिण्यो याऽन्यतन्त्रोक्ता, अन्यथा शैवलादिभक्षणस्य नियोगस्य सपञ्चवधस्यानुमोदनीयत्वापातात्। अनाग्रहाणां जैन्योऽपि क्रियाः सम्भवन्त्येव, अनेकेषां साधूनामवगाहेन सम्यक्त्वोत्पत्तिश्रुतेः। श्रीनवपदप्रकरणे 'मिथ्यात्वस्थानाग्रहो गुण' इत्युक्तेर्न मिथ्यात्वमनुमोद्य, पूर्णविरत्याऽर्धान्न्यूनस्य देशत्वात्। त्रयापेक्षयैकस्य तथात्वे द्वितीयस्मिन् भङ्गे विज्ञातधर्मा अनुपरतः। स चाविरतिसम्यग्दृष्टिः, सम्यग्दर्शनस्य सहगतत्वनियमात्। यद्यपि अत्र विज्ञातधर्मशब्देन ज्ञानस्य प्राधान्यं, दर्शनसूचकस्य तु शब्दमात्रस्याप्यभाव, पर गुणस्थानेषु पुरुषप्रकारेषु च नैकोऽपि तथाविधो भेदोऽस्ति, यत्र ज्ञानप्राधान्येन सयोगिवत् ज्ञानवत्तामात्रेण भिद्येत। अनुपरतापरपर्यायासंयतेन विशिष्टं चतुर्थं अविरतिसम्यग्दृष्टिगुणस्थानं तद्वांश्च पुरुष एव लभ्येत, ततो ज्ञातधर्मानुगताविरतिमान् दर्शनप्राधान्ययानेवोदाहृत। अस्ति हि सम्यग्दर्शनज्ञानयोः समा व्याप्तिः। नहि कोपि विज्ञातधर्मो ज्ञानहीन न वा ज्ञानयुक्तः सम्यग्दर्शनहीनः। अत एव च विज्ञातधर्मत्वेन सम्यग्दर्शनज्ञानयोरुभयोर्ग्रहण। तत एव च सम्यग्दर्शनादित्रयरूपस्य मोक्षमार्गस्य सम्यग्दर्शनज्ञानरूपांशद्वयं विज्ञातधर्मत्वेन गृहीतं, त्रयापेक्षया द्वयस्याधिकत्वार्धत्वादेव देशविराधकताव्यपदेशो पि। रूप्यकादिष्वपि पादार्धपरि-

माणयोः पादार्धरूप्यकाह्वयोरपि सपादार्धस्य पादोनरूप्य-
कत्वेनैव व्यवहारात्। सूत्रेऽपि अर्धाधिक एव देशोन-
पूर्वकोट्यादिशब्दव्यवहारात्। न हि वर्षादीनां मानप्रसङ्गे
पल्यासङ्ख्यभागादिप्रसङ्गे च तन्न्यूनताव्यपदेशः। एवं च
सम्यग्दर्शनज्ञानरूपांशद्वयावाप्तौ स्यादेवोनता आराधना
यथार्था। अत एव प्रथमे भङ्गे चारित्रमात्रेणाराधकताया
देशत उक्तावपि अत्रांशद्वयप्राप्तौ न विराधकतोक्तिर्देश-
तोऽसंगता। यद्यप्यत्र विराधकशब्दसाम्राज्यं, शास्त्रे च
विराधकता प्रतिज्ञातार्थस्यानुज्ञातार्थस्यापालने एव रूढा,
तद्वतां न सौधर्मातपरतो देवत्वेनोत्पादः, परं नात्र तथा-
विधा विराधकता ग्राह्या। अत एवानुपरततामात्रमेव
देशविराधकताहेतुतयोपन्यस्तं, विवृतं च प्राप्तौ तस्या-
पालनात्तदप्राप्तेर्वेतिवाक्येन गृहीतव्रतोऽगृहीतव्रतो वा सम्यग्द-
ष्टिर्ग्राह्य इति। तथा च द्रव्यचारित्रवतां भव्यमिथ्या-

दृशामभव्यानां चानवमग्रैवेयकोत्पत्तावपि न देशविरा-
धकता न च देशाराधकता किन्तु सर्वविराधकतैव केवला,
देवत्वावाप्तिकारणकाराधनाविराधनयोरत्राप्रासङ्गिकत्वात्,
औपपातिकज्ञातादिवचनवत् मोक्षमार्गस्यैवाराधकताया विराध-
कताऽनाराधकतापरपर्यायायाः प्रसङ्गात्। अत एव चाद्य-
भङ्गे न द्रव्यलिङ्गिमिथ्यादृगुदाहृतिः। वचनव्यवस्थया
तत्प्रणेतॄणां सर्वज्ञत्वं ज्ञापयित्वा देशनाविचित्रतादर्शनं
परबोधाय अपुनर्बन्धकानां चैत्यवन्दनप्रत्याख्यानचारित्रा-
दियोग्यतोक्तिरपि, अनाराधकार्थकविराधकपदसद्भावाच्च
न प्रतिज्ञातानुज्ञातविराधनाकारकवद्विराधनाफलवत्त्वनिय-
मोऽत्र। किञ्च–सम्यक्त्वाद्यप्राप्तिर्यथाऽनन्तानुबन्ध्याद्युदयेन
प्रतिबध्यते, तथैव प्राप्ततत्तद्गुणभ्रंशोऽपि तत्तत्प्रतिबन्धक-
जनित एव। न हि जैने दर्शने प्रतिबन्धकप्रतिघातककर्मणां पार्थ-
क्यं, प्रतिज्ञातानुज्ञातार्थाकरणविराधनायां दुर्गतिफलं तु

तादृशा सङ्क्लेशभावनियमात्। अत्र देशविराधकतायां सङ्कल्पमूलकादितरान्यतरारम्भोदयकृता भावस्य विवक्षा, तेन अप्राप्तविरतीनां बाधितविरतीनामुभयेषामुदाहृतिर्ग्रन्थकृता। यथा गुणस्थानेषु तत्तद्गुणस्थानप्राप्तिमन्तरा न तत्तद्गुणस्थानप्रत्ययिकबन्धोदयादिव्यवच्छेदः किन्तु बन्धादिसम्भवमेव, तदपि च गुणस्थानानां तेषामप्राप्तौ तथैव प्रतिपातेऽपि तेभ्यः, न च तयोर्विशेषो बन्धाद्यधिकृत्य, तथाऽपि विरत्यप्राप्तिनिमित्तं देशविराधकत्वं विरतेरप्राप्तौ प्रतिपाते च समानमेव, अनाराधकफलार्थकविराधनाशब्द एव ग्रहीतुमुचितोऽत्र, यथौपपातिकादौ आराधकानाराधकपदद्वयमेव तथाऽत्रापि। एवं चाविरतसम्यग्दृष्टीनामविरत्यपेक्षया विराधकानाराधकपर्यायत्वात्। न चैवं विराधना जिनतदागमाशातनाहेतुकविराधनावदनन्तफला। तथा चामविपक्षगर्भविरतीनामनाराधकत्वापरपर्यायाया विराधनायाः

सम्भवेऽपि (न) क्षतिः। अत एव च सम्यग्दर्शनात्रितयरूपस्य मोक्षमार्गस्य सम्यग्दर्शनज्ञानरूपांशद्वयप्रतिपत्तावपि चारित्राप्रतिपत्तेरेकांशस्य विराधनादेशविराधकता टीकाकृतोक्ता। न च वाच्यं देशद्वयप्रतिपत्तौ देशद्वयाराधकतामनुक्त्वा देशविराधकोक्ता, यतो यथा मासस्यारम्भेऽतीतदिनसङ्ख्यानं, अर्धमासाधिके गते न्यूनदिनसङ्ख्यानं तथात्रापि अंशद्वयप्रतिपत्तावपि तृतीयस्याप्रतिपत्तौ विराधकतोक्तिः। ज्ञातधर्मकथासूत्रेऽपि मोक्षमार्गप्रतिपन्नश्रीसङ्घस्याक्रोशादिसहनेऽपि आराधनात् परतीर्थिकाक्रोशादेरसहनेंऽशेनानाराधकत्वादेव देशविराधनोक्तिः। भगवतीसूत्रेऽपि 'अणुवए विन्नायधम्मे' इत्युक्तं। ततोऽनुपरतत्वेनैव विराधकता दर्शिता। विज्ञानं चात्र धर्मस्य यथावस्थितश्रद्धानरूपमेव गृहीतं, ततोंऽशद्वयस्य ध्रुवैव प्राप्तिः, अन्यथा केवलोऽवबोध एव चेद् गृहीतः स्यात्

स्याद्देशाराधकतैव, परं श्रद्धानहीनस्य वोधो न सम्यग्वोध इति न केवलस्य ज्ञानस्य सम्भवो, न च तन्मात्रेण देशाराधकताऽपि। अत एव चाद्यभङ्गे 'उवरए अविन्नायधम्मे'इत्येवमुक्तं, अन्यथा 'उवरए अविन्नायधम्मे'इत्युक्तं तथा 'अणुवरए विण्णायधम्मे'इत्यप्यवक्ष्यत, द्वितीयेऽपि वा तद्विपरीते भङ्गे देशाराधकतैवाकथयिष्यत्, किन्तु या द्वितीये भङ्गे देशविराधकतैवोक्ता सा विज्ञानस्य श्रद्धानपूर्वकतामेवाभिप्रेत्य, देशता तूभयत्रापि त्रितयांशापेक्षयैव। अत एव चाद्ये भङ्गे जिनागमसामाचारीमात्रेणैव देशाराधकता, अन्यतीर्थिकसामाचार्या मोक्षमार्गस्यांशत्वाभावात्। एवं च भगवता श्रीमहावीरेण वेदपदार्थानां याथार्थ्याविर्भावनेपि तत्त्यागेन जैनागमेष्ववतारणं विहितं श्रीगौतमादीनां। स्कन्दकादीनां तत्तत्सामाचारीणां त्यागश्चैवमेव सङ्गच्छते। न ह्यंशेनापि परतीर्थिकक्रियाया अंशेनाराधनाहेतुता, उत्कृष्टतदाचारवतां परिव्राजकतापसादीनामौपपातिकादिषु परलोकानाराधकताया एवोक्तेः। द्वितीयभङ्गोक्ता विज्ञातधर्मतापि च श्रीजिनागमोक्तस्यैव धर्मस्य श्रद्धानयुग्ज्ञानमपेक्ष्यैव, तेन नात्रान्यतीर्थिकधर्मज्ञानां देशविराधकतायामवतारः। तृतीये तु भङ्गे यथोक्तरूपेणैकांशरूपस्य चारित्रस्य अंशद्वयरूपस्य च सम्यक्त्वयुग्दर्शनस्य भावात् सर्वाराधकता सङ्गतैव। सूत्रकृताऽपि 'उवरए विण्णायधम्मे' इत्युक्तं। तथा च द्वितीयभङ्गोक्ता विराधना उपरत्या नाशिता। अत एव 'उवरए' इत्यस्य पूर्वत्वं, अन्यथा ज्ञानस्यैवाद्यभूमित्वात् तस्यैवादावुक्तिः सङ्गच्छेत। युक्तं हि त्र्यंशस्य वस्तुन एकतोऽशद्वयस्यान्यतश्चैकांशस्यागमेन परिपूर्णत्वं, श्रुतस्य सम्यग्ज्ञानत्वेन तथाभूतस्य च तस्य सम्यग्दर्शनाविनाभूतत्वात् द्व्यंशता, उपरतेस्तु सम्यग्ज्ञानवियुताया विवक्षणात् एकांशत्वं, यद्यप्युपरतिः सम्यक्त-

या विवक्ष्येत तदा तस्याः सम्यग्दर्शनयुक्ततरं नियतमेव, 'नादंसणिस्स नाणं नाणेण विना न हुंति चरणगुणा' इत्यादीनामुक्तीनां शास्त्रे बहुश उपलम्भात्, परं जिनोक्तीनामोघेन श्रद्धानमत्र विवक्षितं। तथा च विशिष्टस्य सर्वचतुष्कमयत्वस्य सर्वस्य सर्वभयत्वस्याज्ञानात् विरतेरपि यथोक्तज्ञानपूर्विकाया अभावात्, सम्यक्चारित्राभावेऽपि चारित्रेण देशाराधकता। एवं चाभव्यानां मिथ्यादृशां च विपरीतश्रद्धानवतां न देशतोऽप्याराधकताप्रसङ्गः। अत एव चाभव्यादीनां तत्स्वरूपे यथास्थिते लिङ्गापहारविसर्गादि, मिथ्यादृशां तु स्वलिङ्गिनां मार्गप्रतिपत्तौ न वनारोपणादि च। अत एव नाभव्यादीनां देशाराधकता। एवं च तेषामभव्यादीनां चतुर्थभङ्गपतितत्वं। आसन्नग्रन्थिकानामप्यभव्यानां भव्यानामपि च चतुर्थभङ्गगतत्वेऽपरेषां तु सर्वविराधकत्वम्चतुर्थभङ्गान्तर्गतत्वं न दुर्वचम्।

इत्येवं भगवत्प्रणीतभगवत्युक्तां चतुर्भङ्गिकां,
भव्या! हृत्कमले सदा विदधतु स्वच्छाशयालङ्कृताः।
उद्युक्ताः सततं भवन्तु भविनो भङ्गे तृतीये परं,
येनासौ भवधार्धिदुःखशमनो दत्ते सदानन्दथम् ॥१॥
इति श्रुतशीलचतुर्भङ्गी॥



## चैत्यद्रव्योत्सर्पणम्[1] (२३)

नत्वा वीरं जिनं चैत्य-द्रव्योत्सर्पणगोचरं।
निर्णयं शास्त्रसंसिद्धं, वच्मि भव्यानुकम्पया ॥१॥

ननु किं तावत् चैत्यं, कथं च तद्द्रव्यं, कया रीत्या च तदुत्सर्पणं, किं च प्रयोजनमधुनैतस्य निर्णये, किं च-तदु-

१ उद्यामणी इतिलाके

त्सर्पणस्य तन्निषेधस्य वा फलं, किं च प्रमाणं प्रस्तुतविषये ? इति शङ्कासप्ततयी न यावदशेषतः शाम्यति, न तावत् चैत्यद्रव्योत्सर्पणस्य यथावन्निर्णयो विदुषां प्रतीतिपथमायातीति चेत् ।

श्रुणु तावत् पर्यनुयोगे आद्ये, 'चैत्यं जिनौकस्तद्बिम्ब'मित्यनेकार्थोक्तेश्चैत्यशब्देन जिनौकस्तद्बिम्बयोर्जिनौकसः केवलस्य तद्बिम्बस्य वा केवलस्य ग्रहः । ततश्च ये चैत्यद्रव्यं लक्षयन्तः 'मूर्त्यर्पितं द्रव्य'मिति जगुर्लक्षणं, तस्य तदव्याप्तमेव । जिनौकोऽर्पितवस्तूनां चैत्यद्रव्यत्वाभावप्रसङ्गात् संकाशादीनां जिनौकोद्रव्यभक्षकाणां चैत्यद्रव्यभक्षकतया निर्देशस्य तद्भक्षणजन्यविपाकस्य च शास्त्रेषु वर्णितस्याप्रामाण्यप्रसङ्गाच्च । यच्च 'अरिहंतचेइयाण'मित्यादौ आवश्यकसूत्रे चैत्यशब्देन प्रतिमायाः कथनं, 'चेइयसद्दो रूढो जिणिंदपडिमत्ति अत्थओ दिट्ठो' इत्यादौ सम्बोधप्रकरणे श्रीमद्भिर्हरिभद्रसूरिभिश्चैत्यशब्दस्य रूढिर्जिनेन्द्रबिम्बमनुलक्षीकृत्य बिम्बे आख्यायि तन्न नो विरोधावहं, केवलस्यापि बिम्बस्य चैत्यशब्दवाच्यतयाऽस्माभिरादित एव स्वीकारात् । तथाच मूर्त्यर्पितं चैत्यद्रव्यं स्यात्, परं न चैत्यद्रव्यं मूर्त्यर्पितमिति मूर्त्यर्पितमिति व्याप्यमल्पव्यापकं, चैत्यद्रव्यं तु व्यापकं बहुव्यापकं । तथा च कथङ्कारं तयोर्गन्धवत्त्वद्रव्यत्वयोरिव लक्ष्यलक्षणभावो भवेदिति विचार्यं विपश्चिद्भिः । अर्पितशब्दं लक्षणान्तरे निवेशयता विवेचनीयं तावत् यदुत—नृपादिना ग्रामाद्यदायि चैत्याय, तदायस्तु अद्यापि नावाप्त एव कथमर्पयितुं शक्यः सः । वडवाकिशोरन्यायेनाऽपि तदार्पितो मन्तव्य इति चेच्चिरं जीव, चैत्यार्पितात् ग्रामादेः भाव्यायस्यापि देवद्रव्यत्वस्वीकारात् तन्निवारणे चादानभञ्जकत्वस्वीकाराच्च तत्स्वीकारेण देवदायोत्सर्पणादीनामपि तथात्वस्वीकारात्

गुप्तमार्गगमनसरणिलाभात् अनुद्घाटितमस्त्वेतानदत्राग्रतो भानोऽत्र स्फुटतायाः। किञ्च-पूजाद्युपयोगिनैवेद्यादिनाशकस्य न ते देवद्रव्यनाशकता, अनर्पितत्वात्, अर्पिते सत्येव चैत्यद्रव्यताभिमतेः। ओमिति चेत्, जिनपूजनसत्कात् चन्दनात् स्वतिलकचन्दनस्य पार्थक्यं कथं? कथं चानर्पितस्यापि देवगृहगतस्थालस्थितनैवेद्यादिभक्षणस्य फलं दौर्गत्यं?। किञ्चानर्पितेन ज्योतिषा स्वकार्यकरणे कथं श्राद्धविध्याद्युदितं दौर्गत्यं?, दीपादेरनपहारात् ज्योतिषश्चानर्पणात्। नच वाच्यं अनर्पितस्यापि देवद्रव्यत्वे प्रतिमायाः कृते विहितस्याशनादेः श्रमणादीनामकल्प्यता स्यात्, तथाच कथं तथाविधैर्नैवाशनादिना प्रतिलम्भयितुः श्राद्धस्य सुगतिलाभ? इति। सामान्यकल्पनाया सत्यामपि विशेषकल्पनाया अभावात्। दृश्यते च सामान्यकल्पनातो विशेषकल्पनाया भेदः। कथमन्यथा यावदर्थिकपरिहारिणोऽपि मुने स्वपरार्थकृतस्य पाकस्य कल्पनीयता?। देवगृहादावानीतस्य तु चन्दनादेरस्त्येव विशेषवती कल्पना, शोभायै आनीतस्याभूषणादेरानीयार्पितस्यापि देवाय नार्पणे सेति न कापि तद्ग्रहणे बाधा। अन्यथा नैवेद्यवत् तदाधारस्थालादेरपि तत्प्रसङ्गात्। अलं विस्तरेण। चैत्यशब्देन जिनौकस्तद्बिम्बं तद्द्रव्यमेव वा ग्राह्यं।

ननु सञ्ज्ञानार्थकात् चितिधातोर्निष्पन्नस्य चैत्यशब्दस्य कथं तद्वाच्यतेति?।

सञ्ज्ञाशब्दत्वात् रूढेर्जिनेन्द्रस्वरूपावगमस्य तत्साध्यत्वाच्च सञ्ज्ञानसाधनता न विरुद्धा। चयनार्थकात् चिञ्धातोस्तु तन्निष्पादने नैवैतच्चर्चापि। ननु अस्ति तत्रापि चर्च्यं, यदुत-चैत्यं तावत् शब्दार्थमनुलक्ष्येष्टिकादिपीठवाचकं गृह्यतां, जिनौकआदिग्रहणं तु न यथार्थमिति चेत्, किमौपपातिके साक्षात् निर्दिष्टं भगवत्यादिषु शतशोऽ-

तिदिष्टमपि जिनौकोवाचकतया चैत्यशब्दमपह्नोतुमुत्थितः ?, ओममिति चेत्, सतमुत्सूत्रोद्धारपुष्टवचनेन सहोदितेन, पारत्रिकानुष्ठानमूलत्वादागमानां जगद्भास्करेषु जिनेषु वर्तमानेष्वपि तत्प्रतिकृतीनां जन्ममहे समवसरणादौ च विधेयानामपलपितुं प्रवृत्तत्वात्। सन्तु ताः, परं न ताश्चैत्यवाच्या इति चेत्, (न) 'अरिहंतचेइयाण'मिति सूत्रे स्पष्टमेव चैत्यशब्देन प्रतिमाया एव निर्देशः। तत्रापि ज्ञानं वाच्यमिति। (न) तदधिकारस्य 'श्रुतस्य भगवत' इत्यादौ भावात्, केवलादिज्ञानस्य तद्वत्स्तुतिद्वारेण प्रागेव स्तवनात्। व्याख्याकारा अपि तथैव तद्व्याख्यान्ति श्रीहरिभद्रसूर्यादयः। न च वाच्यं ते चैत्यवासिन इति तत्समर्थनं तेषां न प्रमाणयुतं। तेषां संविग्नपाक्षिकतयाऽष्टकवृत्तौ श्रीजिनेश्वरसूरिभिः स्पष्टमुल्लेखात्, संविग्नपाक्षिकस्य च सूत्रोत्तीर्णलेशस्यापि विपलवस्य इव परिहार्यत्वात्। किञ्च–यद्येते चैत्यवासिनस्तत्पुष्ट्यर्थं च तथा प्रस्तुतसूत्राणामभिधेयनिर्णयः तदा कथङ्कारं तेऽभियुक्ता इवावश्यकवृत्त्यादौ सम्बोधप्रकरणे च समूलकापं कपितवन्तश्चैत्यवासं। न ह्युत्सूत्रमप्युपदिश्य स्वमतं पुष्णन्तः केचनाऽपि स्वमतस्य समूलनाशं नाशकाः। तद्विहायोन्मार्गपोषणमाद्रियतां सत्रमार्गे। 'देयं तु न यतिभ्य'इति षोडशके स्पष्टमेव यतीनां चैत्याधिकारितानिषेधात् स्पष्टमेव तेषामचैत्यवासित्वं। न च वाच्यं 'तिष्ठन्ति ते यथा तथा कार्य'मिति षोडशकवचनेन कथं न चैत्यवासिता तेषां ?। जिनचैत्यसमीपस्थव्याख्यानशालाश्रयेणोपदेशात्। अत एव च पञ्चवस्तुव्याख्यायां त एव विभागशोऽवस्थानं प्रवदन्ति, तत्र शून्यगृहदेवकुलोपाश्रयवासस्यानेकेषु स्थानेषु समर्थनात्। व्याख्यातं चात एव यथार्थन्यायाचार्यैः षोडशकवृत्तौ व्याख्यानशालारूपे चैत्यभागेऽवस्थानं, उपचैत्यस्य

व्याख्यनशालायाश्चैत्यत्व 'गङ्गाया घोष'इति प्रयोगज्ञाना न विरोधावह। तथा च मण्डपिका-धवस्थानस्योचितत्वा'त्तिष्ठन्ति ते' इत्यादि न चैत्यनासपोषकं व्याख्यानादिकायाश्म्यादिषु सूर्यादीना तत्रागत्यावस्थानसम्भवात्। अत एव प्रवचनसारोद्धारोपमि त्यादौ तत्र तत्र चैत्याद् वहिर्मण्डपे व्याख्यानादिकरणं। न चात्र चैत्ये तिष्ठन्ति इति वाक्यं। तथा च कुतस्त्यं चैत्यनासपोषकत्वमस्य, देवकुलवासस्य तु सामीप्येनैव समर्थनात् सुविहिताः श्रीहरिभद्रगुरव इति सुस्थं। तथा च तद्वचस्तथाकारविषयमेव सम्यक्त्ववता, 'कप्पाकप्पे'-इत्याद्युक्तेः। न च वाच्यं मूर्त्यादिकरणं परतीर्थीयानुकरणमिति। यतः शाश्वतीना प्रतिमाना स्थाने स्थाने अनेकश' प्रतिपादनात्, अशाश्वतीनामपि उपासकौपपातिकभगवतीज्ञातधर्मव्याख्यप्रज्ञप्त्यादिप्रभृतिषु मूलसूत्रेषु तासामुल्लेखात्। ततश्च न मूर्तिकृतिरन्यतीर्थीयानुकृतिः। तद्वदेव च विलेपनधूपाभरणपुष्पादिपूजापि राजप्रश्नीयसूत्रसिद्धत्वान्नान्येषामनुकृतिः। आधाकर्मादिदोषरहितान्योगवेषिणा तु कथमेव भवेत् सा कल्पना। न हि तत्रभवद्भगवत्पूजा-मुनिदानयोरस्ति कथञ्चनापि साम्यमंशेन, येन सा तत्कल्पितापि स्यात्। इत्यल प्रसक्तानुप्रसक्तेन। तदेवं श्रेयोऽर्थिभिः पूज्यस्यान्यतीर्थीयकृत्यननुकृतस्य विम्बस्य तदाधारस्य च जिनगृहस्य चैत्यशब्दवाच्यता साधितेति चैत्यनिर्वचनं सिद्ध, सिद्धे च विम्बे तदाधारे च जिनगृहे प्रश्नोऽपरोऽवतिष्ठते, यदुत—देवसमाकारधारिणो विम्बस्य 'तात्स्थ्यात् तद्व्यपदेश' इति न्यायेन देवशब्दवाच्यत्वात् चैत्यस्य जिनगृहापरपर्यायस्य तदाधारत्वात् विम्बद्रव्य चैत्यद्रव्यं देवद्रव्यमित्येषा त्रयाणा न भिन्नार्थता। न च वाच्यं न श्रूयते कुत्रापि आगमे त्रयाणामपि तेषामेकोऽपि, सति चैव कुतस्तद्रक्षणवर्धन-

गुणास्तल्लक्षणदोषा लेशेनाऽपि, ग्रामाभावे सीमायाः मूलाभावे शाखायाश्चाभावात्। न चानागमिकमनुष्ठानं विहाय गतानुगतिकवतोऽपरेषामर्हं स्यात्।

सति चैत्ये तस्य तदवयवानां च द्रव्यत्वात् चैत्यद्रव्यस्य देवद्रव्यापरपर्यायस्य सहजसिद्धेः। अत एव चोपदेशपदादौ चैत्यद्रव्यं व्याख्यानयन्तः सूरयो योग्यातीतभेदेनेष्टिकादेश्चैत्यद्रव्यस्य द्वैविध्यमाहुः। तथा च यत्र यत्र चैत्यशब्दस्तत्र तत्र चैत्यद्रव्यसिद्धिरविनाभाविन्येव। न च वाच्यं तर्हीष्टिकादिरूपं चैत्यद्रव्यमस्तु, तस्य शब्दतोऽसिद्धत्वेऽपि अर्थतः सिद्धत्वात्, परं हिरण्यग्रामगवादिरूपस्य देवद्रव्यस्य कथं सिद्धिः?। आलयरूपत्वात् चैत्यस्य तत्समारचनोद्धाराद्यर्थं तत्पूजाद्यर्थं च तेषामपि हिरण्यादीनामावश्यकत्वात्। आगमानभिहितता तु श्रावकाचारोद्देशेन कस्याप्यागमस्याप्रणयनात्। साध्वाचारतदुपदेशाङ्गीकारादेरुद्देशेनैव तत्प्रणयनात्। अत एव च न क्वचिदप्यागमे श्रावकाणां नमस्कारगुणनं व्रतोच्चारदीक्षादिमहोत्सवविधिः आवश्यकविधिः अनशनविधिः इत्याद्यावश्यकीयविधीनां न्यायात्तविभवादिविधीनां चोल्लेखः। को वा किमाह, उपासकदशाङ्गेऽभूदेव विस्तृतवाचनाकाले सः। यतोऽधुनातनकाले विद्यमानयोः समवायनन्द्यागमयोः उपासकानां चैत्यानां तपउपधानानां च वर्णनमुपासकदशाङ्गेऽस्तीति तल्लेखस्य 'उवासगाणं चेइयाइं' इत्यादिनोपलम्भात्। सति तत्र चैत्याद्यधिकारे तद्विधिद्रव्याद्यधिकारस्य सुलभतमत्वात्, न तत्र देवद्रव्याद्यधिकारदुर्लभता। निशीथचूर्णिव्यवहारबृहत्कल्पपञ्चकल्पभाष्यादिषु स्पष्ट एवाधुनाऽपि तद्द्रव्योल्लेखः। ततो नानभिहितता देवद्रव्यस्य। नन्वतिरिक्ता वाचोयुक्तिर्यत्–देवद्रव्यं, देवस्य वीतरागत्वेनार्थाद्यङ्गीकाराभावात्। सत्यं, विस्मृतं भवतां यदुत–प्रथममेवोक्तं जिनौकस्त-

व्याख्यानशालायामित्यत्र 'गङ्गायां घोष' इति प्रयोगज्ञाना न निषेधावहः। तथा च मण्डपिका-धरस्थानस्योचितत्वा'त्तिष्ठन्ति ते' इत्यादि न चैत्यवासपोषकं व्याख्यानादिकायाष्टम्यादिषु सूर्यादीनां तत्रागत्यावस्थानसम्भवात्। अत एव प्रवचनसारोद्धारोपमि त्यादौ तत्र तत्र चैत्याद् बहिर्मण्डपे व्याख्यानादिकरणं। न चात्र चैत्ये तिष्ठन्ति इति वाच्यं। तथा च कुतस्त्यं चैत्यवासपोषकत्वमस्य, देवकुलवासस्य तु सामीप्येनैव समर्थनात् सुविदिताः श्रीहरिभद्रगुरव इति सुस्थं। तथा च तद्वचस्तथाकारविषयमेव सम्यक्त्ववता, 'थप्पाकप्पे'-इत्याद्युक्तेः। न च वाच्यं मूर्त्यादिकरणं परतीर्थीयानुकरणमिति। यतः शाश्वतीनां प्रतिमानां स्थाने स्थाने अनेकशः प्रतिपादनात्, अशाश्वतीनामपि उपासकौपपातिकभगवतीज्ञातधर्मकथाव्यवहारप्रभृतिषु भूयस्सूत्रेषु तासामु-

ल्लेखात्। ततश्च न मूर्तिकृतिरन्यतीर्थीयानुकृतिः। तद्वदेव च विलेपनभूषाभरणपुष्पादिपूजापि राजप्रश्नीयसूत्रसिद्धत्वान्नान्येषामनुकृतिः। आधाकर्मादिदोषरहितान्नगवेषिणा तु कथमेव भवेत् सा कल्पना। न हि तत्रभवद्भगवत्पूजा-मुनिदानयोरस्ति कथञ्चनापि साम्यमंशेन, येन सा तत्कल्पितापि स्यात्। इत्यलं प्रसक्तानुप्रसक्तेन। तदेवं श्रेयोऽर्थिभिः पूज्यस्यान्यतीर्थीयकृत्यननुकृतस्य बिम्बस्य तदाधारस्य च जिनगृहस्य चैत्यशब्दवाच्यता साधितेति चैत्यनिर्वचनं सिद्धं, सिद्धे च बिम्बे तदाधारे च जिनगृहे प्रश्नोऽपरोऽवतिष्ठते, यदुत—देवसमाकारधारिणो बिम्बस्य 'तात्स्थ्यात् तद्व्यपदेश' इति न्यायेन देवशब्दवाच्यत्वात् चैत्यस्य जिनगृहापरपर्यायस्य तदाधारत्वात् बिम्बद्रव्यं चैत्यद्रव्यं देवद्रव्यमित्येषां त्रयाणां न भिन्नार्थता। न च वाच्यं न श्रूयते कुत्रापि आगमे त्रयाणामपि नेषामेकोऽपि, सति चैव कुतस्तद्रक्षणवर्धन-

सरणं पूजा आज्ञा चैत्यं च, सिद्धस्यापि च सिद्धशिलानिर्देशे सिद्धालयेत्यादिकथनं सम्बन्धमात्रं द्योतयति, न तु स्वत्वं, तथात्रापि। इदमेवाहुर्भवविरहाङ्काः सम्बोधप्रकरणे–'णहु देवाणवि दव्वं संगविमुक्काण जुज्जए किमवि। नियसेवगबुद्धीए कप्पिंतं देवदव्वं तं'' ॥९०॥ व्याख्याकृतिश्चैवमत्र, वाद्याह–सङ्गविमुक्तानां–निर्मोहत्वेन चारित्रमोहवियुतत्वात् परिग्रहमुक्तानां, किमपि–तृणतुषाद्यपि, आस्तां हिरण्यादीत्यपिशब्दार्थः, हुशब्दस्यैवकारार्थत्वात् नहु–नैव, युज्यते–युक्तिसङ्गतं भवति, 'नाकारणं भवेत् कार्य'मिति सर्ववादिसंमतत्वात्। अन्यथा सिद्धानामपि तथाविधानां द्रव्यं भवेद्, न चैतत् युक्तं सपरिग्रहत्वापातात्तेषां। अत्राह–युक्तं त्वदुदीरितं स्यात्, यदि निर्मोहेन देवेन तदङ्गीकार इष्येत, न चैवं, कथं तर्हि? उच्यते, वीतरागाणामाज्ञावशंवदत्वेनायत्ता निजा ये सेवका मोक्षहेतुदेशकाद्युपकारबुद्ध्या पर्युपासकास्तेषां बुद्ध्या–चतुष्पृट्या शतक्रतूनामपि सर्वसामग्र्याऽपि पूजने तद्गुणानामनन्तत्वात् यथार्हबहुमानरूपपूजाऽभावेऽपि कृतज्ञतालेशवशीकृतान्तःकरणानामस्माकं तद्बहुमानायापरेषां च भव्यानां बहुमानोत्पादनाय मदीयेन न्यायात्तेन वित्तेन भक्तिरस्त्वितिबुद्ध्या, यत्तदोर्नित्याभिसम्बन्धात् यच्चन्दनहिरण्यग्रामादि द्रव्यं कल्पितं–व्याख्यातो विशेषप्रतिपत्तेः निश्चितकल्पनाविषयीकृतं, अवधारणफलत्वाद्वाक्यस्य इष्टितोऽवधारणविधेश्च तदेव देवद्रव्यं, तद्देवद्रव्यमेव वा। आद्यावधारणस्य फलं–सामान्यकल्पनायामप्यशनादेर्दाने ग्रहणे च न देवद्रव्यनाशकभक्षकत्वजनितो दोषः। द्वितीयस्य तु तादृशकल्पनाविषयस्य परावृत्तौ नाशे भक्षणे वा देवायभञ्जकत्वादिदोषप्रादुष्कृतिः, देवायभञ्जनस्यापि आगतद्रव्यभक्षकवत् 'आयाणं जो उ भंजई'त्यादिना दुरन्तदु-

क्रियायोश्चैत्यशब्दवाच्यत्वात् जिनस्य च देवशब्दव्यपदेश्यत्वात् तत्समाराधनार्थकं द्रव्यं देवद्रव्यं। तथा च देवस्य भक्तये निश्चितं कल्पितं द्रव्यं देवद्रव्यमिति। तथानभ्युपगमे च वीतरागत्वाद्देवस्य निन्दास्तुत्यारप्यनभ्युपगमात् तन्निन्दास्तुत्योरप्यभावापातात्। कर्तृपरिणामोद्भवे ते चेत्, देवद्रव्यमपि भक्तपरिणामनिश्चितमिति शृङ्गः किं वन्ध्याऽधरी भवति ?। अत एव देवस्य कृतकृत्यत्वेऽपि पूजानिन्दयोर्यथा स्वभावेन फलदत्वं, तथैव देवद्रव्यभक्षणादीनामपि 'चेइयदव्वविणासे'इत्यादिना सम्बोधग्रन्थेन 'गुरिंददत्तनिसिट्ठं चेइयट्ठाए दव्वं तं विणासिंतेणं जे जिणरिसपूयदंसणाऽऽणदितहियपाणं भवसिद्धियाणं सम्मदंसणगुणओहिमणपज्जवकेवलनाणनिव्वाणलंभा ते पडिसिद्धा, जा य तप्पभवा गुरमाणुसरिद्धी, जो य महिमासमागयस्स जणस्स साहुजणाओ धम्मोवएसो तित्थाणुसज्जणा य सा वि पडिसिद्धा। ततो पोण दीहकालट्ठितीयं दंसणमोहणिज्जं कम्मं निबद्धं अणतरेपणिज्जं च। रोद्दज्झाणमस्सिओ य संगिहीयनिरयाऊ अप्पट्ठाणे नरए उववण्णो। तत्थ दुक्खमनिस्सामं अणुभविऊण मच्छो जातो। ततो नगनिरयभवे फासितो गहुणा कालेण मगहाजणवए सुग्गामे गोयमस्स माहणस्स अणुहरीए भज्जाए पुत्तो जातो। गब्भत्थस्स य पिता मतो। ततो 'निस्सिरीयगोयमो'त्ति वड्ढइ। छम्मासजायस्स य माया मया। माउच्छियापइणा य संगिहमइणीओ'इत्यादिना पूर्वधरश्रीसङ्घदासगणिक्षमाश्रमणकृतवसुदेवहिण्डिवचनेन द्योतिता स्वभावेनैवाधमता ज्ञेया। न च तस्मिन् वर्धिते देवस्य तोषो भक्षणोपेक्षणादौ रोषो वा देवस्य, स्वीकारे तु तावत्स्यमेव भाविनौ। तथा च यथा वीतरागस्यापि समर-

पूजोपयोगेन नष्टश्रीकं न जिनाङ्गसङ्गि, इतरत्तु न तथेति तथावस्थायामुपयोगेतरापेक्षया भाज्यं वक्ष्यते। तृतीयं तु कल्पितं चरितापरपर्यायं—यद् द्रव्यं ऋद्धिमच्छ्रावकसम्मत्याऽनेकैः श्राद्धैरेकेन वाऽऽत्मना देयतया निर्धारितं, तदिदमिति चैत्यद्रव्यं भेदत्रयभाग्। तदेवं ज्ञापितानां भेदानां क्रमशः स्वरूपमाहुः—'आयाणे'त्यादिना, आदानं—श्रीमद्भगवत्प्रतिमापूजार्थं भावुकजनवितीर्णग्रामगृहाट्टादेर्भाटकं, आदिशब्देन तथाविधदायादिपरिग्रहः। देवदायादिप्रवर्त्तनस्यापि श्राद्धानामावश्यकीयकार्यतया श्राद्धविधिधर्मसङ्ग्रहादिषु प्रतिपादनात्। तत्प्रवृत्तिस्त्वन्यपीडावर्जनेन कार्येति त्वन्यदेव। तत्सर्वमादानादि पूजाद्रव्यं जिनविम्बसपर्याकरणोपयोगि तद् रिक्थं ज्ञेयमिति शेषः। एवमाद्यमभिधाय भेदं नियोगं तस्य निर्जगुः—'जिणदेहपरिभोग'मित्यादिना। तत्र जिनस्य—दुर्वाररागाद्यरातिजेतुर्वीतरागस्य, देहः—कायः समानाकारतया लक्षणया विम्बग्रहः, सर्वत्र सर्वदा जिनदेहस्याविद्यमानत्वात् सचित्तपुष्पाद्युपयोगस्य भावनिक्षेपेऽयोगात् जिनगृहोपयोगस्य पुरतो वक्ष्यमाणस्य साहचर्याच्च। यद्वा 'दिहंक् उपचये' इति चयार्थकधातुनिष्पन्नदेहशब्दस्य पुद्गलचयरूपस्य विम्बस्य वाच्यतायां विरोधानवकाशात्। यद्यपि चैत्यमपि तथा तथापि तदुपयोगस्य पृथगुक्तेः परस्याप्रकृतत्वाच्च। न च रूढेर्बलीयस्त्वात् शरीरवाच्यतैव ग्राह्या, योगजबोधबाधोपस्थितावेवैतन्न्यायस्योपयोगात् स्थविरयष्टिप्रायत्वाच्च न्यायानां न सर्वत्र तदुपयोगस्यावश्यकता। यद्वा जिनदेहकल्पनयैव जिनविम्बस्य कृतत्वात् जिनदेहशब्दो जिनविम्बाभिप्रायक एवात्रोपादायि। तस्य जिनविम्बस्य परिभोगं—बाह्यभोगावस्थां व्रजतीत्युत्तरगाथास्थं क्रियापदमत्रापि योज्यं, कोल्हिकनलिकन्यायेनास्यापि तस्मिन्नेव क्रियापदेऽवतारात्।

रितहेतुत्वस्योदिते । भगवचनमेवेदमिति श्रद्धाशून्यस्यैव यचः, क्वचनापि तद्विरोधगन्धस्यापि अभावात् । मुनिघातस्य घातत्वाविशेषेऽपि यथा भावप्राणविरतिपरजनोपकारादिनाशकतयाऽनन्तजन्तुघातकृत्ता यथा सूत्रसिद्धा, तथा देवद्रव्यभक्षणादेर्दुरन्तदुरितहेतुता युक्तियुक्तैवेति लन्यदेवेति । एवं च नासिद्धं देवस्य वीतरागत्वेऽपि वत्सेवकबुद्धिनिश्चितस्य पूजोपयोगिनो द्रव्यस्य देवद्रव्यत्वमिति स्थितं । तदेवं साधितं देवद्रव्यं देवबिम्बतद्गृहतदुभयोपयोगभेदेन त्रिविधं । यदाहुः श्रीहरिभद्राचार्याः स्वकृते सम्बोधप्रकरणे—" चेइयदव्वं तिविहं पूयानिम्मल्लकप्पिय चेव । आयाणमाइ पूयादव्वं जिणदेहपरिभोगं ॥१६३॥ अक्खयफलबलिवत्थाईसंतियं जं पुणो दविणजायं । न निम्मल्लं वुचइ जिणगिहकम्मंमि उवओग ॥१६४॥ दव्वतरनिम्मवियं निम्मल्लं पि हु विभूसणाईहिं । तं पुण जिणंगसंगी हविज्ज नन्नत्थ तं भयणा ॥१६५॥ रिद्धिजुयसमएहिं सड्ढेहिं अहव अप्पणा चेव । जिणभत्तीइ निमित्तं ज चरियं सव्वमुवभोगी" ॥१६६॥ तिगाथाचतुष्क । व्याख्या चैव—चैत्यस्य—प्रागुक्तन्यायेन जिनौकसो जिनबिम्बस्य तदुभयस्य वा सम्बन्धि द्रव्यं—ग्रामादेरायादिरूपं सर्वं त्रिविधं—उपयोगभेदेन भेदात् पूजाद्रव्यादिभेदेन भेदत्रयवत् । सामान्येन त्रिभेदत्वकथनेऽपि यथावदवगमाभावात् तान् भेदान् स्पष्टतरमाहुः—'पूये'त्यादि । एकं तावत्पूजायामेवोपयोगमानेयं, न जिनगृहादाविति केवलपूजोपयोगित्वात् पूजाद्रव्यं, ग्रामादिदाना दायादिकारकेण चादित एव तथासङ्कल्प्य दानात् प्रवर्त्तनाच्च । अन्यथाकरणे स्पष्टमेव चौर्यं, दानादिनिश्चयादन्यथोपयोगकरणात् । अत एव देवदायस्याऽऽदाता दुरन्तविपाककर्मणो बन्धकः । द्वितीयं नैर्माल्यनामकं—यज्जिन-

दूरत एव, भवविरहाङ्कैरेवादानादीनां पूजाद्रव्यत्वोक्तेः। अक्षतादिद्रव्यस्य तु नैर्माल्योदित्या जिनगृहोपयोगोक्त्या च स्पष्टमेव तदुपयोगवर्णनात्। किञ्च–जिनगृहोपयोगिताामात्रोदितौ श्रावकादिसंसारोपयोगितायाः मेरुसर्पपयोः समानताङ्गीकर्त्तैव कर्ता, नान्यः कश्चन, तत् निर्माल्यं निर्माल्यनामकद्वितीयचैत्यद्रव्यगतभेदवत् उच्यते। अत्र-धारणेन नान्यत् आभूषणादीत्यर्थो लभ्यते ?। प्रकटयिष्यति चाग्रतोऽदः। यद्वा नादानादि नैर्माल्यतया व्यवहरणीयं। एवं निर्माल्यस्वरूपमभिधाय तस्योपयोगमाहुः–व्रजति–गच्छति जिनगृहस्य–चैत्यस्य कर्मणि–समारचनशीर्णोद्धारादौ उपयोगं–व्यापारणयोग्यतां। तथाचाक्षतादिना जिनगृहसमारचनादौ न दोपलेशः श्राद्धानां। सत्यां शक्तौ तु स्वजन्मकृतार्थनाय कुर्वन्तु श्राद्धाः स्वद्रव्योपयोगं तत्र, परं न चेत्तथा, तदा इदमप्येत्येव तत्रोपयोगं, नैवात्र शास्त्रबाधा। न हि चैत्यसमारचनादौ प्रवृत्तिरशुभावहा प्रमादपथपतितता वा, येन तत्र तद्व्यापारणं दोषपोषकरं स्यात् ॥२॥ एवं सामान्येन निर्माल्यस्वरूपं तदुपयोगं चोक्त्वा तत्रैव द्रव्यभेदेनोपयोगभेदमाहुः–'दव्वंतरे'त्यादिना, प्राग्गाथायामक्षतादेर्नैर्माल्योक्तौ तद्वद्देवाभूषणादीनामपि पूजायामुपयोगात् तस्य नैर्माल्यत्वापत्तौ तस्य पुनर्जिनाङ्गसङ्गित्वस्यासङ्गतत्वमाशङ्क्याहुर्द्रव्यान्तरेत्यादि। यथाऽक्षतादेर्नैर्माल्यं पूजायामुपयोगात्तथा द्रव्यान्तरेण सुवर्णरूप्यादिभिन्नवस्तुजातेन यत् निर्मितं कुण्डलादि द्रव्यजातं कदाचित् भोगविनष्टतया निःश्रीकतया वा निर्माल्यं जातं तथापि हुरेवकारार्थे भिन्नक्रमश्च स च क्रियया सह योजनीयः, अपिना आस्तामविनष्टश्रीकतयाऽऽरोपितमपि तत्कुण्डलादि। विभूषणादिभिः–मुकुटहारादिभिः प्रकारान्तरतापन्नैराकल्पैः, आदिनाऽलङ्कारादीनां

यद्यपि अचेतनस्योपभोगपरिभोगक्रियाकर्तृता नास्ति तथापि तिर्यगादिषु स्त्राभावेन रसारोपवत् अत्रापि स्थापनायां सचेतन इव परिभोगारोपः। तथाविधं तु जिनदेहजिनबिम्बयोः समकरणीयताख्यापनाय। फलं तु यथैव भावनिक्षेपस्तद्गुणस्मृतितद्बहुमानाराधनादिद्वारेणैव फलदान्, नैव भावनिक्षेपमात्रमात्रेणेति। अत्रापि बिम्बे तथा तथाद्दतिकरणं फलवदेव। तथा च प्रतिमामवदन्ति निरस्तास्ते। आवश्यकेऽपि राजप्रश्नीयादावत एव जिनप्रतिमादीनां धूपादिकरणे 'धूवं दाऊण जिणवराण'मित्यादिना जिनदेहजिनबिम्बयोरभिन्नार्थताऽद्योतीति सूत्रोत्तीर्णोऽयं न पक्षः ॥१॥ एवमाद्यं चैत्यद्रव्यस्य भेदं तदुपयोगं चोक्त्वा द्वितीयं तद्भेदं तदुपयोगमननां चाभिधित्सुर्गाथायुगलं—'अक्खयबली'त्यादि 'दव्वंतरनिम्मविय'मित्यादि च। अत्र क्रमेण व्याख्या—अक्षताः-तन्दुलाः स्वस्तिकपूरणपुञ्जकरणाष्टमङ्गलालेखादावुपयुक्ता', बलिशब्देनात्र नैवेद्यग्रहः, यद्यपि अनेकत्र नैवेद्यं देवकुलिकाय दीयते, पर तस्य नैर्माल्यत्वं नापगच्छति, श्रीतीर्थकरपूजाकरणचेतनतया स्वरसतस्तस्योपयोगात् जिनबिम्बस्यानुपयोग, उपयोगस्तु जिनगृहकर्मकारकतया जिनगृहकर्मवदेव तत्र न तदुपयोगो बिम्बे कार्य इत्येवमत्र तत्त्वं। वस्त्र-दुकूलादि, आदिशब्दात् अन्यदपि तथाविधं पुनरनारोप्यं वस्तुजातग्राह्यं, नष्टश्रीकत्वादेव तत्त्वं, 'भोगणविट्ठं दव्वं निम्मल्लं' मित्युक्तेः, तस्य सत्कं-सम्बन्धि यत् पुनर्द्रव्यजातं, तस्य साक्षात् जिनचैत्ये उपयोगाभावात् तत्सम्बन्धि द्रव्यजातमितिपर्यन्तानुधारनं। तथा च चैत्यागताक्षतादिना चैत्यसमारचनादौ न दोषलेश इत्यावेद्यांचक्रुः पूज्याः। एवं च ये वदन्ति यदुत-पाषाणेष्टिकादिद्वारा यथोपभोग नीयते चैत्यद्रव्यं, तथान्यदपि रूप्यकादि कथं नोपयोगमियृयात् श्रावकाणां ?, ते निरस्ता

दूरत एव, भवविरहाङ्कैरेवादानादीनां पूजाद्रव्यत्वोक्तेः। अक्षतादिद्रव्यस्य तु नैर्माल्योदित्या जिनगृहोपयोगोक्त्या च स्पष्टमेव तदुपयोगवर्णनात्। किञ्च—जिनगृहोपयोगितामात्रोदितौ श्रावकादिसंसारोपयोगितायाः मेरुसर्षपयोः समानताङ्गीकर्त्तैव कर्ता, नान्यः कश्चन, तत् निर्माल्यं निर्माल्यनामकद्वितीयचैत्यद्रव्यगतभेदवत् उच्यते। अव-धारणेन नान्यत् आभूषणादीत्यर्थो लभ्यते ?। प्रकटयिष्यति चाग्रतोऽदः। यद्वा नादानादि नैर्माल्यतया व्यवहरणीयं। एवं निर्माल्यस्वरूपमभिधाय तस्योपयोगमाहुः—व्रजति—गच्छति जिनगृहस्य—चैत्यस्य कर्मणि—समारचनशीर्णोद्धारादौ उपयोगं—व्यापारणयोग्यतां। तथाचाक्षतादिना जिनगृहसमारचनादौ न दोपलेशः श्राद्धानां। सत्यां शक्तौ तु स्वजन्मकृतार्थनाय कुर्वन्तु श्राद्धाः स्वद्रव्योपयोगं तत्र, परं न चेत्तथा, तदा इदमप्येत्येव तत्रोपयोगं, नैवात्र

शास्त्रबाधा। न हि चैत्यसमारचनादौ प्रवृत्तिरशुभावहा प्रमादपथपतितता वा, येन तत्र तद्व्यापारणं दोपपोपकरं स्यात् ॥२॥ एवं सामान्येन निर्माल्यस्वरूपं तदुपयोगं चोक्त्वा तत्रैव द्रव्यभेदेनोपयोगभेदमाहुः—'दव्वंतरे'त्यादिना, प्राग्गाथायामक्षतादेर्नैमाल्योक्तौ तद्वदेवाभूषणादीनामपि पूजायामुपयोगात् तस्य नैर्माल्यत्वापत्तौ तस्य पुनर्जिनाङ्गसङ्गित्वस्यासङ्गतत्वमाशङ्क्याहुर्द्रव्यान्तरेत्यादि। यथाऽक्षतादेर्नैर्माल्यं पूजायामुपयोगात्तथा द्रव्यान्तरेण सुवर्णरूप्यादिभिन्नवस्तुजातेन यत् निर्मितं कुण्डलादि द्रव्यजातं कदाचित् भोगविनष्टतया निःश्रीकतया वा निर्माल्यं जातं तथापि हुरेवकारार्थे भिन्नक्रमश्च स च क्रियया सह योजनीयः, अपिना आस्तामविनष्टश्रीकतयाऽऽरोपितमपि तत्कुण्डलादि। विभूषणादिभिः—मुकुटहारादिभिः प्रकारान्तरतापन्नैराकल्पैः, आदिनाऽलङ्कारादीनां

छत्रादीनां च ग्रहः। जिनाङ्गसङ्गि आरोपणार्हतया श्राद्धै-रारोप्यमाणं विम्बकायसंसर्गि भवेदेव, एवकारेण विधिनिश्चयं द्योतयित्वाऽनिष्टानुबन्धिता सूचयन्ति। एवं च पुष्पफलाद्यं स्यात्पुनर्ध्रियमाणं निर्दोषमिति प्रोक्तं—'नान्यत्रे'ति विभूषादीन् तत्कारणद्रव्यं च वर्जयित्वा, श्रीखण्डादौ पुनरारोपणस्य नानिष्टानुबन्धिता, नारोपणीय चातस्तत्। अतो निर्माल्यताविधौ भजनैव। श्रीखण्डादि अनारोप्यं निर्माल्यं, परं न तथाऽन्यत् ॥३॥ तदेवं द्वितीय भेदं तदुपयोगं तद्वर्जनां च निरूप्य तृतीय भेदं तदुपयोगं चाहुः—'रिद्धिजुयसमएहिं' इत्यादि। ऋद्धिः—कनकरूप्यमणिरत्नादिसम्पत्, तद्युताः—इभ्यादिवत् तदुत्कृष्टतोपेता ये श्रेष्ठ्यादयस्तैः सम्मता —तथाविधमतिसख्यभावादिना निर्दिष्टकार्यकरणायानुमताः। यद्वा चैत्याद्युद्देशेन दीयमान धन चैत्याधिकारिभिरनुमतैरेव श्राद्धस्य, अन्यथा तद्वधवस्थायास्तैरकरणे तद्धनस्य विनाशापत्तेरभिमेतमहापूजादि-चैत्योद्धारादिकार्याभावात् इष्टहानिः। ततः ऋद्धियुतसम्मतैरेव यद्दीयते धन तच्चरितं चैत्यद्रव्यं। केवलमत्र पक्षे ऋद्धियुतपदस्य चैत्याधिकारिषु लक्षणा कार्या, सा च गौरवाधायिनी, न चाधिकारिण ऋद्धियुता एव, तत्र तत्रानेकेषां शास्त्रेष्वनृद्धिमतोऽप्यधिकारितायाः श्रवणात् अधुनापि तथादर्शनाच्च। ततः लक्षणागौरवादरणेऽपि ऋद्धियुतपदस्य ऋद्धियुतत्वानियमात् जहदजहद्भेदयोरेकस्याप्यभावात् न सौस्थ्य अर्पणे प्रतिरोधोऽप्यधिकारिणोऽनर्हतामेव द्योतयति तत्र। तत आद्य एव व्याख्यापक्षोऽनघः। द्वितीये 'चिन्तगजणे'ति लघुपाठकरणस्य सौकर्याच्च। न च वाच्यं न तदा द्रव्योत्सर्पणं क्वचनापि पूजादिष्विति। अधुनाप्युपलम्भात् मध्यकाले तत्प्रवृत्तादेरनुपलम्भात् श्रीहेमचन्द्रसूर्यादिकालेऽपि तदुपलम्भात्।

चैत्यवासिभिर्विहितमित्यपि अप्रमाणिक एवोपालम्भः। यतश्चैत्यवासिरहितैरपि वाग्भटादिभिः श्रीशत्रुञ्जयादिषु तत्कृतेः, चैत्यवासखण्डनपरैरपि रत्नशेखरादिभिः सुविहि- तैस्तदुक्तेः, न केनापि तत्प्रवृत्तिश्चैत्यवासिमूलेति ज्ञापितं कुत्रापि। तन्न विहाय भवतां मतिकल्पनां तत्प्रमाण- लेशोऽपि। न च वाच्यं ऋद्धियुतसम्मतत्वस्य किं कारण- मङ्गीकारे ? इति। यतोऽगारिसमुदायस्य व्यवस्थाधिका- रिणः स्युरेव ऋद्धिमन्तः, तत्साम्मत्येनैव चाधुनाऽपि दीयते आरात्रिकाद्यादेश इति युक्तं तदाप्युत्सर्पणं, तत एवोद्धारकादिग्रन्थवचनोपपत्तेः। चरितद्रव्यं ऋद्धियुतसम्मतैः श्राद्धैः—श्रद्धायुतैः, आस्तिक्यस्यैव मुख्यलिङ्गत्वात् सम्य- क्त्वस्य, श्रद्धाद्वारैव उत्सर्पकाभिधानं अनुकम्पादीनामास्ति- क्यजन्यत्वादेवाप्रधानता। अत एवोक्तं विंशिकायां ज्ञान- भूरिभिः सूरिभिर्निर्वेदादीनां पश्चानुपूर्व्योपन्यास इति। धनं

च बाह्याः प्राणा इति नाश्रद्धावतस्तदर्पणमपि स्यात्। किं तथाविधसमुदायो न स्यादगारिणां, न च स्युः ऋद्धियुता आगता, न वा प्रतिस्पर्धी कश्चित्तर्हि चरितद्रव्यं न ? स्यादित्याह—'अहवे'त्यादि। अथवा प्रकारान्त- रद्योतने। आद्यं प्रकारं ऋद्धियुतसम्मताख्यमुक्त्वा द्वितीयं चरितद्रव्यस्य प्रकारमाहेति। आत्मनैव—पूजामालादिवि- पयकमुत्सर्पणं विधातुकामेन श्राद्धेन स्वयमेव ऋद्धियुता- नामसत्त्वात् प्रतिस्पर्धिनोऽभावाच्चोत्सर्पणस्यादौ यद्वा निर्नि- त्तकमेव यत् हिरण्यादि, जिनभक्त्या—'न य अन्नो उव- ओगो एएसि सयाण लट्ठयरो'त्तिवचनानुस्मृतिमूलायाः एसाबि हु भावपूय'त्ति भावोद्बुद्धश्रीमज्जिनपतिपूजादि- रूपसेवाया, निमित्तं—'निमित्तकारणहेतुषु सर्वासां विभ- क्तीनां प्रायो दर्शन'मिति कारणेषु श्रीखण्डाद्युपकरणा- दिनिमित्तीकृत्येत्यर्थः, दीयते इति क्रियापदमध्याहार्यं,

'सोपस्काराणि सूत्राणि' इति न्यायस्य सर्वसम्मतत्वात्। तत्पूर्वप्रकारद्वयेन प्रतिपादितं हिरण्यादि द्रव्यं, चरितं-कल्पितमित्यपराभिधानं चरितद्रव्यं ज्ञेयं। ननु 'चरियं च कप्पियं चे'त्यादौ स्पष्ट एव चरितकल्पितयोर्विरोधे कथमत्र चरितं कल्पितमित्येकार्थकं पदद्वयमित्याख्यायते ?। चरितस्य तावत् सद्भूतस्येति, कल्पितस्य तु कविजनबुद्धिकल्पनयोत्थितस्येति च तत्रार्थः। अत्र तु उदाहरणप्रसङ्गाभावात् नैकमपि योग्यं पदमिति। तत्र हि भवदुदीरितार्थापेक्षयैवैतत्पदद्वयं, अत्र तु चरितशब्दं कल्पितचैत्यद्रव्ये व्याख्यायमाने प्रयुञ्जानाः सूरय एतद्द्रव्यस्य परम्परागततां सूचयन्तः कल्पनोऽन्तरं तस्य व्यवच्छिन्दन्ति, अन्यथा आदाननिर्माल्याभ्यामन्यस्यावेदितुमशक्यत्वात्। तथा चरेः आसेवायां वर्तमानत्वात् पूर्वपुरुषासेवितं यद्बुभाकृतं तच्चरितं कल्पितशब्दं व्याख्यान्त उद्योतयन्ति। निश्चितस्य च देवद्रव्यता।

निश्चितकल्पिततारतम्यं तु यथा प्राक्। एवं कल्पितं चरितापरपर्यायं स्वरूपत आख्याय तदुपयोगं कथयन्ति —'सव्वमुवओगी' त्ति। जिनबिम्बजिनगृहदेवपूजकपूजोपकरणादिषु उपयोगमायाति। मकारस्त्वालाक्षणिकः। न च वाच्यं सर्वशब्देन गृह्यतामत्र साध्वादिरिति। जिनभक्तिनिमित्तवितीर्णेन कल्पितद्रव्येण तदन्यविधाने चौर्यापत्तेः, साध्वादीनामपि चैत्यद्रव्यभक्षणादिनाऽनन्तसंसारितापातात्। अनेनैतावत्तु निर्धार्यं यदुत–यथाऽऽदानद्रव्यं केवलजिनपूजोपयोगि, न चैत्याद्युपयोगि, निर्माल्यं चैत्योपयोगि, न बिम्बाद्युपयोगि, न तथा चरितद्रव्यं नियम्यते। किन्तु पूजादौ चैत्यादौ पूजकवेतनपूजोपकरणादिषूपयोगः करणीयश्चेत् न तथा भक्षणोपेक्षणादिजनितो दोषलेशः। तदेवं भेदत्रयवत् जिनभक्तिपोषक देवस्य वीतरागत्वेऽपि तत्स्वत्वबुद्धिनिश्चितं देवद्रव्यमिति। तथा च कथं तद्द्रव्यस्योत्सर्पणमिति तृती-

येऽनुयोगे प्रथमं तावदवधेयमिदं यत्–यथा यथा जिनविषयं बहुमानमुल्लसति तथा तथा तद्विषया भक्तिः प्रकर्षमारोहति, यथा यथा च भक्तिप्रकर्षस्तथा तथा तत्र प्राणाधिकस्यापि वित्तस्य व्ययं विधातुमुत्सहते वर्धयति च। अत एव महोपकारकश्रीमज्जिनाधीशभक्तिनिमित्तकं द्रव्यं, ततश्चावसर एवोत्सर्पणरीतिज्ञाने आवश्यकीयस्य जिनवित्तस्य। तत्र प्रथमं तावद् देववित्तस्य वर्धनं ग्रामारामगृहाट्टाद्यर्पणादिना, यतस्तथाविधेनैव द्रव्येण भगवतो विम्बस्य समारचनं महापूजा सत्कारश्च स्यात्। यतो दर्शनशुद्धिकारा आहुः- "भक्खेइ जो उवक्खेइ, जिणदव्वं तु सावओ। पन्नाहिणो भवे जो उ, लिप्पइ पावकम्मुणा ॥ आयाणं जो भंजइ पडिवन्नं धनं न देइ देवस्स। नस्संतं समुवेक्खइ सोवि हु परिभमइ संसारे ॥ चेइयदव्वं साहारणं च जो दुहइ मोहियमईओ। धम्मं व सो न जाणइ अहवा वद्धाउओ नरए ॥ चेइयदव्वविणासे तद्दव्वविणासणे दुविहभेए। साहू उविक्खमाणो अणंतसंसारिओ भणिओ ॥ जिणपवयण-वुड्ढिकरं पभावगं नाणदंसणगुणाणं। रक्खंतो जिणदव्वं परित्तसंसारिओ होइ ॥ जिणपवयणवुड्ढिकरं पभावकं नाणदंसणगुणाणं। वड्ढंतो जिणदव्वं तित्थयरत्तं लहइ जीवो॥,

## देवायभञ्जकशिक्षा (२४)

नम्रेन्द्रमौलिमाणिक्योत्तेजिताङ्घ्रियुगं जिनं।
महावीरं प्रणम्याथ, शिक्षां वच्मि श्रुताश्रिताम् १॥

आदौ तावदाख्यातं केनचित् यदुत्सर्पणां घृततैलद्रम्मादीनां कृत्वा पूजादिविधानमर्हतां तदशास्त्रीयं, यश्चैवमुत्सर्पणात उत्पद्यते द्रव्यं पूजादिविधौ तन्न केनापि नियमितं-यदमुकत्र क्षेत्रे व्ययितव्यं। किञ्च–अधुना न देवद्रव्यं कार्यकरं, न चावश्यकं, वृद्धिस्तु सुतरामनर्थिकेति

सङ्घेनोत्सर्पणाद्द्रव्यं यदागच्छति, इतः प्रभृति तत्साधारणमेव कार्यं, ततश्च साधुसाध्वीश्रावकश्राविकादीना यथोपयोगमुपयोक्ष्यते। अत्र तावत् प्रतिविधीयते यदुत-श्राद्धाना दिनरात्रिचातुर्मासिकवार्षिकजन्मकृत्यप्रतिपादके श्राद्धविधावेव तावत् द्रव्योत्सर्पणां कृत्वाऽऽरात्रिकादि-विधानादिना देवद्रव्यस्य वृद्धिः कार्येति प्रोचिवासः पण्डितप्रवरा श्रीरत्नशेखरसूरयः। तथाच तत्पाठः—जिन-धनस्य—देवद्रव्यस्य, वृद्धि मालोद्घट्टनेन्द्रमालादि-परिधानपरिधापनिकाधौतिकादिमोचनद्रव्योत्सर्पणपूर्वकारा-त्रिकविधानादिना। अत्र हि स्पष्टमेवोत्सर्पणाकरणं तत्पूर्वकमर्हतामारात्रिकादिविधानं तद्द्रव्यस्योपयोगश्च देव-द्रव्यवृद्ध्यर्थमेवेति। न च वाच्यमुत्सर्पणशब्दोऽत्र प्रक्षेप-वाचक इति। यतः कोशेषु काव्येषु स्वकीयपरकीय-शास्त्रेषु च क्वचन प्रयुक्त उत्सर्पणशब्दः, न च क्वचनापि प्रक्षेपार्थक आख्यातस्तदिदं न विना निरन्तरसुहृदः प्रत्येष्यन्त्यन्ये, सहृदयास्त्ववगतपूर्वा एव, यदुत-मत्यज्ञाप्य-जानता खलु तेन, यत्स्वरचनापि सुर्यादिप्रदर्शिते सारे देवद्रव्यवृद्ध्यर्थं आरात्रिकादिकमुत्सर्पणपूर्वकं करणीयं दर्शितं स्यात्, । करोमि मिथ्यादुष्कृत। दर्शितं च वाग्ये शास्त्रीयमिति मिथ्यादुष्कृतदानमिषाऽर्थपरावृत्तिरियं तस्य। किञ्च—यदि प्रक्षेपार्थस्तत्रोत्सर्पणशब्दोऽत्राभिप्रेतोऽभविष्यत् नैवाख्यस्यत् द्रव्योत्सर्पणेति। यतः प्रागेवास्ति द्रव्यशब्दात् मोचनशब्दः प्रक्षेपार्थक एव। ततः 'कृतश्च शीलविध्वंसो न चानङ्गः शमं गत 'इतिन्याय आयातः। अन्यच्च स्वयमेव आचार्यपादा एतद् द्वारविवेचनप्रसङ्गे यानि मोच्यानि आचक्षते, तत्र न लेशतोऽपि आरात्रिके मोचनमाख्यान्ति। किञ्च—तत्र विवेचने स्पष्टमेवोदितं मालोद्घट्टनविषयं, तथा च तत्पाठः "तथा देवद्रव्य-

वृद्ध्यर्थं प्रतिवर्षं मालोद्घट्टनं कार्यं। तत्र चैन्द्रयन्या वा माला प्रतिवर्षं यथाशक्ति ग्राह्या "।

## उत्सर्पणशब्दार्थविचारः। (२५)

उवाच धर्मादिमुनिर्विचारमपोह्य शास्त्रीयमुदीर्णमोहः। उत्सर्पणं शास्त्रकृतां मतं न, जिनेन्द्रपूजादिविधौ विधेयम् ॥१॥ परस्परं मा कलिरार्हतानां, भूत् शान्तिकाले जिनपूजनादौ। इति व्यकल्पि श्रमणादिसङ्घैरुत्सर्पणं प्राक्तनकालग न तत् ॥२॥ चैत्यादिकेऽभूत् द्रविणस्य कार्यं, तदा जनानां प्रबलं ततस्तत्। क्षिप्तं जिनानां द्रविणोच्चये प्राक्, न तेन साधरणताऽस्य नष्टा ॥३॥ ततः प्रवीणैर्गणनेतृमुख्यैः, शास्त्रानुसारेण सुनिर्णया वाक्। पत्रेण स्पष्टा गदिता हिताय, सर्वस्य सङ्घस्य तथा च तन्मुनेः ॥४॥ तथापि काशीस्थबुधोपसेवा–लब्धं पदं स्वीयमनुस्मरन् सः। श्रीजैनशास्त्रे निपुणत्वमग्र्यमाचार्यताङ्कं द्रविणव्ययाच्च ॥५॥ मुख्यान् गणेशान् विबुधान् गणींश्च, मुनीश्वरान् शास्त्रसमिद्धबोधान्। प्रत्यष्ठितोच्चैः श्रुतवाक्यसंश्रिता आरात्रिकादौ गदितोत्सृपिस्तदा ॥६॥ जिनेन्द्ररिक्थस्य विवृद्धये च, न व्यत्ययोऽस्यापरथा प्रयुक्तेः। चेद्दृश्यते तर्हि करोमि मिथ्यादुष्कृत्यमात्मोज्ज्वलताकृतेऽहम् ॥७॥ सूरीश्वरैः श्राद्धविधौ न्यगादि, रत्नादिभिः पण्डितवर्यशेखरैः। आरात्रिकादौ द्रविणोत्सृपिः पुरा, कार्याऽर्हतो द्रव्यविवृद्धये यत् ॥८॥ अदर्शि शास्त्रामृतपुष्टबोधैराचार्यमुख्यैर्विदितं जनानां। आनन्दपाथोऽभिधैस्तथापि, सोऽदान्न मिथ्यादुरितं कदाश्रवः ॥९॥ नवीनमर्थं भवभीविमुक्तोऽभाणीत् प्रवीणेषु वितीर्णहास्यम्। उत्सर्पणं मोचनमत्र तेन, मिथ्या ममाघो न मया विधेयम् ॥१०॥ कोशेन तस्य स्तबुकेन

सिद्धः, स्पष्टं त्वदमुं न पिमानमुक्ते'। शास्त्रार्थहेतोर्गिभिश्च ससदमनेकशो य कथितोऽपि नागात् ॥११॥

---

## देवनिर्याणमार्गः (२६)

ननु ऊर्ध्वलोके द्वादशादयो विमानप्रस्तटाः, अधोलोके च त्रयोदशादयः प्रस्तटा कथ्यन्ते। तन्मध्ये इन्द्रका आवलिकाप्रविष्टाश्च दिग्विदिक्षु कथ्यन्ते। तत्र कथं प्रस्तटत्वं ? केन सम्बन्धेनावलिकाप्रविष्टत्वं चेति ?।

आवलिकाप्रविष्टविमाननरकावासानामपान्तरालपृथिव्या अस्तित्वं, तेन तेषां सम्बद्धत्वं न गम्यते। न चैतत् स्वमनीषिकाविजृम्भितं। यतः श्रीश्यामाचार्यपादा बादरपृथ्वीकायानां पर्याप्तानां स्थानानि प्रतिपादयन्तो विमाननरकावासाधारभूतायाः पृथिव्याः प्रस्तटशब्दाः सत्वं यथाहुः–'नरयपत्थडेसु० विमाणपत्थडेसु० चेत्येताभ्यां पदाभ्यां द्वितीयस्थानप्रज्ञापनापदे। न चात्र तत्तत्प्रस्तटशब्देन विमानादीनां समुदायो गृहीतस्तद्व्याप्त्यर्थमिति। यतः श्रीमलयगिरिपादाः स्पष्टतया तदन्तरालमेव प्रस्तटेन गृहीता यथाचख्युस्तत्सूत्रं, 'तत्पाठश्चायं–"नरकप्रस्तटेषु–नरकभूमिरूपेषु। अत्रापि नरकनरकावलिकाग्रहणेन केवला एव नरकावासाः परिगृह्यन्ते, नरकप्रस्तटग्रहणेन तु नरकापान्तरालमपि'। तथा "विमानप्रस्तटेषु–विमानभूमिकारूपेषु। अत्रापि प्रस्तटग्रहणं विमानापान्तरालभाविनामपि यथागम्भवभाविनां बादरपर्याप्तपृथ्वीकायिकानां स्थानपरिग्रहार्थ'मिति। एवं च प्रस्तटानां पृथ्व्याधारता, आवलिकाप्रविष्टानामपि च तथात्वं चाविरादरवदं विदुषामिति।

ननु प्रस्तटानामावलिकाप्रविष्टविमाननरकावासानां प्रज्ञाप-

नास्थानपदोक्तप्रस्तटपदाभ्यां पृथ्व्याधारता चेत् सिध्यति, तदा स्थाने स्थाने सूत्रेषु यत् पृथ्वीनामष्टकं परिसङ्ख्यातं तत्किमिति न विरुध्यते ?। सत्यं, किमु विमाननरकावासानां महत्तमानां नाधारः पृथ्वीरूप इति मन्यसे ?, परःसहस्रयोजनानां तदधस्त-लपृथिव्याः प्रतिपादितत्वान्नेति चेत्तत्र पृथ्वीसङ्ख्यानस्य का गतिः ?. न च वाच्यं सोर्वी नोर्वी, न च पृथु-लेति न गण्यते। ईषत्प्राग्भाराख्याष्टमपृथ्व्युरुपृथुत्वापे-क्षयाऽतिशयेन तद्द्वयवत्त्वात् तत्तलपृथ्वीनामिति। कान्दि-शिका वयमिति चेदनुसरत सूत्रेरितां दिशं, कामिति ? चेदिमामेव—पृथ्वीनां रत्नप्रभादीनां सप्तानां यावत्त्रसनाडि-व्यापकमहत्त्वपरःशतसहस्रयोजनपिण्डात्मकतया ईषत्प्राग्भा-रायाश्च स्वस्थाने यावल्लोकं व्याप्तेः। न चैवं विमाननर-कप्रस्तटानामन्तराले, पृथ्वीभावेऽपि तथाव्याप्त्याद्यभावादिति।

एवं च प्रकीर्णकेषु विमानेषु नरकावासेषु चाधस्तलपृथ्व्या भावेऽपि तदन्तराले तदभावः, न च प्रस्तटवत्तत्र पृथ्व्याः सत्ता, प्रस्तटानामेव तत्र ग्रहादिति।

ननु आवलिकाप्रविष्टविमाननरकावासानामिवा-सुरादीनां यानि भवनानि तदपान्तराले पृथ्वी अस्ति न वेति ? चेदस्तीति ब्रूमः। यत आहुः श्रीमलयगिरिपादाः स्थानपदवृत्तौ—"इह भवनग्रहणेन भवनानामेव केवलानां ग्रहणं, भवनप्रस्तटग्रहणेन तु भवनानामपान्तरालस्यापी'ति। 'प्रस्तटा वेश्मभूमिकल्पा' इति सङ्ग्रहणीवृत्तौ।

नन्वेवं भवनानां सापान्तरालाः प्रस्तटाश्चेत् किमि-त्यूर्ध्वलोके त्रिषष्टिरधोलोके चैकोनपञ्चाशदेव शास्त्रे प्रतिपादिता ? इति।

तत्र हि पूर्वपूर्वप्रस्तटविमाननरकावाससङ्ख्या हीनहीनोत्तरोत्तरस्मिन् प्रस्तटे इति तेषां परिगणनं युक्तं।

परमेवं भरनभस्तटेषु नेति नात्र तत् इति सम्भाव्यते ।

ननु सौधर्मेशानयोः कल्पात् स्वकाचिर्याणमार्गो भिन्नदिक्कश्च यथा तथाग्रेतनानामपि नियतोऽनियतो वेति ?।

नियत एव । यत आवश्यकचूर्णिजम्बूद्वीपप्रज्ञप्त्योर्जिनजन्ममहोत्सवर्णन उक्तं—अत्र हि कल्पभेदेन निर्याणमार्गो भिन्नदिक उक्त । आव० चू०—सोहम्मगाणं सणंकुमारगाणं बंभलोयगाणं महासुक्कगाणं पानयगाणं इंदाण सुघोसा घंटा हरिणगमेसी पादत्ताणीयाहिवती उत्तरिल्ला णिज्जाणभूमि दाहिणपुरत्थिमिल्लो रतिकरगपव्वतो, ईसाणगाण माहिंदलंतकसहस्सारअच्चुआण इदागं महाघोसा घण्टा लहुपरक्कमे पादत्ताणीयाहिवती दक्खिणिल्लिए णिज्जाणमग्गे उत्तरपुरत्थिमिल्ले रतिकरगपव्वते पृ० १४१) । पुप्फओ विमाणकारी दक्खिणा णिज्जाणभूमी उत्तरपुरत्थिमिल्लो रतिकरपव्वतो (पृ० १४२) सोहम्मस्स कप्पस्स मज्झंमज्झेण तं दिव्वं देवड्ढिं जाव उवदंसेमाणे जेणेव सोहम्मस्स उत्तरिल्ले णिज्जाणमग्गे तेणेव उवागच्छति उवागच्छित्ता जोयणसयसाहस्सिएहिं विग्गहेहिं ओवयमाणे य वीतीवयमाणे य ताए उक्किट्ठाए जाव देवगतीए वीतीवयमाणे २ तिरियमसंखेज्जाण दीवसमुद्दाणं मज्झंमज्झेणं जेणेव णंदीसरे दीवे (पृ० १४३) जम्बू० प्र०—सव्विड्ढीए जाव रवेणं सोहम्मस्स कप्पस्स मज्झंमज्झेणं तं दिव्वं देवड्ढिं जाव उवदंसेमाणे२ जेणेव सोहम्मस्स कप्पस्स उत्तरिल्ले णिज्जाणमग्गे तेणेव उवागच्छइ उवागच्छित्ता जोअणसयसाहस्सीएहिं विग्गहेहिं ओवयमाणे२ ताए उक्किट्ठाए जाव देवगईए वीईवयमाणे तिरियमसंखिज्जाणं दीवसमुद्दाणं मज्झमज्झेण जेणेव णंदीसरवरे दीवे जेणेव दाहिणपुरत्थिमिल्ले रइकरपव्वए (पृ० ४०२) । सोहम्म-

गाणं सणंकुमारगाणं बंभलोअगाणं महासुक्कयाणं
पाणयगाणं इंदाणं सुघोसा घण्टा हरिणेगमेसी
पायत्ताणीआहिवई उत्तरिल्ला णिज्जाणभूमी दाहिणपुर-
त्थिमिल्ले रइकरगपव्वए, ईसाणगाणं माहिंदलंतगसहस्सार-
अच्चुअगाण य इंदाग महाघोसा घण्टा लहुपरक्कमो
पायत्ताणीआहिवई दक्खिणिल्ले णिज्जाणमग्गे उत्तरपुरत्थि-
मिल्ले रइकरगपव्वए (पृ० ४०५)।

ननु कल्पवासिनामेव नियतो निर्याणमार्गो ? यदुता-
सुरादीनामधोवासिनामपीतिचेद्। अधोवासिनामपि स तथैव।
चमरस्य तिगिंछेत्यभिधस्य बलेश्च वैरोचनाभिधानस्योत्
त्पातपर्वतस्य श्रीभगवत्यां द्वितीयशतकाष्टमोद्देशे च
स्पष्टमेवाभिधानात्। तत्पाठः—'उप्पायपव्वए'त्ति, तिर्यग्लो-
कगमनाय यत्रागत्योत्पतति स उत्पातपर्वत इति (पृ० १४४)
अरुणवरस्स दीवस्स बाहिरिल्लाओ वेइयंताओ अरुणोदयं
समुद्दं बायालीसं जोयणसहस्साइं ओगाहित्ता एत्थ णं
चमरस्स असुरिंदस्स असुरकुमाररण्णो तिगिच्छयकूडे नामं
उप्पायपव्वए पण्णत्ते (पृ० १४४) पालगं विमाणं उत्त-
रिल्ले निज्जाणमग्गे (पृ० ७००) एगे अबीए फलिहर-
यणमायाए महया अमरिसं वहमाणे चमरचंचाए रायहा-
णीए मज्झंमज्झेणं निग्गच्छइ २ त्ता जेणेव तिगिच्छकूटे उप्पा-
यपव्वए तेणामेव उवागच्छइ २ त्ता वेउव्वियसमुग्घाएणं
समोहणइ २ त्ता संखेज्जाइं जोयणाइं जाव उत्तरवेउव्वि-
यरूवं विउव्वइ २ त्ता ताए उक्किट्ठाए जाव जेणेव पुढवीसि-
लापट्टए जेणेव मम अंतिए (पृ० १७२)। तते णं से
चमरे असुरिंदे असुरराया तं जलंतं जाव भयंकरं वज्जम-
भिमुहं आवयमाणं पासइ पासइत्ता झियाति पिहाइ
झियायित्ता पिहाइत्ता तहेव संभग्गमउडविडए सालंब-
हत्थाभरणे उड्ढंपाए अहोसिरे कक्खागयसेयंपि व

विणिग्गुयमाणे २ ताए उक्किट्ठाए जाव तिरियमसंखेज्जाणं दीवसमुद्दाणं मज्झंमज्झेणं वीईवयमाणे २ जेणेव जंबुद्दीवे २ जाव जेणेव असोगवरपायवे जेणेव मम अंतिए तेणेव उवागच्छइ (पृ० १७३)। यथा चमरसत्कस्य द्वितीयशतकाष्टमोद्देशकाभिहितस्यैव तिगिच्छिकूटाभिधानस्योत्पातपर्वतस्य प्रमाणमभिहितं तथाऽस्यापि रुचकेन्द्रस्य वाच्यं (पृ० ७१८)। दिव्वाए देवगईए वज्जस्स वीहिं अणुगच्छमाणे २ तिरियमसंखेज्जाणं दीवसमुद्दाणं मज्झंमज्झेणं जाव जेणेव असोगवरपायवे जेणेव ममं अंतिए तेणेव उवागच्छइ (पृ० १७६)। सोहम्मवडेंसयस्स महाविमाणस्स पुरच्छिमेणं सोहम्मे कप्पे असंखेज्जाइं जोयणाइं वीतिवइत्ता एत्थ णं सक्कस्स देविंदस्स देवरन्नो सोमस्स महारन्नो सक्कप्पभे नाम महाविमाणे पण्णत्ते (पृ० १९४–५)। प्रज्ञापना—इह भवनग्रहणेन भवनानामेव केवलानां ग्रहणं, भवनप्रस्तटग्रहणेन तु भवनानामपान्तरालस्यापि। तथा नरकेषु—प्रकीर्णकरूपेषु नरकावासेषु, नरकावलिकासु—आवलिकाव्यवस्थितेषु, नरकावासेषु — नरकभूमिरूपेषु, अत्रापि नरकनरकावलिद्वादशदेवलोकपरिग्रहः। विमानेषु—ग्रैवेयकसम्बन्धिषु प्रकीर्णकरूपेषु, विमानावलिकासु—आवलिकाप्रविष्टेषु ग्रैवेयकादिविमानेषु, विमानप्रस्तटेषु—विमानभूमिकारूपेषु, अत्रापि प्रस्तटग्रहणं विमानापान्तरालभाविनामपि यथासम्भवभाविनां बादरपर्याप्तपृथ्वीकायिकानां स्थानपरिग्रहार्थं (प्रज्ञा० पृ० ७३)।

ननु निर्याणमार्गेण कल्पवासिनां उत्पातपर्वतेनाधोवासिनां तिर्यग्लोकयागमनं किं तदन्तरालस्थानां देवदेवीनामृद्धिदर्शनाय ? अन्यस्मै वा प्रयोजनायेति चेत्। केचित्कथयन्ति यत्स्वसमृद्धिदर्शनाय निर्याणमार्गेण निर्यान्ति कल्पेशादयः। उल्लिखन्ति च श्रीजम्बूद्वीपप्रज्ञप्तिसूत्रजिन-

महानिर्गमस्थानीयसौधर्मेन्द्रवर्णनगतं 'उवदंसेमाणे'त्ति पदं स्योक्तदार्ढ्याय, परं तदुक्तं न सम्यक् प्रतिभाति। यतो निर्गममार्गोऽरुणोदमवगाह्य द्विचत्वारिंशत्सहस्राणि। ततः परं किमु देवा देव्यश्च तत्कल्पविमानानि च न सन्ति ?। ततश्च 'उवदंसेमाणे'त्ति प्रासङ्गिकं, न तु तावदतिक्रमणप्रयोजनभूतं, तन्मार्गात्परत एव बहूनां विमानानां भावात् आवलिकाप्रविष्टानां सर्वविमानानामसङ्ख्ययोजनबाहल्यनियमात्। किञ्च–न केवलं जिनमहाय तन्मार्गेण निर्गमः, अन्यदापि तन्मार्गेणैव निर्गमात्। यथा चमरस्य सौधर्मेन्द्रपराभवाय भयमुक्तौ भगवन्महावीरवन्दनाद्यर्थं चागच्छतोप्युत्पातपर्वतमार्गेणारुणोदाधःस्थितेनैवागमनं दृश्यते भगवत्यां स्पष्टतया।

ननु अरुणोदधिमवगाह्य द्विचत्वारिंशतं योजनानां सहस्राण्युपरि सपक्षसप्रतिदिशं दक्षिणायां दिश्यैशानस्योत्तरस्यां च सौधर्मस्य निर्गममार्गः स्वस्वकल्पान्निर्णीतोऽस्ति। स च निर्याणमार्गदेशः स्वस्वकल्पावतंसकविमानात् कियद्दूरमिति ? चेद्। असङ्ख्येयानि योजनानि।

ननु सौधर्मस्योडुनामकमिन्द्रविमानं पञ्चचत्वारिंशच्छतसहस्राणि योजनानां तदनन्तरं चावलिकाप्रविष्टमाद्यं त्र्यस्रविमानं तच्चावलिकाप्रविष्टत्वादायामविष्कम्भाभ्यामसङ्ख्येययोजनमानं ततः किं तमुल्लङ्घ्य निर्याणमार्गः सौधर्मस्येति ?। चेन्न, तस्य त्र्यस्रस्यावलिकाप्रविष्टस्य पर्यन्तो नैतावता किन्तु देवद्वीपस्यान्त्यस्य जगती पर्यन्तेन, एवं च यदि ऋद्धिप्रदर्शनाय निर्याणमार्गेण निर्गमश्चेदधिशानां तर्हि तेन देवद्वीपान्तसमेन स्वयंभूरमणोदधिपर्यन्ते निर्गमः कार्यः स्यादिति।

ननु सौधर्मे ईशाने च कल्पे लोकपालानां यानि

सौमादीनि विमानानि तान्युत्तरादिषु दिक्षु स्वस्वेन्द्रकात् कियद्दूरेण विद्यन्ते ? इति। तान्यपि स्वस्वेन्द्रकादसङ्ख्यातयोजनानि दूरेण । तत्स्थानमप्यरुणोदधिसरद्विचत्वारिंशद्योजनसहस्रावगाहादूर्ध्वमेकदिगिति ।

ननु तमस्कायस्योत्थानं कुतः कियन्त देशं यावद्गतिः कानि तस्य नामानि किं तानि सार्थकानीतराणि वेति?।

जम्बूद्वीपादसङ्ख्येयतमो योऽरुणवरो द्वीपः, तस्य बाह्यवेदिकान्तादरुणोदधिं द्वाचत्वारिंशद्योजनसहस्राण्यवगाह्य यो देशस्तस्मादुत्थानं तमस्कायस्य, स चोर्ध्वं ब्रह्मदेवलोकगतरिष्टप्रस्तरं यावद् गच्छति। गच्छंश्च सौधर्मादींश्चतुरोऽपि स्वकायेनाऽऽवृणोति। स्वरूपं चास्य व्यासतः श्रीव्याख्याप्रज्ञप्तिषष्ठशतकपञ्चमोद्देशात् ज्ञेयं। नामानि चास्यात्र समवायाङ्गे च–तम.१, तमस्काय २, अन्धकारः ३, महान्धकारः४, लोकान्धकारः ५, लोकतमिस्रः ६, देवान्धकारः७, देवतमिस्रं८, देवारण्यं ९, देवव्यूहः१०, देवपरिघः ११, देवप्रतिक्षोभः १२, अरुणोदकः १३ इत्येवं परिगणितानि यथार्थानि, न तु निरर्थकानर्थकानि ।

ननु यथा कल्पेन्द्रौ परिहृत्य तमस्कायभागं स्वस्वनिर्याणमार्गेण निर्गच्छतः, तेनैवान्येऽपि देवा निर्यान्ति यथा कथञ्चिद् वेति ?।

श्रीराजप्रश्नीयोपाङ्गवर्णितश्रीसूर्याभस्यापि 'जेणेव सोहम्मे कप्पे उत्तरिल्ले निज्जाणमग्गे तेणेव उवागच्छइ'त्ति जिनवचनादवगम्यते यत्सर्वेषां देवानां नियतः स्वस्वकल्पस्थो निर्याणमार्ग इति ।

ननु स तमस्कायो देवानामपि बाधको ?, येन तत्परिहरणायारुणोदधिं तावन्मात्रं निर्याणमार्गेण उल्लङ्घ्य पश्चादवतरन्तीति । 'देवेवि णं अत्थेगइए जेण तप्पढमयाए पासि-

त्ताणं खुभाएज्जा अह णं अभिसमागच्छेज्जा तओ सीहं २ तुरियं २ खिप्पामेव वीइवएज्जे'तिभगवतीवचनात् स देवानामपि भयङ्कर इति तत्परिहरणं। ततश्च निर्याणमार्गेण निर्गम उचित एव।

ननु माहेन्द्रान्तानां देवानां भवतु तमस्कायपरिहाराय नियतनिर्याणमार्गेण निर्गमः, परं ब्रह्मदेवादीनामपि कथं नियतनिर्याणमार्गेण निर्गमः ?, आवश्यकचूर्ण्यादिषु सौधर्मदेवादिवत्तेषामपि तथोक्तेरिति। अधोऽवतरतां तेषामपि स तथैव बाधक इति तं परिहृत्य तद्बहिस्तान्निर्याणमार्गेण निर्गत्याधोऽवतरणमिति।

ननु 'जइदेवुत्तरविकिये'तिवचनात् देवानां नियत उद्योतनाम्न उदय इति किं तत् तमस्कायक्षोभरोधाय न प्रभवतीति ? चेत्। सत्यं, देवानामुद्योतनाम्नो नियत उदयः, परं तमस्कायो घनस्तादृशो येन तत्र देवानामपि व्यामोहः स्यात्। एतच्च देवान्धकारादीनां तमस्कायाभिधानानामन्वर्थं पर्यालोचयतामवगन्तुं सुशकमेवेति।

ननु तमस्कायः कृष्णराजीभ्यः कियान् महानिति ? चेत्। अर्धमाद्वादशगुणः सामान्येन। यतः कृष्णराजीनां पारगमने सेनोदाहृतिः. तमस्कायस्य तु षण्मास्येति।

ननु तर्हि शास्त्रेषु सप्तैव पृथिव्यः,सेषत्प्राग्भाराश्चाष्टावेवेति यन्निर्णीतं तद्विरुध्यते, विमाननरकावासानामन्तरालेऽपि पृथ्वीनामङ्गीक्रियमाणत्वादिति चेत्।

सत्यं, यथा रत्नप्रभाद्याः सप्त सर्वतो वलयैर्वेष्टितास्तदाधाराश्च, ईषत्प्राग्भारा च केवलाकाशप्रतिष्ठा तथा नेमाः, किन्तु विहाय पुष्पावकीर्णानि विमानानि नरकावासाँश्च तथाविधान् तानेवावलिकाप्रविष्टानाश्रित्य तदाश्रिता एव विमाननरकप्रस्तटभूमय इति न विरोधलेशोऽप्येतस्यामुक्तौ, प्रत्युत तदपलापिनां श्रीप्रज्ञापनासूत्रवृत्तिभ्यां सङ्ग्रहणीवृत्त्यादिभिश्च महान् विरोध इति।

ननु उर्ध्वलोके त्रिषष्टिरधोलोके चैकोनपञ्चाशत् प्रतराः सन्तीत्यत्र न कोऽपि विवादः,परं ते पृथ्वीरूपा न, किन्तु दिग्-विदिक्स्थितावलिकाप्रविष्टविमाननरकावासैस्तथा भासन्ते यथा प्रतरा इति। न चैवं पृथ्वीसङ्ख्यानं तदाधारपृथ्वीस्वीकारे निरुध्यतेतमामिति चेत्।

सत्यं, पर यथा वेश्मसु बहुका भूमिका न गृहपार्थक्यगणनायां न च ता निराधाराः कल्पिताश्च, एवमेवेमे अपि प्रस्तराः। यतः श्रीहरिभद्रसूरयस्तत्त्वार्थवृत्तौ, 'आद्यपृथिव्यां नरकप्रस्तरा वेश्मभूमिकाकल्पास्त्रयोदशेति। श्रीसिद्धसेनसूरयस्तत्त्वार्थवृत्तावेवाहु.—'रत्नप्रभापृथिव्यां नरकप्रस्तरास्त्रयोदश वेश्मभूमिकाकल्पा' इति पृथ्वीपरिसङ्ख्यानं तु मुख्यतया। तथा च प्रस्तररूपाया गौणरूपायाः स्वीकारेऽपि न बाधः। आहुश्च तत्त्वार्थवृत्तावेव श्रीसिद्धसेनसूरयः—'इतरा अपि च प्रतरादिभेदेन भिद्यमाना बहुत्वमनुयान्ति स्वस्थान एवेति' 'निकाय्यभूमिकाप्रतराः प्रस्तटाः स्यु'रिति। लोकप्रकाशे। एवं निर्याणमार्गस्य नियतता प्रतिकल्पं यावद्-सुरादीनामुत्पातपर्वतानां च शास्त्रे प्रतिपादिता या सा लोकपालविमानस्थानमन्यतमद्वा कारणमाश्रित्य ज्ञेया।

---

## अचित्ताहारद्वात्रिंशिका (२७)

ज्ञानाद्यर्था तनुस्तस्मै, हित आहार इत्यमुम्। जगुर्जिनेशा निष्पापं, मुनीना हितकाम्यया ॥१॥ महाव्रतग्रहेऽस्नकृतो, गृहाण्युत्सर्गतः कृती। प्रासुकं तत्र साधूनामाचारे न हि नोदनम् ॥२॥ यन्न ते मनसा वाचा, कर्मणा प्रासुकीक्रियाम्। कुर्वते, सर्वसत्त्वानां, पीडायाः परिहारिणः ॥३॥ (अत्र शङ्कते) देशव्रतोद्यता ये तु, सारम्भा गृहमेधिनः। प्रासुकाप्रासुकाहारे, नैषामंशाद्विशिष्टता ॥४॥ यथाऽऽहृतौ वधो दुष्टः, सत्त्वानां गृहिणां भवेत्। सचि-

त्तानां तथाऽचित्तेष्वाहृतेषु न किंकृतः ? ॥५॥ अदने तु सजीवस्य, यावदाहृति हिंसनम्। निर्जीवस्यादने हिंसाऽधिका प्रचुरहिंसनात् ॥६॥ यथोपभोग्यबाहुल्यात्, हिंसादण्डाधिकत्वतः। अनर्थदण्डिता तस्या, अतिचारोदितिव्रते ॥७॥ तद्वदत्रापि सत्त्वाना-मधिकानाम् विहिंसनात्। न गुणः किन्तु दुष्टत्वं, प्राकृतेश्चापि को गुणः ? ॥८॥ प्रासुकीकरणे किञ्च, वह्न्यादीनां वधक्रिया। अगारिणां न तद्योग्या, प्रतिज्ञा प्रासुकादने ॥९॥

उ०-सत्यं किन्तु हृदा प्राणि-भक्षणं परिजह्रिरे। कायेन च न चादन्ति, सचित्तं गृहमेधिनः ॥१०॥ प्रासुकीकरणे काय-योगो व्याप्रियते परम्। नेन्द्रियाणि ततो नाति-दुष्टता प्राणिनाम् वधे ॥११॥ स्यात्तन्नैवेन्द्रियोगेष्वीर्यापथो बन्धः, केवलेषु जिनेशितुः। यास्वाद-प्रसङ्गो हितकृन्नतु ॥१२॥ योगजन्या भवेद्धिंसा, द्रव्यतो भावतः पुनः। इन्द्रियाणि समाश्रित्य, तदत्रास्वाद-वर्जनम् ॥१३॥ साधकं नेन्द्रियं कार्यमेनोभारविवर्जकैः। प्रासुकं तत्सुधीरद्यात्, योगारम्भोज्झनेऽक्षमः ॥१४॥ रसनारससम्पर्क-मुज्झन् प्राणिदयालुताम्। दधान आत्मनि भूयांसो-प्रष्ठ-मीप्सन्नखिलसंवरम् ॥१५॥ अचित्तं यदि ऽश्नुयुस्त्यक्त्वा सजीवकम्। का हानिर्यत्ततोऽनर्थ-दण्डोऽस्माकं प्रसज्यते ॥१६॥ किञ्चाचित्ताहृतौ साधोर्दानेऽघः-कर्मता नहि। क्वापि यत्स्वार्थमारम्भं करोत्येष निरन्तरं ॥१७॥ अभ्युपगममाश्रित्य, प्रोक्तमेतत् यतो नहि। निरारम्भा अनासक्ताः, कुटुम्बेषु गृहाश्रमाः ॥१८॥ तथा चाङ्गजभृत्यादि-कृते या पचनक्रिया। सा स्यात्ततः स्वयं दोषं, वर्जयेद् वधसंश्रयम् ॥१९॥ गोकुला-दिकृते चाम्बु, त्रिदण्डोत्कलितं गृही। कुरुते दधिमन्थार्थं, तथा तत्प्रासुकीकृतिः ॥२०॥ प्राघुर्णकाय खाद्यादि स्वार्थं

च यदि सत्क्रियाम्। कुर्वन् कुर्यात्तदा तस्याचित्ताहारः फलेग्रहि ॥२१॥ अप्राप्तावेषणीयस्य, स्वय निर्जीवताकृतौ। दुष्टता नैव पूर्वोक्त–युक्त्या चिन्त्यमिदं हृदि ॥२२॥ एवमेवार्द्रहरित–प्रत्याख्यानेऽपि शुद्धता। विशेषादायुषो बन्धात्, तिथौ तत्र वर्जनात् ॥२३॥ यथा घृष्टिमता विश्वे, कालमाश्रित्य सद्गुणा। निर्गुणा दोषदात्री चानेहास्तिथ्यादिकस्तथा ॥२४॥ यथा सूर्यातपो भिन्न-भिन्नकालाश्रितो भुवि। नाशयेद्विविधातङ्कान्, जलद्वारेण जन्मिनाम् ॥२५॥ तथा सर्वाणि ज्योतींषि, समाश्रित्य तिथीतरान्। कुर्वाणा आयुषो बन्धे, हेत्वहेतुत्वमादधुः ॥२६॥ या लेश्या स्वायुषो बन्धानेहसि प्राग्गतिप्रदा। तल्लेश्याया विशुद्ध्यर्थमारम्भ वर्जयेत्तिथौ ॥२७॥ आयुषो बन्धनाद् धर्मः, प्राग् य आसेवितो जनैः। स हि प्रेत्यायुषो बन्धे, सल्लेश्याया फलोन्मुखः ॥२८॥ तदा चेदशुभा लेश्या, प्राणिनां प्रीणितात्मनां। अशुभे शुभमाक्रामेत्, विषे दुग्धं यथा विषात् ॥२९॥ यथा वा नृपमातङ्ग, आहारादीष्टमाप्नुवन्। तिर्यक्त्वं पापधामानुभवेत् तद्वदयं कृती ॥३०॥ तिथीनां दशकं श्राद्धः, समाश्रित्य त्यजन् वधम्। आद्यान्त्यतिथ्योः सङ्कल्पं, प्रशस्तं विदधत् शुभः ॥३१॥ सम्यक्त्वानुगमात्मशुद्धिविधये तीर्थाधिपोक्त्याश्रित, श्राद्धो द्वादशकं सतामनुचरन् शुद्धया व्रताना त्रिधा। अन्ते जक्षदजीवमाप्तचरणाम्भोजेऽलिसाम्यं दधत्, किं शुद्धव्रतधारिणां धुरि पदे नानन्दमुखामयेत् ॥३२॥

---

## पौषधपरामर्शः (२८)

ननु खाद्याः कथयन्ति यदुत–पर्वान्यदिनेषु पौषधस्य कृतिरविधिः। यत आवश्यकवृत्ति–पञ्चाशकवृत्ति–

श्रावकप्रज्ञप्तिवृत्ति–धर्मसङ्ग्रहादिषु तस्य प्रतिनियतदिवसानुष्ठेयतामुक्त्वा प्रतिदिवसाचरणीयतां स्पष्टतया निषेधयन्ति शास्त्रकारा इति। तत्र किं? तत्त्वमिति।

प्राक् तेषामवबोध एव न सम्यक्। यत एतद्वाक्यस्य प्रकरणमपि न तैरवबुद्धं। किं तत्र प्रकरणं कथं चानवबुध्य प्रकरणविरुद्धं प्रलपितं तैरिति, चेच्छृणु–द्वादश व्रतानि तत्र व्याख्यातानि, उपसंहृत्य च द्वादशानां व्रतानां प्रत्येकं वर्णनं पूर्वतनसमग्रः श्रमणोपासकधर्म उपसंहृतः 'इत्येष श्रमणोपासकधर्म' इतिवाक्येन स्पष्टतयाऽऽवश्यके, श्रीपञ्चाशके तु उक्तव्रतानां वक्तव्यशेषमुपदर्शयन्नाहेत्यवतरणेनैव वक्तव्यान्तरता दर्शिता। अत एव नित्यस्मृत्यादिप्रकरणमप्यन्तरा तत्र स्पष्टं कथितं दृश्यते। किञ्च–यदि प्रकरणभेदो न स्यात्तदा 'इत्थं पुण समणोवासगधम्मे'त्ति आवश्यके पृ० ८३८, 'इत्थ उ सावयधम्मे'त्ति पञ्चाशके गा० ३९, 'इत्थ उ समणोवासगधम्मे'त्ति श्रावकप्रज्ञप्तौ च सकलश्रावकधर्माभिधायिना निर्देशो न स्यात्। ननु सर्वत्रापि श्रावकधर्माधिकारे सति किमिदं तत्रैव प्रकरणान्तरमितिचेत्, सर्वत्र तावदणुव्रतादीनां प्रत्येकानां स्वरूपमुक्तमत्र तु समुदितानां तेषां पुनरिति प्रकरणान्तरं, तत एव त्रिष्वपि उपसंहृत्य पुनरारम्भ 'एत्थ पुणो'त्यादिभिरिति। ननु किमर्थमिदं प्रकरणान्तरं सर्वत्रारब्धमिति चेत्, शृणु–'कानि पुनरणुव्रतादीनामित्वराणि (कानि) यावत्कथिकानीति? अत्रोच्यते' इत्यावश्यकोक्तेनावतरणेन 'यतिधर्मे महाव्रतानि यावत्कथिकान्येव भवन्ति अत्र पुनः श्रावकधर्मे' इति पञ्चाशकोक्ततुशब्दार्थविशेषेण 'अधुनैषामणुव्रतादीनां कानि यावत्कथिकानि कानि चेत्वराणि तदेतदाहे'तिश्रावकप्रज्ञप्त्युपक्रमेण च स्पष्टितं

प्रकरणान्तरप्रयोजनं आवश्यकं चेदं । यतः प्रागणुव्रतादिविवरणेन चारित्रसूत्रे 'जावज्जीवाए'त्ति मर्यादादर्शकं पदं यथा, तथा किञ्चिदपि मर्यादादर्शनमकारीति मर्यादादर्शकमिदं प्रकरणान्तरम् । ननु श्रावकप्रज्ञप्तौ 'उवउत्ता गुरुमूले संविग्गा इत्तर व इयरं वे'ति वचनेन पञ्चाशके च 'गुरुमूले सुयधम्मो संविग्गो इत्तरं व इयरं वा । वज्जिज्ज'ति वचनेन च स्पष्टमेव यावत्कथिकमित्वरं चेति मर्यादादर्शनं कृतमेवास्तीति । सत्यं, प्रथमाणुव्रतमात्रविषयमुभयत्रापि, न तु द्वितीयाद्यणुव्रतगुणव्रतादिविषयं । किञ्च—तदपि वृद्धसामाचारीविषयं न तु सूत्रोक्तमर्यादाविषयं । सूत्रे त्वणुव्रतगुणव्रतानां यावत्कथिकत्वं । अत एव 'पंच अणुव्वयाइं तिण्णि गुणव्वयाणि आवकहियाइं'ति सन्त्यप्यावश्यकसूत्रपादेऽक्षराणि । यच्च श्रावकप्रज्ञप्तौ पञ्चाशके चाणुव्रतगुणव्रतानामित्वरत्वमुक्तं 'न तु नियोगतो याव-

ज्जीवमिति गुरवो व्याचक्षते' इति 'प्रायोग्रहणाच्चतुर्मासावधिकान्यपि भवन्ति यन्ती'तिवचनेन तदणुव्रतगुणव्रतानामित्वरिकत्वमत्रानुपात्यपि सामाचार्यनुपाति, यतः श्रावकप्रज्ञप्तावुक्तं 'प्रतिचातुर्मासकमपि तद्ग्रहणं वृद्धपरम्परागततया सामाचार्युपलब्धेरिति' नन्वागतावुभे अपि वस्तुनी प्रकरणान्तरस्य मर्यादादर्शकत्वं चैषां वाक्यानां, पर किमर्थकोऽयमेतावान् प्रयासः ? । सत्यं, खरतराणां खरतरदुर्बोधतमत्वदर्शनार्थस्त्वयं प्रयासः । यतस्ते एतानि वाक्यानि प्रकरणान्तरगतानि मर्यादादर्शकानीति चानवबुध्यैवाबुध्य वा स्वगच्छीयदुराग्रहपुष्ट्यै वा वाक्यानामेषां क्रियाकालत्वमुद्घोषयन्ति, न च विचारलेशोऽपि तेषामुद्भवति यद्यत एतेषां वाक्यानां क्रियाकालत्व उच्यमाने यतिधर्मे महाव्रतानामत्र श्रमणोपासकधर्मे अणुव्रतगुणव्रतानां यावत्कथिकत्वमुक्तं तस्माद्धि तयोर्यतिश्रावकयोर्यावज्जीवमुच्चरणीयानि, यथा-

र्थविधानेन प्रकरणस्य मर्यादाकालदर्शनार्थेन तु सकृदेवोच्चारस्तेषां यावत्कथिकं धरणं। अत एवावश्यके 'यावत्कथिकानीति सकृद्गृहीतानि यावज्जीवमपि भावनीयानी'ति। तद्वदेव च श्रावकप्रज्ञप्तावपि पालनकथनेन मर्यादाकाल एव। अत्र खरतरैः खररटनं कर्त्तुं न शक्यते। यथा प्रतिमोद्वहनविवादे भावनाशब्दस्यानुष्ठानाभावार्थत्वोद्बोधनं कृतं, महाव्रतादीनामकरणं तु निह्नवतमैरपि न शक्यते वक्तुं जैने शासने यत इति। नन्वेवं प्रकरणान्तरत्वेन मर्यादार्थकत्वेन चैषां वाक्यानां विशेषः कः फलितः क्रियार्थात् खरतरोक्तादिति चेत्त्वमेव विचारय। विचारश्च द्वयोरर्थयोः समन्वयं कृत्वा चेच्चेतयसि तदा गमिष्यति नान्यथेति। तथास्तु क्रियार्थत्वे प्रतिनियतदिवसानुष्ठेयावित्यत्र ये केचिद्दिवसा नियमं प्रापिताः पौषधक्रियां प्रति स्युस्तेष्वेव तौ कर्त्तव्यौ, विधानस्योभयगामित्वाच्च तेष्वकरणे अन्यत्र च तयोः करणे प्रायश्चित्तहेतुभूत आज्ञाभङ्ग इति समन्वेमि। मर्यादार्थकत्वे तेषामेवं समन्वयः क्रियते प्रतिनियतो दिवसो यत्रेति विगृह्य दिनमर्यादा नियम्यते। तथा च न तौ दिवसादूनकालीनौ विधेयौ, न च द्व्यादिदिवसान् समकमभिगृह्य बहुदिवसान् यावदुपधानादिषु पौषधानां निरन्तरं विधानेऽपि न तान् दिवसान् समकं गृहीत्वा पौषधोच्चारः कर्तुं शक्योऽनेन विधिना। अन्यच्च विधेरुभयार्थत्वाद्यथैकाधिकदिनानां पौषधा न सहोच्चार्यन्ते, तथैवैकस्मिन् दिन एकश एव पौषधस्य न भूयः स्वीकारः। यथा पौषधे नियतता दिवसस्य तथैवातिथिसंविभागव्रतेऽपीति। न तदप्यनेकाहस्कं, न चैकस्मिन्नहनि भूयः प्रतिपत्तव्यमिति। एवं पौर्वापर्यालोचनया समन्वेमीति। नन्वेवं द्विधाऽन्विते कः शास्त्राण्याचरणां चानुरुध्यते ? इति। द्वितीय एवान्व-

यस्तथाभूतः यतः शास्त्रेषूपधानोद्वहनादिषु प्रत्यहमेकाहो मानेनैव कार्यन्ते पौषधाः, न तु समकं। न च क्वापि गच्छे मुहूर्त्तयामादिमानेनापि पौषधाः कार्यन्ते, खरतरा अप्येवमेव एकाहोमानेन कारयन्ति पौषधान्। न च तथाविधप्रतिपादकान्येभ्योऽन्यानि वचांसि उपलभ्यन्ते। आद्ये त्वन्वये प्राक् तावदागमविरोधः, कोणिकाभयनन्दमणिकारसुबाहादीनामनियतान् दिवसान् त्रीनपि निरन्तरं पौषधकरणस्य श्रूयमाणत्वात्, क्वचिदप्यप्रतिनियतदिवसकृत्यपेक्षया पौषधे प्रायश्चित्तस्यानुक्तेः, प्रत्युत तत्त्वार्थभाष्ये तद्वृत्त्योश्च 'प्रतिपदाद्यन्यतमां तिथिमभिगृह्ये'त्यादीनि वाक्यानि यासु कासुचिदपि तिथिषु पौषधव्रतस्य करणीयतां दर्शयन्ति। ततो मर्यादादर्शकत्वेनान्वय कर्तुमर्हं इति। सामायिकदेशावकाशिकयोर्नित्यमासत्रिपञ्चाहादिका या कालमर्यादा सा न

तावन्तं कालं धारणामपेक्ष्य किन्तु पालनापेक्षमिति। सामायिकदेशावकाशिकयोः प्रतिदिवसं या कर्त्तव्यतोक्ता निषिद्धा च प्रतिनियतदिवसकर्त्तव्यता। अत्र यदि क्रियार्थो गृह्यते तदापद्यते एवार्थहानिपरम्परा। कथमिति ?, खरतराणामभिप्रायेण प्रतिनियतशब्दस्य प्रतिनियतेषु दिनेषु सामायिकदेशावकाशिकयोरकरणे शास्त्रकाराणामाज्ञा सम्पन्ना, सम्पन्ना च पर्वसु तयोर्द्वयोरेकतमस्य करणमाज्ञाभङ्गः प्रायश्चित्तापत्तिश्च तत्करणे इति। किञ्च-प्रतिनियतदिवसस्य पर्वत्वार्थे क्रियमाणे श्रीहरिभद्रसूरिप्रभृतीनामनर्थकस्य बृहन्न्यासस्य कृतेः स्वीकारेण मौढ्यस्यैव स्वीकारः अव्याकृतभाषावक्तृतायाश्चापि स्वीकार प्रसङ्गश्चेति। ननु प्रतिदिवसशब्दस्याव्ययीभावसमासाद् दिवसं दिवसं प्रतिदिवसमिति वीप्सार्थः स्यात् तथा च कथं दिवसमभिव्याप्येति क्रिय

माणो मर्यादार्थो घटामटाठ्यते इति चेन्न ह्यत्रा-
व्ययीभाव एव समासः कार्यः इतीश्वराज्ञा। ननु
सा न, परं कस्कोऽत्र समासः केन सूत्रेण किंवचेति
स्पष्टं दर्शनीयमेवेति। 'प्रात्यवे'त्यादिना सूत्रेण बाहुल्यात्
सप्तम्या अपि 'प्रत्युरसे'तिवत्तत्पुरुषोऽत्र समासः करणीयः।
तथा च प्रकरणार्थानुगतमर्यादाकरणे न काचित् क्षति-
रिति। ननु प्रतिनियतदिवसशब्दस्तत्पुरुषेऽव्युत्पाद्य बहु-
व्रीहावुत्पाद्यते, तत्र यद्यपि तथारेका परं प्रतिदिवस-
शब्दं रूढमव्ययीभावे परावर्त्य बाहुल्याश्रितं प्रतिष्ठितार्थं
प्रति गृहीत्वा प्रत्युरसवत् तत्पुरुषे व्युत्पाद्य दिवस-
स्याभ्यन्तरमित्यर्थकरणं कथं प्रमाणपदवीं प्रापणीयमिति।
चेच्छृणु, प्रथमं तावदव्ययीभावकृतौ वीप्सार्थः स्यात् न
तु मर्यादारूपः प्राकरणिकोऽर्थः, प्राकरणिकाप्राकरणि-
कयोश्च प्राकरणिकस्य बलीयस्त्वात्तत्पुरुषे व्युत्पादनमा-
वश्यकं। अन्यच्च प्रकरणं मर्यादादर्शकार्थकरणरूपमत्रमत्याव्य-
यीभावे बद्धाग्रहीभूय वीप्सार्थः आद्रियते प्रतिनियतदिवसा
अपि प्रतिदिनार्थे आगता एवेति। प्रतिदिवसानुष्ठानस्य
व्यापकतया प्रतिनियतदिवसतया निषेधो न स्यात्, न
स्याच्च प्रतिनियततायाः शास्त्रेष्वनिर्दिष्टत्वात् प्रतिनियत-
दिवसानुष्ठानतया निषेधः, परस्परविप्रतिषिद्धतया च दर्शि-
तमेतदनुष्ठानं तत्र साङ्गत्यमियात्। किञ्च—अव्ययी-
भावाग्रहे ग्रन्थकृतामेव वचनानि दुर्धरविरोधकक्षामध्यासीरन्।
यतः सर्वेऽप्यावश्यकादयः सिद्धान्ताः प्रतिदिवसस्यार्थ-
भावनां स्पष्टतया 'पुनः पुनरुच्चार्यंते' इति। अत्र
चेत्वरेषु सामायिकदेशावकाशयोरेकस्मिन्नेवाहनि पुनः
पुनरुच्चरणं ग्राह्यं, अन्यथा मासादिषु तु पौषधातिथि-
संविभागयोः प्रतिनियतदिनाचरणीययोरपि चतुर्दश्यादि-
पर्वणामनेकेषामापातादस्त्येव तत्। तस्मात्प्रकरणविरोधविल-

यायेर ग्रन्थकृतां कृतीना साङ्गत्यायापि प्रतिदिवसशब्दं तत्पुरुषे विग्रहाराधकेन भाव्य भव्यैरिति। नन्वेवं प्रकरणशास्त्रकारवचनोभयाचीर्णानां विरोधापातादेर्निर्वचनैः पौषधातिथिसंविभागयोः पर्वकर्त्तव्यताया नियमस्यापर्वकर्त्तव्यतायाश्च निषेधो माऽसत्सीत्, पर प्रबलतराण्यन्यानि सन्ति तत्समर्थनाय प्रमाणानि, तानि चैवं क्रमेण १ स्थानाङ्गे १२६ तमे २३२ तमे च पत्रे–'पौषधः पर्वदिनमष्टम्यादि तत्रोपवसनं–अभक्तार्थः' भगवत्यां १३६ पत्रे–'पौषधं पर्वदिनानुष्ठानं, तत्रोपवासः–अवस्थानं' उपासकदशाङ्गे ११ पत्रे–इह पौषधशब्दोऽष्टम्यादिपर्वसु रूढः, तत्र पौषधे उपवासः पौषधोपवास.' समवायाङ्गे १९ पत्रे–'पौषध पर्वदिनमष्टम्यादि तत्रोपवासः–अभक्तार्थः पौषधोपवासः' तत्त्वार्थभाष्ये ८१ पत्रे–'पौषधोपवासो नाम पौषधे उपवासः पौषधोपवास, पौषधः पर्वेत्यनर्थान्तरं' सिद्धसेनीयायां तद्वृत्तौ ९२ पृष्ठे–'रूढ्या पौषधशब्दः पर्वसु वर्तते, पर्वाणि चाष्टम्यादितिथयः पूरणात् पर्वधर्मोपचयहेतुत्वात् तत्र पौषधे पर्वणि उपवास पौषधोपवास.' हारिभद्रीयायां रूढ्येत्यादि उपवासः त्रिविधस्य चतुर्विधस्य वाहारस्य छेदः,' श्रावकप्रज्ञप्तौ १७० पृष्ठे–'इह पौषधशब्दो रूढ्या पर्वसु वर्तते, पर्वाणि चाष्टम्यादितिथय.' इत्यादिष्वपरिमितेषु पौषधस्य पर्वस्वेव कर्त्तव्यता दर्शितेति। सर्वं भवदुदितं विद्यते, परमक्षरतो न भवदुक्ततात्पर्यपोषकं। यतो विचार्यमत्रास्ति, तदेवं–भवन्तः किमेभिः पाठैः पौषधस्य पर्वचारतां दर्शयद्भिः पर्वसु अभक्तार्थादिरवश्य विधेय इति नियमो विधीयते, विधानं वा नवमिति। आद्ये पक्षे स्वीक्रियमाणे न केनापि कोऽपि विवाद, पर्वस्वभक्तार्थकादिविधानस्य नैयत्य यावज्जैनं स्वीकाराद्। अष्ट-

म्यादिषु तु नियमेन कार्य इति तत्त्वार्थवचनमपि
पोपकसस्य, यतस्तद्वृत्तिद्वयं तथैवाह–'अन्यतमां चे'ति
प्रतिपदादितिथिं, अनेन चान्यासु तिथिष्वनियमं दर्शयति,
नावश्यंतया अन्या सु कर्त्तव्यः, अष्टम्यादिषु तु नियमेन
कार्यः इतिसिद्धसेनीया, 'अन्यतमां चे'ति प्रतिपदादिषु
अनियमं दर्शयति, अष्टम्यादिषु नियम.' इति हारि-
भद्रीया, तत्त्वार्थभाष्यकारा अपि 'सोऽष्टमीं चतुर्दशीं
पञ्चदशीं अन्यतमां वा तिथिमभिगृह्येति' वचनेन स्पष्ट-
मष्टमीचतुर्दशीपञ्चदशीर्विहायान्यामप्यभिगृह्य तिथिं चतु-
र्विधस्यापि पौषधस्य करणीयतामाहुः। न च शङ्कनीयं
अन्यत्र विधेरभावात् कथं नियमत्वमत्र स्यात्? सिद्धे
सत्यारम्भो नियमायेतिवचनात्, यतः पौषधिकानामे-
तद्धर्मध्यानमाख्यातं चूर्णिकारैः 'सव्वेसु कालपव्वेसु पस-
त्थो जिणमए हवइ जोगो। अट्ठमीपंचदसीसु य नियमेण

हवेज्ज पोसहिओ ॥१॥ आवश्यकचूर्णिपृष्ठे ३०४ तमे
अत्रान्यत्राहारत्यागादीनां प्राशस्त्यं जिनमते सिद्धमित्य-
भिधायाष्टम्यादिषु तेषां स्पष्टतया नियमकर्त्तव्यता दर्शि-
तास्ति। अत एव पर्वतिथिषु पौषधाकरणस्य प्रतिक्रमण-
मपि श्रावकैः क्रियमाणं वास्तवीं दशामाप्नुते इति।
अन्यच्च यथा यतिधर्ममनाख्याय देशविरतिधर्ममाचक्षमाणो
यतिः स्थावरहिंसादीनामनुमोदको भवति, तथा सूत्रा-
णामेतेषां नियमपरत्वाभावे अपर्वस्वेपु विधीयमानाना-
माहारादीनामनुमोदकत्वापत्तिर्निश्चलतरा स्यादिति। अन्यच्च
रूढ्या पौषधशब्दः पर्वस्वित्यादि व्याख्यानं व्युत्पत्ति-
मात्रमेव, न च व्युत्पत्तयो वाच्यार्थस्वरूपनियताः।
अतोऽगच्छत्यपि सास्नादिमति गोशब्दस्य गच्छत्यर्थव्यु-
त्पन्नस्य प्रवृत्तिः। अतः श्रीअभयदेवाचार्याः प्राहुः व्यु-
त्पाद्य पौषधोपवासशब्दं पर्ववाचकतया धर्मपोषकतया च

समवायाङ्गे–'इयं च व्युत्पत्तिरेव प्रवृत्तिस्तस्य शब्दस्याहारशरीरसत्कारब्रह्मचर्यव्यापारवर्जनेष्वि'ति। किञ्च–यदि अपर्वानुष्ठेयतायाः निषेधार्थं व्युत्पत्तिराश्रीयते तर्हि केवलाभक्तार्थकस्यैव ग्रहः स्यात्। एवं चानिष्टमापद्यते–पर्वादिनेषु अभक्तार्थकरणे महानपाय इति। यच्चान्यत्र शास्त्रेषु व्युत्पत्तिप्रवृत्त्योः पौषधभेदो न दर्शित इत्युच्यते। तच्च तात्पर्यज्ञवचनं, यतोऽत्रापि पौषधे आहारादीनां चतुर्णां त्यागरूप एव पौषधो व्याख्यायि तथान्तरा भेदमेनं भवतीति। न च यान्यस्माभिरपि नियमत एव गुणस्थानानि स्वीक्रियन्ते, विशेषस्त्वेतावान् यद्भवद्भिः क्रिया नियम्यते, अस्माभिस्तु चतुर्विधस्य पौषधस्य अष्टम्यादिष्वेव करणीयता नियमस्य अपर्वणि तस्य नियम्यते इति। सत्यं, दर्शिनो नियमविधि परं न केनाप्यनुमतः, प्रत्युत चरितानुवादेषु तत्त्वार्थभाष्यवृत्तिषु तद्भिन्नाग्नपि इष्टफलदायिन्या पौषधक्रियायाः सम्यगवलोकनात्, न च क्वाप्यन्यशास्त्रेषु छद्मानामभक्तादीनां प्रायश्चित्तं निषेधश्च। किञ्च–भरतादयोऽप्याचार्यं पर्वण्यधिकृत्याष्टमभक्तादयः कार्यन्ते एव। ननु ते भिन्नभिन्नाभिधानेन न तु पौषधाभिधानेनेति। आदावेतच्चिन्त्यं तत्र, तथाकार्यमाणा अभक्तादयो धर्मपोषका न वा?। आद्ये, द्वात्रिंशन्नामेनागतं पौषधत्वं, तन्मात्रार्थत्वात् पौषधशब्दस्य। परत्र तु जैनधर्मतया तेषां गणना नैव तिष्ठेत्। ननु सर्वत्र शास्त्रेषु पर्वसु प्रतिपूर्णपौषधस्याभिधानाच्चतुर्विधस्य तस्य समग्रस्यापर्वसु निषेधः क्रियते इति। सत्यं, तत्तदधिकारेषु तथात्वेन वर्णितश्चतुर्विधः परं नैतावन्मात्रेण पर्वस्वन्यथाविधो नैव कार्य इति। यद्वाऽपर्वसु न चतुर्विधः कार्यः पौषध इत्येवमपि न नियन्तुं शक्यं, शास्त्रांशतीनां व्यवह्रियमाणानां च विरोधापातस्य दुर्धरत्वादिति। यच्च-

तस्त्वेषा समग्रापि चर्चा तुपकण्डनमेवानुकरोति, यतश्च-तुर्दश्यष्टम्यादिनिर्देशः कुत्रापि न विधिवादसूत्रेषु, चरितानुवादोक्तं तु पुरुषविशेषकृत्यानुवादकं, न तु विधायकं, न च तद्बलेनापर्वाभक्तार्थादिधर्माणां निषेधः कर्तुं शक्यः, आवश्यकादिषु शास्त्रेषु सामान्येनैव आहारादित्यागरूपस्य पौषधस्याभिधानादिति। ननु पौषधशब्दस्य पर्वसु रूढत्वात् पर्वकृत्यत्वमायातमेवेति। चिरं जीव तर्ह्यागमादिषु चतुर्दश्यष्टम्यादिषु प्रतिपूर्णं पौषधं पालयन्त इत्युक्तत्वात् पुनरुक्तिपरास्तेऽवगम्या किं? एतान्येव चतुर्दश्यादीनि पदानि अभक्तार्थादीनां सर्वदा कर्तव्यतां गमयित्वा तैः श्रावकैश्चतुर्दश्यादिषु कृतः सम्पूर्णः पौषध इति बोधनायालं भवन्ति केन निवारणीयानि?। तत्त्वार्थे तु 'तिथिमभिगृह्य'त्यवयवेन नैकस्यां तिथावनेकेऽभक्तार्थकादय इति स्पष्टं स्पष्टयत इति। नन्वैदंयुगीनाः पौषधिकाः साधुमूलेऽवतिष्ठन्ते, पारणकाले च संदेशयन्ति पारणाय पौषधस्य गुरून्, तदा गुरुभिरारम्भसम्मतिवर्जनाय 'पुनः कर्तव्य' इत्युक्ते यदि पौषधाय तत्परा भवेयुस्तर्ह्यपर्वपौषधनिषेधकैः खरतरैराकाशमेवावलम्बनीयं, अनिषेधानुमत्या चाभोगेनैवात्मा लेपनीय इति। यच्च खरतरापसदः कश्चित् 'नावश्यंतयाऽन्यासु कर्तव्य' इत्यस्य तत्त्वार्थवृत्तिवाक्यस्य अवश्यंतया न कर्तव्योऽन्यासु तिथिष्विति जगादार्थं, तत्तु वैयाकरणापसदत्वं तस्य प्रकाश्य प्रकरणविरोधेनाभयपक्षीयानामपि तर्जनीय एव, पौषधस्तिथिमभिगृह्येति पौषधविधानरूपं प्रकरणं यतस्ततः खरतरापसदो निषेधकारकत्वात् प्रकरणविरोधेनोभयैरपि दण्ड्य एव। न ह्यन्ये खरतराः स्वगच्छदुराग्रहग्रहग्रद्धा अपि विरोधं प्रकरणस्य कुर्वन्तमभिसंग्रहणीयेयुरिति। ननु टीकाकारावेव पौषधानुष्ठेयतामवधीर्य नियमानियमप्रकाशकतया प्रकरण-

विरुद्धाविति न चिन्त्यं, यतस्ताभ्यां भाष्यकाराणामभिप्राय आविष्कृत:। यस्मात् भाष्यकारैश्चरितानुवादाद्विप्रसिद्धाऽष्टम्यादिका चतुष्पर्वी कण्ठेनोक्ता, पश्चादन्यतमामिति चतुर्तिथिमध्यवर्तिनी तिथिर्गृहीता, तत्कृत्य नियमानियमाभ्यां दर्शयताम्पौषधस्य परिणामितं, परं स्वरतरपदेन क्रियमाणस्य निषेधस्यातु तु गन्धोऽपि नास्ति। तथा च तत्पाठः—'अन्यतमां चेति प्रतिपदादितिथिं, अनेन चान्यासु तिथिषु अनियमं दर्शयति, नावश्यंतयाऽन्यासु कर्त्तव्यः, अष्टम्यादिषु तु नियमेन कार्यं.' हारिभद्र्यां तु समान एतेन पाठः, परं तत्र तु नावश्यंतयेत्यादि वाक्यमेव नास्ति। किञ्च-नकारस्याध्याहृत्येऽपि विशेषणं भावप्रत्ययं च कुर्वन् स स्वरतरपक्षी न केन शिक्षणीयः स्यादिति। अन्यच्च षाण्मासिकआहारत्यागस्तीर्थे सिद्ध इति पर्वादिदिनेन नियम्यते शेषत्यागा

अपि सर्वगुणप्येयत्वांदृशविरतेः सिद्धा यत्नो नियम्यते पौषधदिनेष्विति सुष्ठु न्यूनमिति। न च शङ्क्यं यत् यथा नियतप्रमाणानां कायोत्सर्गोऽभिग्रहस्य तस्याविभिभावस्य निषेधाय क्रियते एव, न चैतावता स्थानाद्यभावस्यानुमतिर्मन्यते कैरपि, तद्वदेवाष्टम्यादिषु पौषधस्य विधेयतामङ्गीकृत्यापरासु तन्निषेधे कथं नाथानुमते प्रसङ्गः? इति। यतो ये नियता कायोत्सर्गास्ते प्रायश्चित्तरूपाः, प्रायश्चित्तप्रतिपत्त्या च प्रायश्चित्तविधौ न न्यूनाधिक्यं कार्यमिति विद्वत्पार्षदा विदन्त्येव। तत एव शास्त्रकारैरप्युद्योतकराणां 'चंदेसु निम्मलयरे'त्यन्तमेवाम्नातं तत्र चिन्तनं, परं ये कायोत्सर्गा ध्यानाद्याराधनाप्रयोजना यथाभिग्रहं लाभ एव मता, लोकोत्तरास्तु न तत्र खण्डनीया इति स्वाध्यायमानां कायोत्सर्गादिदृष्टान्तबलेनापर्वपौषधप्रतिषेधनिषेध आज्ञाऽऽनुमोदस्याप्ते इति।

न च वाच्यं पौषधः पर्वानुष्ठानं रूढ्या पर्वसु वर्त्तते इत्यादीनि वाक्यान्यभक्तार्थकादीनां पर्वस्वेव कर्तव्यतां नियमयन्तीति क्रिया नियममपोह्य पर्वकर्त्तव्यता नियन्तव्येति। यत प्राक्तावद् व्युत्पत्तिरूपमेव तदिति नैषां कर्त्तव्यता पर्वसु तेन शक्या। तत्त्वतः पर्वत्वमपि धर्मोपचयहेतुत्वेन व्याख्यातं, न त्वष्टम्यादित्वेन। ननु पर्वाणि चाष्टम्यादय इत्युक्तमेव। सत्यमुक्तं, किन्तु तासु नियमकर्त्तव्यतार्थं, अन्यथा तु व्युत्पत्तावेव तिथीस्ताः समाविशेरन्। यदि च पर्वानुष्ठानमित्यादिमात्रेणापर्वसु निषेधोऽभक्तार्थकादीनां प्रतिपाद्येत तर्हि 'अष्टौ साधुभिरनिशं मातर इव मातर प्रवचनस्य। नियमेन न मोक्तव्या' इत्यादि वचांस्यवलम्ब्य सामायिकादिवतां साध्वनुष्ठानमिति निषेध्यमेव, न चादो दुराग्रहग्रस्तानामपि सम्मतं। ततश्च 'गौणमुख्ययोर्मुख्येनैव व्यपदेश' इतिन्यायेनेय.दयः साध्वनुष्ठानमिति प्रोच्यते, तथैवात्रापि पर्वस्वष्टम्यादिष्वभक्तार्थकानां नित्यकर्त्तव्यतापि प्रोच्येत पर्वानुष्ठानमित्यादिभिः शब्दैस्तर्हि न ह्येतावता गौणकारणानां कारणताया निषेधस्याभाववत् चतुर्दश्याद्यतिरिक्ततिथिष्वभक्तार्थकादीनामकर्तव्यतासिद्धिपदवीमासादयेदिति। ननु भवद्भिः प्रकरणविरोधेन प्रतिनियतदिवसादीन् व्याख्याय चतुर्दश्यादीनि सूत्राणि विपर्यस्य च पर्वस्वष्टम्यादिष्वेव परिपूर्णः पौषधः कार्य इति व्यवसितं, परं ग्रामेशगृहपानीयेप्सूनां ग्रामप्रवेशस्य दौर्लभ्याभानमित्याभाणकः सत्याप्यते। यतः किञ्चिदप्यागमवचनं तादृशं नोद्यते, येन पर्वणां स्यात्परिसङ्ख्यानमिति। तदन्तरा च पूर्वोक्तो व्यवसायोऽन्धकारनृत्यमेवानुकुर्वीत। ननु चतुर्दश्यादयः अष्टम्यादयश्चेति वचोभ्यां न साऽशक्य इति चेत्। सत्यं, परमादिशब्दावरुद्धत्वात्तयोः परिसङ्ख्यानमन्तरेणेयत्ताऽवधारयितुं कथं शक्येत?। ननु सूत्रकृतादिषु 'चतुर्दशी'त्यादिना, श्रीयोगशास्त्रादिषु

'चतुष्पर्व्या'मित्यादिना परिसङ्ख्यातानि एव तानीति
चेच्चिरं जीव, तथा परिसङ्ख्याय श्रीउपदेशमालानवपद-
प्रकरणवचन उपधानादिषु स्वगच्छेऽपि क्रियमाणपौषधाश्च
स्वयमेवाविधित्वेन स्वीकारात्, यता ज्ञानादिकल्याणक-
दिनेषु पौषधकरणमादिष्टमुपदेशमालादिषु, आवश्यके तु
सर्वेषां कालपर्वणां पौषधार्हत्वं स्पष्टमेव। यदि आदिशब्दा
विवक्षितपर्वतयेत्यर्थे पर्यवस्यते तर्हि सापि सूत्रसम्म-
तैवादरणीया स्यात्, न तु गच्छदुराग्रहाद्वया। किञ्च-
व्याख्यागमः धर्मोपचयहेतुत्वेन पर्वत्वमाचक्षाणाः अभक्ता-
र्थकादिधर्महेतुता सूचयन्तस्तथाभिधाना सर्वेषामह्नां पर्वत्व-
माहुरिति। परिसंख्यानमलिकं कर्तुकामैरवश्यमेव शोच्य-
मिति। आचार्यश्रीहरिभद्राः पर्ववाचकपौषधशब्देनोपव-
सनं पौषधोपवास इति व्युत्पाद्य भिन्नप्रतिदर्शनायाहुः—
'नियमविशेषाभिधानं चेदं पौषधोपवास' इति। किञ्च-
प्राग्व्युत्पत्तौ पर्वाणि चाष्टम्यादितिथय इत्युक्त्वा पर्वव्या-
ख्या प्रवृत्त्या दर्शयन्त आहुः 'आहारनिमित्तं धर्मपूरणं
पर्वेति भावना, एवं शरीरसत्कारपौषध' इत्यादि।
एतादृशं श्रीहरिभद्रीयं वचनमवलोकयन् कस्य सचेतन
आहारादित्यागमेव पर्वतया नाङ्गीकुर्यात्, कश्चैतादृशोऽनव-
बुद्ध एवंभूतो भवेच्चतुर्दश्यादीनामेव पर्वत्वमध्यवस्येत्,
अन्यस्येषाहारत्यागादिरूपपर्वणा चतुर्दश्याद्यतिरिक्तदिने-
ष्वकर्त्तव्यतामिति। भगवन्तश्चूर्णिकारास्तु 'पोसध उववासो'
इत्युक्त्वा उपवासं—अवस्थानं धर्मपोषकत्वेन पौषधशब्देन
कर्मधारयं कृत्वा विशेषयन्ति, न च तृतीये शिक्षाव्रतेऽष्ट-
म्यादितिथीनां नामापि गृह्णन्ति, अव्रतानां विशेषेणा-
ष्टम्यादिषु अवश्यकर्त्तव्यतां कथयन्ति। ततश्चेदं तत्त्वमावि-
र्भूतं यद् भगवतश्चूर्णिकारान् यावत् मुख्यतया यथावसरं
सर्वदा पौषधग्रहणं, पश्चात्तु कालबलेन नियमकर्त्तव्यताध-

तीषु चतुर्दश्यादिषु प्रवृत्तिर्जातेति पाश्चात्यैः पोषधशब्द पर्ववाचकतयाऽऽदृतः। एवं च अष्टम्यादिष्वेव स कार्य इत्याग्रहीभवन्तः खरतरास्तत्त्वान्वेषणशून्या एवावबोद्धव्या इति। सम्पूर्ण एव पौषधोऽष्टम्यादिपर्वसु क्रियते यः, स एव श्रमणोपासकानां व्रततया गण्यते इत्यपि भावत्कगच्छ-वचनं यत्, तदपि शास्त्रोक्तीनामनालोचनपूर्वकमेव। ननु सूत्रकृतादिषु चतुर्दश्यादिषु पूर्णस्यैव तस्याभिधानात्कथमना-लोचनपूर्वकताऽस्मदीयानामिति चेत्। सत्यम्, चरितानु-वादरूपत्वात्तदुक्तीनां न स्यान्नियामकत्वं, तथा विधिवाक्य-विरुद्धस्तु वाक्यनिचयोऽपि न स्याज्जात्वपि नियामक इति। तदन्यथाभूतानां विधीनां साक्षादुपलम्भे स्यादेतत्, परं नैता-दृशि विधिवाक्यान्येव सन्ति शास्त्रेष्विति क इव ज्ञापक-सिद्धपर्वदिनीयपूर्णपौषधकरणविषयायाः प्ररूपणाया बाध इति? चेत्, तादृशीनामुक्तीनां सद्भावेऽपि बह्वीनां नास्ति तादृश्युक्तिरिति पूत्कुर्वतां न विद्वद्भिर्गच्छदुराग्रहमन्तरा किञ्चि-दप्यवेक्षणीयं स्यात्। ननु कुत्र ताः कथम्भूताश्चेति? दर्शनीयं, यतो वयमपि तन्मार्गं श्रद्धाय निर्मलीभवाम इति चेद्, भवतु कल्याणं भवतां यत् सुमार्गजिगमिषोद्भूता, दृश्यन्तां ताः प्रदर्श्यमाना अधुना, आवश्यकचूर्णिपाठः—'सरीरे पोसहो देसे अमुगं ण्हाणादि न करेमि, सव्वे ण्हाणमद्दणवण्णगविलेवण-पुप्फगंधाणं, तथा आभरणाण य परिच्चागो। अव्वावारपोसहो णाम देसे सव्वे य, देसे अमुगं अमुगं वावारं न करेमि, सव्वे ववहारसेवाहलसगडघरपरिकम्ममाइओ न करेमि। बंभचेरं देसे दिवा रत्तिं वा एक्कसिं दो वा, सव्वे अहोरत्तं बंभयारी। आहारे देसे अमुगा विगती आयंबिलं वा एक्कसिं वा. सव्वे चउव्विहो आहारो अहोरत्तंति,' आवश्यकहारि-भद्र्यामप्येवं, परं तत्र क्रम आहारशरीरसत्कारत्यागब्रह्म-चर्याव्यापारादिः आहारदेशे च द्व्यशनकमपि। श्रीअभय-

देशसूरिसूत्रितवृत्तियुक्ते पञ्चाशकेऽपि–'आहारदेहसक्कारबंभचावारपोसहो जण्णं। देसे सव्वे य इमं०' ॥२९॥ वृत्तौ–'साम्प्रत तृतीयमुच्यते–इद चतुर्विधमपि द्विधेत्याह–देशे आहारादीना देशविषये 'सव्वे'त्ति सर्वस्मिन्निरवशेषे आहारादौ' इत्यादि। श्रावकप्रज्ञप्तावपि–'आहारपोसहो खलु सरीरसक्कारपोसहो चेव। बंभव्वावारेसु य तइयं सिक्खावय णाम ॥३२१॥ देसे सव्वे य दुहा इक्किका इत्थ होइ णायव्वो'त्ति तद्वृत्तिः–आहारपोसहो० श्रीआवश्यकवृत्तिवदत्रापि व्याख्यानं। द्विविधं हि पौषधव्रतं देशतः सर्वतश्च। तत्राहारपौषधो देशतो विवक्षितविकृतेरविकृतेराचामाम्लस्य वा सकृदेव द्विरेव वा भोजनमिति। सर्वतस्तु चतुर्विधस्याप्याहारस्याहोरात्र यावत्प्रत्याख्यानम्, कुव्यापारनिषधपौषधस्तु देशत एकतरस्य कस्य पि कुव्यापारस्याकरण, सर्वतस्तु सर्वेषामपि कृषिसेवावाणिज्यपाशुपाल्यगृहकर्मादीनामकरण, ब्रह्मचर्यपौषधोऽपि देशतो दिवैव रात्रावेव वा, सकृदेव द्विरेव वा स्त्रीसेवा मुक्त्वा ब्रह्मचर्यकरणं, सर्वतस्तु अहोरात्र यावद् ब्रह्मचर्यपालन, देशतः स्नानादेः शरीरसत्कारस्यैकतरस्याकरण, सर्वतस्तु सर्वस्यापि तस्याकरण। सत्स्वेवविधेषु विवादास्पदशास्त्रपाठेषु कः खलु वक्तुमपि जिह्वा चपलयेत् यत् तृतीयं पौषधाख्य शिक्षाव्रतमष्टम्यादिपर्वस्वेव परिपूर्णाहारादिचतुर्विधेनैव पौषधेन भवतीति। न च वाच्य सर्वाण्येतानि शास्त्राणि स्वरूपप्रतिपादनपराणि, ततस्तदपेक्षया न पूर्ववत् वक्तु क्षम, पर श्रीसूत्रकृताङ्गादिप्रतिपादितानि वचनानि आचारप्रतिपादकानि, यतस्तत्र लेपादिश्रावकाणा प्रतिपाद्यते आचार, तत्र च चाउद्दसट्ठमुद्दिट्ठपुण्णमासिणीसु पडिपुण्ण पोसह अणुपालेमाणा इत्येवमेव सर्वत्रोक्तमिति पूर्वोक्ततत्पर्वपूर्णकर्तव्यादि निकाय्यते इतिचेत्। सत्यम्, विभक्त परं तत्र सर्वत्र प्रति-

पूर्णेति विशेषणमस्ति, तत्किं न विचार्यते ?, यतः पर्वस्वपि परिपूर्णपौषधस्य नियमाभावे एव तस्य सार्थकत्वं, अन्यथा-विधपौषधस्य चतुर्दश्यादिषु सम्भवाभावे तु तद्व्यर्थमेव स्यात्। किञ्च-तेषामाचारनियामकत्वे सूत्राणां श्रमणेभ्य आहारादिकमपि चतुर्दश्यादिपर्वस्वेव वितीर्यं स्यात्, तदा-धारत्वेनैव दानस्याप्युक्तेः। चतुर्दश्याद्यतिरिक्ततिथिषु दीय-मानं सुपात्रदानमप्यविधिदानतयोद्घोष्यम्।

नतु तत्र भवतां तर्हि का गतिरितिचेत्, समीचीनैव, यतोऽस्माकं देशतोऽप्याहारादिपौषधानां सम्भवाच्चतुर्दशीगत-सर्वपौषधस्य उद्दिष्टपौर्णमास्योर्देशपौषधसद्भावात्, चतुर्दश्या-दिष्वपि कादाचित्कदेशपौषधसद्भावाच्च तदर्थानीताहारादि अ-तिथिसंविभागः विधायैव व्यापारयन्ति, नान्यथेत्यस्माभिः शक्यानि तानि व्यवस्थापयितुमिति। 'सोपस्काराणि सूत्रा-णी'तिन्यायेन तु वृत्तिकारव्याख्यातः पारणकदिवसो गृह्यते

इति। ननु अस्माभिस्तथैव व्याख्यास्यते इति। सत्यम्, परं भवतां प्रतिनियतदिवसशब्दस्य पर्वार्थत्वात्तत्रैव चातिथि-संविभागव्रतस्य विधिरूपत्वाभिसन्धेर्न स उपस्कारो भव्याय भवतामिति। किञ्च-भवन्तः पौषधं यावदहोरात्रतयोच्चर्य तदनु तत्सम्बन्धं सामायिकमपि यावदहोरात्रावधिकं समुच्चर्य पुरस्तनरात्र्यन्त्ययामे पुरतोऽविरतिभावापत्तिभीत्या पुनः सामा-यिकोच्चारं कुर्वन्ति। अत्र यदि प्रतिनियतः शब्दो मर्यादार्थे न गृह्यते पर्वार्थश्च यदि गृह्यते तर्हि सामायिकस्य पुनरुच्चारेण पौर्णमास्यादिपूत्तरासु पर्वतिथिषु तावन्मानः पौषधोऽप्युच्चरितुमेव युक्तः स्यादिति। ननु भवत्कृतेन मौलेन व्याख्यानेनातिथि-संविभागस्यापि प्रतिदिवसकर्त्तव्यताऽऽपन्ना, पर्वापर्वसु सर्वदा श्रमणादिदानस्योक्तेरिति चेत्। सत्यम्, दानस्या-स्माभिः पर्वापर्वसु सदैव कर्त्तव्यता स्वीकृता, परं सामान्यदाना-तिथिसंविभागभेदमजानान एवैवं पूत्कुर्यात्, नत्वितर

इति। को हि तयोर्भेद ? इति चेत्, शृणु, अतिथिसंविभागरता 'एगभत्तं च भोयणं'मित्यनगाराचारादेकशो दानस्य निधिरूपत्वाचैकभक्तमेव कार्यं दत्त्वैव च साधुभ्योऽशनादि भोक्तव्यं नान्यथा, यच्चाऽऽदत्तं श्रमणैस्तदेव भोक्तव्यं, न त्वन्यदिति। तदनन्यतिरिक्तसुपात्रदाने तु नैते नियमा इति।

ननु कथं तर्ह्यतिथिसंविभागोदाहरणेषु कृतपुण्यादिषु नैवमेकभक्तादिकं दर्शितमिति। दृष्टान्तस्य भूयो धर्मवत्त्वस्याप्यभावात्, एकदेशीयत्वाच्च नैष दृष्टान्तदोषः, सुपात्रदानतत्फलयोरेव तत्रोपक्रमादिति। दानाद्यपेक्षयाऽन्त्यशिक्षाव्रतद्वयमाश्रित्य श्रीहेमचन्द्रसूरिभिः 'सामायिकादीनि चत्वारि शिक्षाव्रतानि प्रतिदिवसाचरणीयानि' इति तृतीयप्रकाशस्यादौ स्पष्टमुक्तमिति। ननु अन्त्यशिक्षाव्रतद्वये कथं तद्गमनीयमितिचेत्, मर्यादायां अ त्यद्वये वीप्सायामव्ययीभावमादाय, यतो विकृत्याचाम्लादि प्रतिदिनं दिवसनैयत्येनैव क्रियते, पौषधभेदश्च तदपि। दानं च प्रत्यहं पर्वापर्वविशेषेण दीयत एवेति प्रतिदिवसाचरणीयता तयोरिति। किमर्थमेवं न्यास ? इति चेत्, खरतराणां खण्डनार्थेत्यवधाने न काचिद्बाधेति। अनेन वचसा खरतराणां पर्वान्यदिनपौषधाकरणमान्यतोच्छ्वसितुमपि न शक्नुयात्। सामायिकदेशावकाशिकयोस्तु तत्पुरुषे विग्रहीतव्यः प्रतिदिवस शब्दः प्रत्युरसादिवदिति भद्रं भवतु, आगमानुसारिभव्यानामितिपौषधपरामर्शः

---

## पौषधविमर्शः (२९)

नन्वावश्यकपञ्चाशकवृत्त्यादौ प्रतिपादितमभियुक्तैर्यदुत— 'सामायिकदेशावकाशिके प्रतिदिवसानुष्ठेये पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ न प्रतिदिवसाचरणीयौ'। एवमेव नवपदप्रकरणश्रावकप्रज्ञप्ति—योगशास्त्रप्रभृतिशास्त्रवृत्तिष्वपि स्पष्टमेवोपपादितं पौषधोपवासातिथिसं-

चेदवद्यानुमतिः, अन्यपर्वकर्तव्यता 'त्वादरो न मोक्तव्य' इत्यनेनैव वाच्या। किञ्च—श्रीमद्भिरभयदेवसूरिभिरेयोदितं समवायाङ्गे एकादशे समवाये यदुत—पौषधं—पर्वदिनमष्टम्यादि तत्रोपवासोऽभक्तार्थः पौषधोपवास इति इयं व्युत्पत्तिरेव, प्रवृत्तिस्त्वस्य शब्दस्य आहारशरीरसत्काराब्रह्मव्यापारवर्जने'ष्विति । ततश्च स्पष्टमेवेदमवसीयते यदुत—पर्वदिवसगता नियमो नान्यदिने कर्तव्यतानिषेधाय, किन्तु तत्र नियमेन करणायान्यथा सावद्यानुमत्या निरवद्यनिषेधेन चात्मानं भवाम्भोधौ मा भ्रमत् । अन्यच्च प्रतिनियतदिवसशब्देन यदि पर्वदिना विवक्षिता अभविष्यन् तदा प्राक् तावत् गौरवकारिशब्दवदनं पूज्यानां नाभविष्यत्, पर्वदिनेष्विति लघुनैव निर्देशेन साध्यसिद्धेः, न च निषेधं 'न तु प्रतिदिवसाचरणीया'-विति वाक्येन गौरवाध्मातेनोदीरयेत्, किन्तु नापर्वणीत्यनेन लघुनिबन्धेनैव । अन्यच्च 'न तु प्रतिदिवसाचरणीया'वित्यनेन

भवन्मतानुसृत्या सर्वाण्यहानि निषिद्धानि, न तु पर्वातिरिक्तान्येव । न चैवं। प्रकरणमपि यत् मर्यादाकर्तृ तद्विरुध्यते, तथार्थकरणे कर्त्तव्यकालस्यैव प्रतिपादनापत्तेः, तथात्वे च द्वित्र्याद्यह्नां समुदायेनापि पौषध उच्चरितः केन वाक्येन निषेध्यः?, उपधानपौषधाश्च कथङ्कारं विधिनिबन्धना भवेयुः?, विहाय च शीलाचार्यवच कल्याणकदिनपौषधाः, शीलाचार्यवचसापि प्रतिपूर्णिमं पौषधा अविधिपथप्रवृत्ताः । अन्यच्च विघ्नदिवसाष्टकं यावत् पौषधवतः श्रीविजयनृपस्य विघ्ननिवृत्तिरभयस्य सुबाहोः सर्वेषामपि चक्रिणां वासुदेवानां चाष्टमभक्तिकपौषधकरणेनेष्टसिद्धिश्च न कदाचनापि स्यात्, अविधिप्रवृत्तानामनिष्टफलस्यैवापातात् । विहाय भवन्मतं न क्वचनापि अपर्वणि निषेधः पौषधस्य, प्रत्युत आवश्यकचूर्णौ 'सव्वेसु कालपव्वेसु' इत्यनेन सर्वदा पौषधस्य कर्त्तव्यतोक्ता, न तु निषिद्धा क्वचनापि सावद्यप्रवृत्तिभी-

लाभः। यथोच्यते भगवतीसूत्रकृताङ्गप्रभृतिषु शास्त्रेषु 'चाउद्दसट्ठमुद्दिट्ठपुण्णिमासीणीसु पडिपुण्णं पोसह' मितिवाक्यैः पर्वान्यदिवसेषु पौषधनिषेधः, स विहायाभिनिवेशकालकूटोद्गारसहितां वासना न किञ्चिदन्यद् ध्वनयति। यतस्तत्र हि कः कदा किमकरोदिति प्रतिपादयिषितं, न तु निषेधो गन्धेनाप्यादिष्टः। एतावता च निषेधनियमे चरितानुवादविधिवादयोर्न भिदा। न च तत्र विधिप्रासायपि नियमतासिद्धिः, कल्याणकोपधानादिविषये भवतामेवानिष्टप्रसक्तेः। सामान्यवाक्यस्य नियामकतयाभ्युपगतौ 'किइकम्मकरो हवइ साहू' बत्तीसामन्नयरं साहू ठाणं फिरहंतो' इत्यादीनामनेकेषां वाक्यानां [1]निषेधकतयोद्भावनप्रसङ्गात्। सर्वत्र साधूनां तृतीयप्रहरादिकालस्य गोचरचरीकालप्रतिपादनादभक्तार्थादीनामप्यविधिताप्रसक्तेः, [2]प्राभातिकनमस्कृतिस्मृतिपाठस्याप्यनेकशोपलभ्यमानस्य च [3]नियामकता स्यात्। [4]अन्यदा त्वविधितापत्तिः स्यात्तत्स्वराश्रृत्तेः। सूत्रकृतादौ चावश्यककृतेर्नमस्कारपराश्रृत्तेः श्रावकक्रियातयानुक्तेरयोग्यतापि स्याद् भवन्मते तदधिकारानङ्गीकारात्, न चेत् तत्त्वार्थीयोक्त्यविरोधेन सर्वं मदुक्तानुसारेण सम्यक्तया भावयित्वा यथागमं धार्य्यं, येन पाठकश्रावकाणां श्रोवसीयसमाप्तितोऽपूर्वतम आनन्दः सम्पद्यते इतिशम्॥

इति पौषधविमर्शः

---

## श्रमणो भगवान् महावीरः (३०)

नत्वा वीरं जगद्वन्द्यं, जिनेशं शासनेश्वरं।
देवैर्दत्ताभिधा तस्य, चर्च्यते बोधिवृद्धये॥१॥

भगवतो वर्त्तमानशासनस्याधिष्ठायकस्तत्प्रवर्त्तकत्वेन श्रमणो भगवान् महावीरः। स च स्वाभाविक्याऽऽबालगोपालं मनुष्येषु देवेषु च समग्रेषु प्रचरितया घाण्या 'समणे

[1] श्रावककृतिकर्मनिषेधकतया। [2] नमोक्कारेण विबोहो इत्यादिकस्य। [3] प्रातरेव स्मरणोयत्वे। [4] प्रभातव्यतिरिक्तकाले।

विभागयोः प्रतिनियतदिवसानुष्ठेयत्वं, पौषधशब्देनापि पर्वैवोच्यते, ततः कथमेवमष्टम्यादीनि पर्वाणि विहायान्यतरस्यां तिथौ पौषधविधेयतोपदेशो नोत्सूत्रत्वमाश्रयेत् ?। धर्मानुष्ठानमप्यविधिना क्रियमाणमविधिनाऽऽराधितो यथा वैतालो नानर्थजालमनुपस्थाप्य तिष्ठति, तथा भवप्रपातमनुपस्थाप्य नाप्नोति विराममिति चेत्। सुष्ठूक्तं भवभीरुता चेत् ते मनसि चकास्ति, स्फुटतरोद्धारदर्शनात् प्रीणिताः स्मो वयमकाण्डोल्लसन्तीं कादम्बरीमवलोक्य मयूरमाला यथा। प्रथमं तावदेतावद्विचार्यतां यदुत—किं तत्प्रकरणं उच्चरितव्रतमर्यादादर्शकं करणकालदर्शकं वा ?। आद्ये, यथा साधूनां महाव्रतानि अवश्यंतया श्रावकाणां चाणुव्रतगुणव्रतानि प्रायिकतया यावत्कथिकानि, यतः सकृदुच्चरितानि यावज्जीवमनुवर्त्तन्ते, न तथा शिक्षाव्रतानि कित्वित्वराणि, यतो नैकश उच्चरितानि यावज्जीवमनुवर्त्तन्ते। अत एव प्रतिदिवसानुष्ठेये इति कथितं, पुनःपुनरुच्चार्ये इति भावना चास्य अभियुक्तैः कृता, अन्यथा पुनर्भावनावैयर्थ्यं स्यात्, प्रतिदिवसानुष्ठेये इति नैव वाच्यं स्यात्, एकदिवसेऽपि वहुशः करणात् प्रतिसन्ध्यमावश्यकक्रियावत् सामायिकदेशावकाशिके एकश एव करणीये स्यातां। अत एव च पर्वदिनाचरणीये इति नोक्तं। न च वाच्यं 'पौषधशब्दो रूढ्या पर्वसु वर्त्तते पर्वाणि चाष्टम्यादितिथय' इत्यादिवाक्यात् स्पष्टमेव पर्वान्यदिवसे निषेधनं पौषधस्येति। यतः पर्वसु नियतकर्त्तव्यताऽनेन बोध्यते, न तु निषेधः। अत एव च तत्त्वार्थभाष्ये 'अन्यतमां' तत्त्वार्थवृत्त्यां 'प्रतिपदाद्यन्यतमां वा तिथिमङ्गीकृत्य चानेनान्यास्वनियमं दर्शयति' इत्यादि गदितं सूरिभिः। ततश्च यथा सामायिकदेशावकाशिके एकस्मिन्नपि दिने पुनःपुनरुच्चार्येते, नैवं पौषधोपवासातिथिसंविभागौ, किन्तु दिवस

एव प्रतिनियतस्तत्र । अत एव चाहारादिषु पोषधेषु सर्वतोऽहोरात्रं परिच्छेदः । अन्यच्च चेत् प्रतिनियतदिवसशब्देन पर्वैव गृह्यते, अन्यत्र च निषिध्यते, तर्हि साधूनां दानं यत् सोऽतिथिसंविभाग इति तदपि विहाय पर्वाणि नैव कर्त्तव्यः, करणे च यथा पौषधेऽपर्वणि क्रियमाणेऽविधिक्रियातो दोषापत्तिः, तथाऽत्रापि दाने दोषापत्तिरेव वाच्या, तुल्ययोगक्षेमत्वात् एकयोगशिष्टत्वाच्च । किञ्च–चतुर्विधः समुदितः पौषधो निषिध्यते पर्वान्यदिवसे किं वा प्रत्येकं ?, तत्रापि देशतः सर्वतो वा विकल्पचतुष्टयी, किञ्चातः । समुदितनिषेधे एकाशनादितपो दिवा ब्रह्म प्रक्षणादिविलेपनवनरूमादिप्रतिषेधश्च किमहोरात्रमर्यादया यत्र कुत्राप्यह्नि क्रियते अविधिः? आममितिचेत्, षष्ठाष्टमादिकारिणा नागनत्तुआदीनां ध्रुवमविध्यापत्तिः, एकैकोपि भेद इत्यपि नोद्धोषणीयं, यतो ब्रह्मपौषधस्य यावन्मासं पर्यायेणावश्यके कच्छस्थथावच्चाविकयोः स्पष्टतया प्रतिपादनात्, तस्य देवपूज्यतापादकतया विधिरूपत्वात् गुणाधिकार एव च तद्वर्णनात् । देशतो निषेधे किं विकृत्यादिप्रत्याख्यानं सकृदादिब्रह्मादि निषेधनीयं ?, न च शक्यं तत्, प्रतिदिवसकरणीयत्वात् प्रत्याख्यानादीनां । सर्वतश्चेत् किमागमबलेन युक्त्या वा ? । नाद्यस्तादृश आगमस्यैवाभावात्, प्रत्युत पर्वान्यदिवसेषु 'सव्वेसु कालपव्वेसु' इति 'प्रतिपदाद्यन्यतमां वा तिथि'मिति च बहुशो विधिवादानां चरितानुवादानां च तत्करणविधायकदर्शनात् निषेधगन्धस्याप्यनुपलब्धेः । अन्यच्च यदा कदाचित् आगच्छेद् अन्यदिवसे पौषधग्रहणाय कोऽप्यन्तेवासी स किं निषेध्यः ?, आममिति चेत्, दत्तो जलाञ्जलिः सर्वविरतये, अनुमतिप्रसक्तेः । न चेत्, त्वन्मतेऽविध्यनुमतिः । किञ्च–पौषधं पारयता श्रावकेणादेशे याचिते 'पुनः कर्त्तव्य' इत्यपि दीयते चेदादेशोऽविध्यनुमत्यापत्तिर्नो

अतोऽनवाप्तज्ञानाद्यतिशयोऽप्ययं सर्वेषाममराणां समरेन्द्राणां पूज्यतम एव। अत एव च 'धम्मो मंगलमुक्किट्ठ'मित्यस्यां अहिंसासंयमतपोरूपधर्मैकाग्रचित्तनमस्कारे मुख्यमुदाहरणं भगवानर्हन् महावीरः। तथाविधत्वात्तस्य, तदनुकारेण गणधरादिस्थविराणाममरपूज्यत्वप्रवृत्तेरेवातिलघोरपि मनकस्य धर्मफलदृष्टान्ततया धर्मिणो प्रणमन्ति देवा अपीति दृष्टान्तसूचा। दृष्टान्तस्य सिद्धतमत्वे निर्विवादात्। तत्रहि मङ्गलशब्देन हिताप्ति—तत्स्थैर्य—तत्पारम्पर्येति त्रयं गम्यं, ध्वन्यते च दृष्टान्ते तत्र पारम्पर्य. सातिशयनियतत्रिज्ञानत्वाद्देवानां धर्मिमनसाममलानामवगतिः, मनुष्यवंश इव देवेऽपि पारम्पर्यं नेति न। सम्यग्दृशां देवानां व्याख्याप्रज्ञप्त्युक्तसनत्कुमारेन्द्रवद् धर्मधर्मिबहुमानकरणसावधानत्वाद् देवानां संहत्या 'समणे भगवं महावीरे'त्ति नामकरणं सुसङ्गतमेव। व्याख्याकाराश्चात्र 'समणे' त्यभगवं महावीरे' व्याख्यायते, आख्या च तदीयासाधारणगुणसंहतितुष्टया देवसन्तत्यैकत्रीभूतया स्थापितैषा। तत्र भगवन्महावीरस्य तदाख्याकरणावसरे पञ्चविधाः श्रमणाः 'निग्गंथसक्कगेरुयतावसआजीवे'त्ति भेदेन आसन्नन्येऽपि, पार्श्वापत्यानां निर्ग्रन्थानामपि सद्भावात्तदा परं सर्वातिशायिश्रामण्यवन्तं निरीक्ष्योवाच निजरावलिः—सत्य एष एव श्रमणः, षाण्मासिकादि प्रधानमस्यैव यतस्तपः सततकायोत्सर्गावस्थानरूपोपमातिगखेदसहश्चेति श्रमणशब्दमूलधात्वर्थयुक्त एष एव नान्यः कश्चिदितिहेतोः पञ्चान्यतमवृत्तितया सामान्योऽप्ययं श्रमणशब्दः सान्वर्थश्रमणताद्योतनाय निवेशितोऽस्यां सञ्ज्ञायां, सर्वेषां मतानां गुरुमूलतां गुरुसच्चालकतां व्याख्यातृतां परिग्रहमाहात्म्यं चावगम्य गुरुत्वयथार्थसूचायै सञ्ज्ञायामादौ श्रमणपदयोगः। पृथग्विभक्त्यन्तत्वं तु भगवस्त्रादिनिरपेक्षस्यापि तच्छ्रामण्यस्य लोकातिगत्वद्योतनाय।

स्येत्थं संस्कारमाहुः—जैनशासनरूपेषु पञ्चसु परमेष्ठिषु सिद्धत्वादीनि चत्वारि परमेष्ठिपदानि न प्राग्भवीयाराधनानियतानि, अत्यन्तस्थावरेभ्योऽप्यागताना मरुदेव्यादीना तल्लाभश्रवणात्। एकमेवार्हन्त्यरूप परमेष्ठिपदमात्र तादृग्यत्न केनाप्येकभवेन मार्गाराधनाल्लभ्यमिति। तत एव च तत्त्वार्थभाष्यकारा उत्तमोत्तमपुरुषव्याख्याने 'भावितभावो भवेष्वनेकेष्वि'ति। प्राग्भवीया मोक्षमार्गाराधनाऽपि 'अट्ठभवा उ चरित्ते' त्यादिवचनात् स्यादेव बहूना, परं जगन्मोचनबुद्ध्यन्विता परार्थप्रवृत्तिमात्रसारा तु साऽर्हतामेव। तथाविधाश्च दशसागरोपमकोटाकोटिमितायामुत्सर्पिण्यामवसर्पिण्या च चतुर्विंशतेरधिका नैवोत्पद्यन्ते। यद्यप्यर्हदाद्याराधना सर्वैरपि मुमुक्षुभिः क्रियत एव, परं सा नाविकाना परनिस्तारणपरायणतेवार्हतां परनिस्तारणसारा। तस्या जिननामगोत्रस्य बन्धः, जिननामोदयाच्च फलद्वय

शक्रादिकृताया अशोकाद्यष्टप्रातिहार्यपूजाया उपजीवनं, तच्च प्राप्यफल कृषौ पलालपुञ्जवत्, साध्यं तु तीर्थप्रवर्त्तनमेव तत्सिद्धये एव जिनाः अपायान् विनाशयन्ति। स्वेषा ते घातिकर्मरूपाः परेषा दुर्भिक्षडमरादयः, विनष्टेष्वपायेषु चात्मस्वभावरूपमनन्तादिगुणयुतं केवलं प्रादुर्भवत्येव। जाते च तस्मिन्नशेष लोकालोकं विलोकयन्ति भगवन्तः। ज्ञात्वा च तं प्रज्ञापनीयान् गणधरेभ्य उपदिशन्ति। तत्र जीवाजीवौ तत्त्वरूपौ, आश्रवबन्धौ मुमुक्षूणां हेयतया, संवरनिर्जरे मोक्षसाधनतमत्वादुपादेयतया, पुण्यपापे च साधकबाधकतया, मोक्ष च परम साध्यतयोपदिशन्तो भगवन्तो नवतत्त्वीं सुरनरेभ्य उपदिशन्ति। स चोपदेशो योजनगामिन्या सकलजन्तुसमकालसंशयच्छेत्र्याऽर्धमागध्या। तदवसरे च देवाश्चतुस्त्रिंशदतिशययुक्तता भगवता कुर्वन्ति। अत्र श्रीमदर्हतां द्वादशगुण्यामष्टगुण्यशोकाद्यष्टप्रातिहार्यरूपा

सा द्रव्यार्हन्त्यरूपा, अपायापगमादिगुणचतुष्टयी भावार्ह-
न्त्यरूपेति, 'समणे' त्यनेन सैव द्योत्यते। शमन इति संस्कारे-
णापायापगम । समना इति मनःपर्यायज्ञान्यादिपृष्ट्यार्थोत्त-
रदानाय भावमनोराहित्ये द्रव्यमनोवत्त्वात् समनाः, द्वाद-
शपर्षदां मोक्षमार्गभणनात् समणः, इन्द्रादिमनसां पूजा-
र्थमाकर्षणाच्च सन्मना इति। सूत्रकारास्तु 'सह संमइयाए
समणे'त्ति संस्कारं 'समणे' त्यस्याहुः । अणधातोर्गत्यर्थ-
त्वाद् गत्यर्थानां ज्ञानार्थत्वाबाधाच्च। मतिशब्दोऽपि नात्र
पारिभाषिकः, किन्तु सामान्यज्ञानार्थः। तेनाप्रतिपातिज्ञा-
नत्रयस्य मतिश्रुतावधिरूपस्य ग्रहणं। भगवतो ज्ञानत्रयधा-
रणप्रसिद्धिस्त्वेवं—गर्भस्थोऽपि भगवान् चतुर्दशस्वप्नापहार-
ज्ञातपुत्रापहारायाः शोकातिशयं बुद्धवान् जातं. त्रिशला-
दुःखपरिहाराय गर्भस्थोऽपि निश्चलतां कृत्वा विपर्यस्त-
मतित्वात् त्रिशलाया सराजकुलाया उद्वेगं शोकातिशयं दुःख-

प्राचुर्यं च बुद्ध्वा देशेन चलनं च चकार। न च
श्चार्यं परस्परं विरुद्धमिदं यत्करुणया भक्त्या वा गर्भस्थस्य
निश्चलत्वं चेति। यतो देवानन्दाकृतं वक्षःकुट्टनादि दृष्ट्वा
मातुर्वपुर्दुःखपरिहाराय निश्चलत्वस्य करणं, कृते च तस्मिन्
सराजकुलाया विविधां वेदनां ज्ञात्वा चलनदुःखस्य च मातुर्म-
नस्यकिञ्चित्करतां सुखकारणतां च ज्ञात्वा तस्य करणा-
दिति। जातोऽपि भगवान् सञ्ज्ञाशोधनादिजातस्य दुःखस्य
परिहाराय तत्काले सञ्ज्ञादि कृतवान्। उपनयनावसरे
सर्वविद्यापारगोऽपि मातापितृप्रभृतिकानां प्रमादभरस्य
जायमानस्याव्याघातायेन्द्रागमतत्संशयप्रश्नकालं मौनं दधार।
गृहीतेपि श्रामण्ये भ्रान्तदेशान्तरदरिद्रतानिधये आगताय शक्रेण
शाश्वतिकाचाररक्षणाय वामस्कन्धदेशावस्थितदेवदूष्यस्यार्धं सम-
र्पयामास। न च 'जे उ दाणं पसंसंती'त्यादिना निरुद्ध-
त्वात्तस्य स्खलनमिदमिति। तन्निषेधस्य प्रकरणेनाबा-

र्ममिषयत्वात्, स्याम्याकाराभिप्रायेणान्ययूथीयमाम्मण- दक्षिणाद्रूथनृपादिपृष्टपादिनिषयत्वात्, ग्रन्थकारोक्त्या च सुमटाना मखार्पणविषयत्वात्। अत्र त्वनुकम्पाविषय दानं सातिशयज्ञानवाश्च भगवान। तादृग्दानदायिनोऽप्य- र्थस्य देवदूष्यस्य निष्प्रयोजनस्य तु स्वकल्परक्षणानुकम्पासा- धनोभययुद्धया नागम्न कृतत्वात्। गोशालकस्य तथाविधा- योग्यस्य भाव्यनर्थकारस्यापि स्वीकारप्रव्रज्यादिकरण वैश्यायनकृतजीवितान्तोपसर्गनिवारण, भूतभवद्भविष्यद्द्रोहि- णोऽपि नानुकम्पामार्गपतीना। अन्यथा सर्वेषा दुःखिना म्रियमाणाना च मार्गद्वसस्वपापफलभोगित्वाच्च धुनाप्य- हिंसायाः कनिर्थमनाछनिश्च स्यात्। मनिरुद्धस्य चण्डको- शिकस्याहेः सहमारीपशुरगति यावत् तथैव कायोत्सर्गेणा- वस्थानं, तत्प्रतिबोधार्थमध्वना तेनैव तत्र गमनं च, शूलपाणि- यक्षस्य प्रतिबोधाय ग्रामलोकतत्प्रजकनिषेधेऽपि तदायतने

रात्री वासः, अधमतमसङ्गमसुरकृतातिघोरातिनिन्द्योपसर्गवर्गाग- मेऽपि अपराभवो बुद्धेः, कौशाम्ब्यां गृहीततीव्राभिग्रहस्य भ्रमणं, जीवतोर्मातापित्रोर्गृहावस्थानमिति, तस्य भगवतस्तथा- विधबुद्धिमत्ताया अनेकानि लोकख्यातान्युदाहरणानीति। मतिज्ञानापेक्षया श्रमणापरपर्यायसमणस्य हेतुत्वं सन्- मतेरिति। श्रुतापेक्षया तु जाताष्टवर्षमात्रस्याध्यापक- मनोगतपुरन्दरपृष्टपदार्थप्रचयमतिपादन, स्वातिदत्ताय च को ह्यात्मेत्यादीनां प्रश्नप्रथानां सन्तोपतल्परधि समाधानं, उत्पलाय च स्वप्नदर्शकस्य लाभेऽज्ञातस्वप्नफलप्रकाशनं, गोशालकाय तथाविधाय वचनविपर्यासवद्धरक्षायाप्यज्ञानि- ताभ्रमनिवारणाय ससतिल्लोत्पत्तेर्निवेदनं मतान्तरेण तस्मादेव हेतोः सर्वानुभूतिसुनक्षत्रश्रमणयोः, स्वस्य च तथाविधानर्थ- हेतुकाया अपि तेजोलेश्याया उदाहृतिः। भगवत श्रीमतो महावीरस्य भवान्तरागतावधिज्ञानवत्त्वेन च

सन्मतित्वं, यत च्योष्यच्च्यवच्च्युतज्ञानं दशमाद्देवलोकात्।
द्वितीयं शक्रेण त्रैकालिकसौधर्मेन्द्राचारानुवृत्त्या देवान-
न्दायाः कुक्षेः समादाय भगवन्तं त्रिशलाकुक्षौ मोचनाय
समादिष्टो हरिणैगमैषी पदात्यनीकाधिपस्तेन च भगवान्
गर्भान्तरं संहृतः, विषये चात्र भगवान् स्वस्य संहरिष्य-
माणसंह्रियमाणसंहृतेति त्रैकालिकीं दशां विवेद। न च
वाच्यं सङ्क्रमणस्य श्रेयस्त्वात्कथं न चकार शक्रो ?,
यस्तत्रादिष्टो हरिणैगमैषीति। प्राक्तावन्न सङ्क्रमणक्रियायाः
श्रेयस्करता भगवज्जिनजन्मादीनामिव। अत एव च
लोकानुभावप्रभावप्रोद्भूतेन्द्रासनचलनं स्थानाङ्गोक्तवत्
त्रिजगदुद्योतः सकलेन्द्रागमनन्दीश्वरमहिमादि नात्र
किञ्चिदपि। न च जन्मादीनि शक्रकार्याणि, किन्तु
तन्महोत्सवाः। सङ्क्रमणकालज्ञानमपीन्द्रस्य जम्बूद्वीपालोक-
नप्रसङ्गजं, न लोकानुभावसम्पादितासनचलनादिभवं,

'जंबूदीवं आभोएमाणे'त्तिवचनात्। तत्त्वतस्तु संहरणं हरि-
णैगमेषिण एव कार्यं। अत एव श्रीभगवत्यां–'पभू णं
भंते! हरिणेगमेसी सक्कदूए इत्थीगब्भ'मित्यादिकः सूत्रप्र-
बन्धः। आचाराङ्गे च न शक्राज्ञापनादि संहरणफलं च
हितानुकम्पारूपं हरिणैगमेषिण एव, जीतं तु शक्रहरि-
णैगमैषिणोर्द्वयोरपीति पर्युषणाकल्पाचाराङ्गौ। शक्रस्य जीतं
संहरणकारापणमितरस्य तु तत्करणं, संहरणकालज्ञापनम-
प्याचाराङ्गे 'तेणं कालेण'मित्याद्युपक्रमशून्यं गर्भान्तरसङ्-
क्रमणकालदर्शनाय संहरणयोग्यसर्वावयवनिष्पन्नतायै तावन्नी-
चैर्गोत्रोदयस्य भुक्तस्य ज्ञापनाय च। कल्याणकानि जन्मा-
दीनि तु त्रिजगद्धितानि, न चानुकम्पादिविषयाणि, तत्कृतं
प्रसङ्गेनोत्सूत्रभाषितया श्रीमलयगिरिभिराख्यातस्यापरास-
म्मतैतत्कल्याणककथक इति खाद्यजिनदत्तेन व्याख्यातस्य।
जिनवल्लभोपज्ञत्वादेतन्मतस्य श्रीहरिभद्राभयदेवसूर्यादिभिः

कल्याणकपञ्चकस्यैव व्याख्यानाच्च नैतच्छङ्कावान् कश्चनापि। श्रद्धानं सन्मार्गमलिनतापरिहारफलमेतन्मात्रमेवालमिति।

गर्भस्थेनापि त्रिशलासिद्धार्थादीना तथाविधस्नेहज्ञानं, येन तज्जीवनावधिगृहवासावस्थानप्रतिबन्ध । न च वान्यं दीक्षाकालः स्वमातापित्रवसानकालश्च ज्ञातश्चेदवधिना निरर्थकोऽभिग्रहः, न ज्ञातश्चेत् सत्यप्यवधिज्ञानेऽनुपयोगादविमृश्यकारितापत्तिरिति। मातापित्रादिस्नेहदर्शनजातमोहोदयप्रभवोऽयमभिग्रहः, अवधिज्ञान च न सततोपयोगवत् न च यावज्ज्ञेयमुपयोगवत्। अत एव च तिर्यगसङ्ख्यद्वीपसमुद्रदर्शिन. शक्रस्य 'केवलकप्प जम्बूदीवं ओहिणा आभोएमाणे'त्ति विशेषण सङ्गच्छते। मेरुशिखरे जिनं भगवन्त महावीर जन्माभिषेकाय नीत्वा कृतसमस्तमज्जनाभिषेकोपकरण कृततथाविधदिगष्टकसमन्नाराभिषेकयोग्यवृषभचतुष्काकृतिके शक्रे ममस्तमज्जनसामग्रीप्रयुक्ताशीतिलक्षयुत-

कोटीसङ्ख्यनैकयोजनमानकलशादिसामग्रीसाधने शक्रान्तःकरणवारिवाहप्लावनशङ्का तदेवावबुद्धवान्, अङ्गुष्ठाग्रेण मेरोश्चालनाच्च तामपनीतवान, तदवधेरेव महिमा। एवमेवामलकीक्रीडादिष्वप्यवधेर्नोपयोग इति। अवधिना संयतत्वस्य मन.पर्यायादिनेव प्रतिबन्धाच्च परिणयनादिबाधाकर तदवधेः। इद त्ववधेय—यत् भोगक्षय्यकर्मोदयप्रवृत्तस्तत्र सः निर्जरार्थमिति मुग्ध। तत्त्यागे स्वरसवाहित्वाद् भगवतः अवस्थौचित्येन सर्वत्र सर्वेऽपि भगवन्तः प्रवृत्तिनिवृत्तिमन्त इति तत्त्व। तेनैकस्यैवावस्थान्तरमाप्य स्वीकारस्त्यागश्चोभयमपि सङ्गच्छते, सङ्गच्छते च भगवता भिन्ना भिन्नाः प्रवृत्तिनिवृत्तय इति। दीक्षाभवनात् प्रागेव दीक्षाभागोऽप्यवधे। अत एव च गार्हस्थ्येऽपि हिरण्यादित्यागोऽब्रह्मसचित्तादिवर्जनं, गार्हस्थ्येऽपि सर्वसावद्यपरित्यागप्रतिज्ञाया अभावाच्च स काल्लो गार्हस्थ्ये मन.पर्यायरहितश्च। चण्डकौशिकस्य प्राग्भ-

वीयवृत्तस्य तत्प्रतिबोधभावस्य च ज्ञानं भगवतो निर्मले-
नावधिनैव। ननु तथाविधविशुद्धावधियुतस्य भगवतः
सोपसर्गस्थाने गमनं किमिति चाभिगृह्याभिग्रहं प्रत्यहं
भिक्षायै भ्रमणमिति ? । यथाऽतिगाढकर्मनिर्जरार्थमच्छारिया-
दृष्टान्तेनानार्यदेशे गमनं तद्वदेतद् द्वयमपि तदर्थमेव।
न च सततसर्वद्रव्योपयोग्यवधिरिति चोक्तमेव। तदेवं
सातिशयाप्रतिपातिज्ञानत्रययुतत्वाद् भगवतः सह सन्म-
तित्वं. तेनैव च समणत्वं प्राकृतसंस्कृतोभयभाषासाधारण-
मिति। भगवत्त्वं भगवतः श्रीमन्महावीरस्यैव, यतो दर्शन-
कारैः 'ऐश्वर्यस्य समग्रस्य, रूपस्य यशसः श्रियः।
धर्मस्याथ प्रयत्नस्य, षण्णां भग इतींगने' ॥१॥ तिव-
चनात् समग्रैश्वर्यादिमत एवेष्यते, तद्वांश्च भगवान् महा-
वीरः। यतः—अन्ययूथीयैस्तावदणिमाद्याश्चमत्कारदर्शनमह-
त्त्वाकाङ्क्षादि लौकिक्योऽष्ट सिद्धय ऐश्वर्यरूपेण मतास्त-

द्वांश्च मतो भगवान्। भगवतः श्रीमहावीरस्यात्र देवानन्दा-
गर्भसङ्क्रमसमये द्वितीयस्मिंश्च त्रिशलागर्भसङ्क्रमसमये च-
चक्रिजननीदृश्याया स्वप्नालेरधिकतेजःशालिनी या सिंहा-
दिचतुर्दशस्वप्नावली मात्रोर्मुखमभिविवेश. तदेवाद्यं लोकानु-
भावजं सकलभव्यात्माभ्युदयनिःश्रेयसप्रवणं लोकाति-
गमैश्वर्यं। सिद्धयोऽष्ट तु यस्य कस्यचिन्महात्मनस्तथा-
विधलब्धिनिधेर्वैक्रियलब्धिमतो भवन्ति युगपदनेकेषामपि
ताः, परं स्वप्नचतुर्दशनिरीक्षणपटुमातृभावस्तु समग्रेऽपि
दशकोटाकोटिसागरोपममाने उत्सर्पिण्यवसर्पिणीकाले चतुर्विं-
शतेरेव भगवतां। न च स युगपद् द्वयोरेकस्मिन् भरतैरावते
समग्रेऽपि। तदेतत् लोकानुभावजं लोकोत्तरमैश्वर्यं भगवतः
श्रीमहावीरस्यैव। इदं त्ववधेयं—देवलोकाच्च्यवनमेव कल्या-
णकतया चरमभवान्तवच्चरमच्यवनात्, मातृकुक्षिसङ्क्रमसम-
यस्तु न स एव, दिग्विदिक्प्राग्भवचरमस्थानभेदात्। चतु-

दैशस्वप्नोपलम्भस्तु कुक्षौ सङ्क्रमे च समयस्तद्भव.।
अत एवाभवार्जनस्योभयुर्दशस्वप्नोपलम्भः च्यवनकल्याणक
सामयिकमेतच्च। स्वप्नाद्युपलम्भस्तु दीर्घकालिकोऽने-
कांशोऽपि च। शक्रस्तवेन शक्रस्य स्तवनमपि च्यवनकल्या-
णकभवभव्योकानुभावजनितासनप्रकम्पजं, न तु कुक्षि
सङ्क्रमाणासनप्रकम्पतुल्यादि, पुष्पाद्यवतारदर्शनात्तु तच्च्यवन-
तत्स्तवनस्थानाभिमुखभवनादि। किञ्च–नि स्पृहशिरोमणेर्जग-
दुद्धारमापन्नस्य भगवतोऽचिन्त्यमेतन्महदैश्वर्यं–यदाऽऽभवं
विपुलैश्वर्या विविधपरिचर्यापरायणा एव तिष्ठति। अत
एव राज्यश्रीसम्पन्नेक्ष्वाकादिकुलेभ्य पञ्चाशद्भवानामपि हरि-
णैगमेषिद्वारा सङ्क्रामणं समक्रामभूदिति। कारिते च
त्रिशलाकुक्षिसङ्क्रमे शक्रेण भगवदैश्वर्यप्रदर्शनेन श्रीसिद्धार्थ-
राजभवनमुच्छिन्नस्वामिकादिसत्कनिधानैर्वैश्रमणदेवभाण्डागा-
रिकमाज्ञप्य तिर्यग्जृम्भकामरैः पूरित। न च वाच्यं कथमपम-
दशगृहं न पूरितं? कथं च वैश्रमणतिर्यग्जृम्भकैः पूरितमिति ?।
नीचगोत्रादयानुभवकालत्वान्न्यूनतैश्वर्यस्य, तस्य स्वीकारे
न नो हानिः। अत एव ऋषभदत्तेन सिद्धादीनां
चतुर्दशानामपि जिनचक्रिमातृमात्रदृश्यानां महास्वप्नानां
वेदशास्त्रत्वाच्च फलमुक्त, न च दरिद्रभिक्षुब्राह्मणादि-
नीचकुलसङ्गतानि निधानानि भवन्ति, वैश्रमणादीनां तदाज्ञा-
वर्तिना तदभिधानाद्यधिष्ठातृदेवाणद्वारैव तथाविधनिधानै
सिद्धार्थनृपभवनपूरणमिति श्रीव्याख्यामप्यत्युक्तशक्रलोक-
पालतदधीनदेवतत्कार्यादिवेदिना भावतां नाज्ञातमेतदिति।
नान्यायगतधनैरापूरणं वैश्रमणभवनस्यापि न्याय्यं, न च
सदैश्वर्यसाम्राज्यमिति तथाविधैरच्छिन्नस्वामिकादिभिर्निधानै
राजभवनस्य पूरणमिति। यथा च निधानैस्तथाविधैराजभ-
वनस्याऽऽपूरणं तथैव भगवत ऐश्वर्यस्यानुभावात् तस्य राजकु-
लस्य भगवत्सङ्क्रमणानन्तरं हिरण्यसुवर्णादिभिः प्रीतिसत्कारा-

न्तैः प्रत्यहमभिवर्धनं, यत्प्रभावात् वर्धमानेति नामकरणस्य मनोरथः सम्पत्तिश्चाभूतां। न च वाच्यं 'सिद्धत्थे खत्तिए'त्ति बहुशः सूत्रेषूपलम्भान्न सिद्धार्थो नृप इति। क्षत्रियत्वेनैव संहरणात्तथोक्तेः। स्वप्नपाठकसत्कारसूत्रे 'सिद्धत्थेण रण्णो'ति निधानसङ्क्रामणे च सिद्धत्थरायभवणंसी 'त्युक्तेश्च वृद्धौ च रज्जेण रट्ठेण'त्युक्तेः श्रामण्याधिकारे चिच्चा रज्जं चिच्चा रट्ठं'ति पाठात् 'स्फीतमपहाय राज्य'मिति तत्त्वार्थभाष्यकारोक्तेः, आचाराङ्गभावनाध्ययनेऽपि राज्यराष्ट्रवर्धन सामन्तनृपवशीकारश्च स्पष्टतयैवोक्तश्चेत्यलमतिप्रसक्तेन। जातमात्रस्य भगवतः षट्पञ्चाशद्दिक्कुमारिकाभिर्महोत्सवकरणमखिलममरेश्वरैरमराचले महताऽऽडम्बरेण जन्माभिषेककरणं, श्रामण्यावसरे च दीक्षाकल्याणकमहोत्सवकरणमखिलभवनोद्योतश्च, नारकाणामपि शर्मसम्भवः कल्याणकेष्वखिलेषु, जिनेश्वरस्य भगवतः दीक्षितस्यापि भगवत उपसर्गनिवारणाद्यर्थमनेकशः शक्रेन्द्रस्यागमः, अनेकशो दानप्रसंगे पञ्चकं दिव्यानामभिव्यक्तं भवति, उत्पन्ने च केवले यथाकल्पं वैमानिकादिभिः समवसरणकरणं नव्ये च देशनास्थाने चावश्यमादरः समवसरणे देवानां अशोकादीन्यष्टप्रातिहार्याणि यावज्जीवं प्रकटयन्तीन्द्रादयः, समवसरणे चैकान्नविंशतेरतिशयानां नाकिभिरुपनयनमेकादश चातिशया घातिकर्मविलयप्रभवा लोकलोकोत्तरसुखसन्ततिसङ्गता यावन्मोक्षकल्याणके सर्वेन्द्रैः सम्भूय संस्कारकरणमिति विचिन्तयतामिदमवश्यमन्तःकरणमभिज्ञामागमिष्यति भगवत ऐश्वर्यपूर्णत्वमिति। अन्यतीर्थकरतीर्थप्रणयनं यावच्च प्रायः शासनपारम्पर्यप्रवर्तनमन्त्यस्य भगवतश्च यावद्धर्मसम्भवकालं यत्, तदचिन्त्यचिन्तामणिसदृशमैश्वर्यपूर्णत्वमेवाभिव्यनक्ति भगवत इति। तारकतया पारम्पर्यप्रवृत्तिरेवैश्वर्यं, अन्यथा तु सर्वा अपि जातयोऽनादिपारम्पर्यवत्य एव। भगवतः श्रीम-

महावीरस्वामिनः सकलसुरासुरपूज्यत्वरूपमैश्वर्यमाजीवकमतनेता गोशालोऽपि स्वीकरोति, यतः स आह आनन्दमनगारं श्रावस्त्यां नगर्यां–'आणन्दा ! तवचि धम्मायरिएणं धम्मोवएसएणं समणेणं नायपुत्तेणं ओराले परियाए आसाइए ओराला कित्तिवण्णसद्दसिलोगा सदेवमणुयासुरे लोए पुव्वंति गुव्वंति थुव्वंति–इतिखलुसमणे भगवं महावीरे इतिखलुसमणे भगवं महावीरे'त्ति। न ह्यावेदनीयं भवेदेतत् यत् खलु 'विभक्तिसमीपे'ति सूत्रेण ख्यात्यर्थेऽव्ययं समस्यते इतिभद्रबाहुवत्, तथा च भगवतो महावीरस्य ख्यातिः सदेवमनुजासुरे लोकेऽसाधारणाऽभूत्, साऽपि च भगवतो वर्णकीर्त्तिशब्दश्लोकाना पूरणव्याकुलतास्तोत्रैर्न यथानथा। यद्वा वर्णो जगत्पूरणेन कीर्तिर्जगद्व्याकुलत्वेन शब्दनं स्तोत्रैश्लश्लोकनं च इति। श्रमणो भगवान् महावीर इति ख्यात्येति प्रतिपन्थी स्वाभिमानेन भगवन्महावीरेर्ष्यया वा, आह–'समणे णायपुत्ते'त्ति, ननु भगवानेव कथं ज्ञातपुत्रः? इति, अन्येषां ज्ञातपुत्राणामनेकेषां सत्त्वात्। अत एव नामकरणावसरे 'णाए ये'ति स्पृशताऽपि परिवारं सूत्रकारेणोक्तमिति, यतो भगवान् ब्राह्मणकुलात्तत्र ज्ञातकुलत्वेन संहृतः, ज्ञातकुलमुद्योतितं च भगवतैव। अत एव दीक्षावसरेऽनेके तालाचराद्या ज्ञातकुलचन्द्र इति भगवन्तमभ्यनन्दिषुरभ्यस्तोषुश्च। बौद्धा अपि मज्झिमनिकाये अनेकशो 'निग्गंठे णायपुत्ते'त्याहुः। आहुश्च भगवतो महावीरस्य सर्वज्ञतया सर्वदर्शितया अव्याहतज्ञानदर्शनधारितया च प्रसिद्धिमिति निर्विवादमैश्वर्यमपरिमितमर्हतो महावीरस्येत्यैश्वर्यसाधनम्। शरीरसौन्दर्यस्वरूपं रूपं तु सशरीरिषु स्यादिति सिद्धानामशरीरत्वात्तन्नैव, परं मुख्यानामितरेषां ज्ञानाद्यैश्वर्यांव्याबाधशिवलक्ष्मीस्वरूपावस्थितिरूपधर्मानुक्षणानन्तज्ञानदर्शनसद्वीर्यप्रवृत्तिप्रभृतीनां सद्भावाच्च

भगवत्ताया: क्षतिः । भगवतो महावीरस्य भवस्थदशायामसाधारणमेव रूपं, यतः माण्डलिकबलदेववासुदेवचक्रवर्त्तिव्यन्तराद्यनुत्तरान्तसुराहारकशरीरगणधराः क्रमशोऽनन्तगुणवृद्धरूपधराः, भगवान् जिनस्तु गणधरेभ्योऽनन्तरूपः । स्पष्टतरं चेदं 'गणहरआहार अणुत्तरे' त्यादिर्निर्युक्तिगाथायां । भगवतां जिनानां रूपातिशयदर्शनाय 'सव्वसुरा जइ रूवं अंगुट्ठपमाणयं विउव्वेज्जा । जिणपायंगुट्ठं पइ न सोहए तं जहिंगालो ॥ १ निर्युक्तिगाथया यतितमेव । न च केवलं शरीरसौन्दर्यस्वरूपं रूपमेव सातिशयं भगवतां किन्तु वज्रर्षभनाराचाख्यसंहननसमचतुरस्रसंस्थानकान्तिगतिसत्त्वसारोच्छ्वासादयो नामोदयप्रभवाः सर्वेः शुभा एव तेषां भगवतामनुभावाः । प्राग्बद्धानां यद्यपि कासाञ्चित्पापप्रकृतीनां स्यादेवोदयो भोगफलत्वनियमात्कर्मणां, तथापि सक्षीरभृतघटे निम्बबिन्दुरिवेति । भगवन्तस्तत्त्वार्थभाष्यकारा अपि 'शुभसारसत्त्वसंहननरूपे' त्यादिकारिकया तदेवाहुरुत्तमोत्तमपुरुषार्हद्वर्णनाधिकारे । अत एव च जिनानामन्तकुलादिष्ववतारो न, गर्भसङ्क्रमणमप्यन्तकुलादिष्वनन्तानन्तोत्सर्पिण्यवसर्पिण्यतिक्रमेऽवेदिताक्षीणतथाविधकर्मोदयेनैव । अत एव भगवतो महावीरस्य ऋषभदत्तब्राह्मणकुलात् सिद्धार्थज्ञातक्षत्रियकुले सङ्क्रामणं,जन्म त्वाश्चर्यरूपतयाऽपि नीचकुले न स्याज्जिनानां । तत एव च गोशालकस्य जिनत्वनिरासाय मङ्खलिपुत्रतां बहुलब्राह्मणगोशालाजातत्वं चादिदेशानन्दाभिधानानगाराय भगवान् महावीरः । जिनत्वनिरसनफलत्वाच्चैतस्यादेशस्य, न निन्दोद्यतत्वं भगवत इति । ननु ब्राह्मणादयः किं नीचैर्गोत्रीयाः ?, तथात्वे कथं गणधराणां भगवतां तत्रैव जातानां जातिगोत्रकुलानां शंसनमुत्तमतया ?, अतथात्वे कथं पूर्वोक्तं न्याय्यं गर्भान्तरसङ्क्रामणमिति? चेत् । सत्यं, जिनचक्रिवासुदेवबलदे-

धोतपत्यपेक्षया न्त्रादिकुलसमानत्र ब्राह्मणादिकुलाना, नेत-
रगणधराधनगारोत्पत्त्यपेक्षयेति ध्येयं धीमद्भिरिति।

नतु रूपमाद्य कामाङ्गं, तत्कथं भगवत्ताया हेतुरिति ?। नैवैकान्तेन रूपं कामाङ्गं, बहूनां सुरूपाणां ब्रह्मचारित्वदर्शनात्। यद्वा किं न श्रुतं पारमर्षं वचनं ? 'जे आसवा ते परिस्सवा'त्ति 'ये यथा खलु यासन्त' इत्यादि च, परं धर्माधिष्ठातॄणां सुरूपत्वं जगज्जीवानां धर्मप्रवृत्त्येकहेतुः, यतस्ते ततो ग्राह्यवचना भवन्ति, ततश्च श्रोतॄणां विशेषेणादरपूर्वको धर्मप्रयत्नः। आहुश्च निर्युक्तिकारा अपि–'धम्मोदएण रूवं करिंति रूवस्सिणोऽवि जइ धम्मं। गिज्झवओ य सुरूवो पसंसिमा तेण रूवं तु ॥१॥' त्ति, तदेव। किञ्च–परे गुणा ज्ञानदयाद्याः प्रसङ्गगम्या विद्वद्वर्गवेदनीयाश्च, परं रूपातिशयस्त्वादित एव भगवता द्योतयितुमलं, अङ्गनाबालगोपालाश्च रूपातिशयदर्शनाश्चमत्कारचञ्चुरिता भवन्ति, ततश्च निखिलनिर्ग्रन्थजनमान्यवचनो भगवान् भवति। भगवतो रूपस्य वचोगोचरातीतत्वादेव च शास्त्रकारैर्भामण्डलप्रातिहार्यवर्णने 'मा भूद्वपुर्दुरालोकमितीवोत्पिण्डितं महः' इत्युत्प्रेक्ष्यते। उत्प्रेक्षाकारणं तु सौम्यमपि विशपिता तिग्मत्वारोपणं, स्वरूपतो भामण्डलरहिता अपि भगवन्तो द्वादशसूर्यसमानसौम्यरूपाः। न च वाच्यं देशनाभूमौ तु रूपचतुष्टयं भगवता स्यात्तत्र च त्रीणि तु तानि देवकृतानीति तेषु तद्रूपसम्भव इति। प्रकाश्यप्रभाया आदर्शे यथा समानच्छायासङ्क्रमणस्तथा भगवत्सान्निध्येन तेषु देवकृतेष्वपि त्रिषु रूपेषु समानरूपभावाद्, न चैवं विषमरूपं चातुरूप्यमिति। नन्वैश्वर्यस्य परप्रत्ययप्रभवलाभत्वाल्लाभान्तरायक्षयक्षयोपशमलभ्यत्वं स्यात्, तत्र तत्क्षयोपशमस्य तेषु तेषु भावात्तदपेक्षया तारतम्याच्च कथं समग्रैश्वर्यता ? क्षायिकस्य त्वेकरूपत्वात् कथं जिनेश्वरस्यैवैकस्य समग्रैश्वर्यं

शत्वमिति ? चेत् । सत्यं, प्राक् तावद् भगवतो जिनेश्वरस्य लाभान्तरायादिक्षयोपशमा अपि जिननामप्रकृतिप्रभावसहिता इति समग्रैश्वर्यवत्त्वं न विरुध्यते। यथा समेषां केवलिनां समानेऽपि कैवल्ये भगवतां जिनानामेव सोऽतिशयो यत्तद्वाण्या सकलश्रोतॄणां समकालमशेषसंशयच्छेदः, तद्वाणीप्रबोधच्छेद्यानामेव वा श्रोतॄणां तदा तदा संशयानां समुद्भवः। अत एव निर्युक्तिकारा भगवतो रूपाख्यानप्रसङ्गेऽपि 'खए य तह उवसमे य'त्युक्त्वा समग्रोत्तमत्वं कथयन्तः समग्रैश्वर्ययुतत्वमाहुः। क्षायिकदशाया ऐकविध्येऽपि जिननामोदयसहकृतत्वादेव तत्राशोकादीन्यष्ट प्रातिहार्याणि अतिशयाश्च चतुस्त्रिंदशदिति। ननु शक्रादीनां लोकप्रभुत्वाच्चक्र्यादीनां च षड्खण्डादिप्रभुत्वादेकदैकस्यैव समग्रैश्वर्यवत्ता युक्ता, न तु भगवतां जिनेश्वराणां, न ते यतो नियतचक्र्यादिपदा इति चेत्। सत्यं, दण्डस्य लाभस्य च प्रसङ्गसाधनेनैव

तेषां तत्तदैश्वर्यं, भगवतां जिनेश्वराणां चरणकमलानभिवन्दन्ते शक्रचक्र्यादयो यत्तु तेषां प्रभावः पुण्यस्यैव, न दण्डभीत्या न क्षेत्रादिलाभलब्ध्येति। नन्वेवं रूपस्य सर्वलोकातिगत्वादुत्कृष्टता तस्याश्चैश्वर्यस्य क्षयोपशमादिलभ्यस्य समग्रता घटाकोटिमाटीकते, परं यद्भगवत्ताया हेतुभूतं रूपसाम्राज्यं तत् किं क्षायोपशमिकादिस्वरूपमौदयिकं वा ?, आद्ये, घातिकर्मणामेव भवे क्षयोपशमादिभावात् कस्य घातिकर्मणः क्षयोपशमादेस्तत् ?, द्वितीये तु सोत्तरभेदप्रपञ्चयुते कर्माष्टके तन्नाम्ना कर्म कीर्त्यते इति चेत्। सत्यं, 'भवन्ति नामोदया तस्से'त्युक्तौ संहननादिवद्रूपग्रहणात् औदारिकशरीरनाम्न एव सा विशिष्टता ग्राह्या। तथाच तथा प्रकाराण्येवौदारिकपुद्गलपरिणमनानि तथाप्रकाररूपहेतवइत्यौदयिकमेव, नातस्तत्सिद्धानां भगवतामपगतशरीरत्वात्। न च तत्रास्ति प्रयोजनं, अकरणानन्तवीर्यवत्त्वेन देशना-

घभावाद् ग्राह्यवचस्त्वासम्भवाच्च । अवाप्ते केवले परमौदारिके शरीर रूपातिशयवत् तत्रेतिनिर्वसनवचनं तु अपभ्रंशमेव, सर्वेषां केवलिना भगवत्ताहेतुकस्य रूपातिशयस्यासम्मते । न च शरीराणामौदारिकादिपञ्चकातिरिक्तं षष्ठ परमौदारिकनाम्न्यस्ति षष्ठी प्रकृतिर्या तन्निष्पादयेत् । न च शरीरस्यानवधारणीयता निवारयितुं शक्या नग्नाटैः प्रयत्नप्रपञ्चेनापि । न शक् मातौदारिकपर्याप्तभाव अन्तरा भवस्य नश्येत । न च वाच्यं लाभान्तरायक्षयस्यैतन्माहात्म्यं यत्परमौदारिकशरीरस्यैवमेव तद्योग्ययोनिमङ्क्रमाहारादिकमन्तरेण यथा सर्वार्थसिद्धिवासादिभिर्व्याख्यातृभिर्लाभान्तरायक्षयादेवाहारविरहितस्य केवलिनः वर्षाष्टकादापूर्वकोटीमेवावस्थस्य शरीरस्याभावात् शरीरवृद्धेगवत्यकरत्वात् सा मता तद्वत एव परमौदारिकलाभोऽप्यस्तु तस्मादिति । यतः क्षायोपशमिकावस्थायामंशतः सम्भवो यस्य तस्य क्षायिकावस्थायां परिपूर्णस्य सम्भवः यथा सम्यग्दर्शनचारित्रयोः । न च लाभान्तरायस्य क्षयोपशमदशायां परमौदारिकस्य निराहारशरीरवृद्धेश्चास्त्यंशतोऽपि सम्भव इति दूरोत्सार्यमदुष्टमतिभिर्भणनमेतदिति । किञ्च—सिद्धानां भगवतां सर्वथा लाभान्तरायक्षयोऽस्तीति ते किं परमौदारिकशरीरवन्तो निराहारशरीरवृद्धिमन्तो चेति मन्यन्ते?, न चेत्तूष्णीं स्थीयतां स्थिरप्रज्ञपर्षदीति । नच वर्गणाक्रमे शरीरपुद्गलवर्गणासु परमौदारिकाख्या काचित्, परमौदारिकाहारपुद्गलग्रहणं तु निराहारताऽभ्युपगमाद् दूरोत्सारितमेव । न च विजातीये शरीरे रूपातिशयो भगवत्तायाः स्थानं, शेषकेवलिभ्य आहारकशरीरिणामप्यन्येन तत्सद्भावो यतः । ननु तर्हि निर्युक्तिकारैः 'गणहरऽणुत्तर आहारगा ये'ति रूपातिशये कथमाहारकशरीरवन्तो गृहीताः? इति चेत्, भगवत्परिवारे चतुर्दशपूर्विणा सम्यग्गृह्यन्ते, आहारकशरीरिणश्च

नियमाच्चतुर्दशपूर्विण इति परिकरापेक्षया भगवतो रूपाति-
शयज्ञापनाय तथोक्तेस्तत्रावश्यकत्वमिति । नन्वाचामाम्ल-
वर्धमानतपोविधायिदेवविशेषस्य सनत्कुमारचक्रिणः च साति-
शयरूपवत्त्वात् कथं न भगवत्त्वं तयोः ? कथं वा भगवतो
महावीरस्य रूपातिशय इति चेत् । सत्यं, वर्धमानतपोविधा-
यिदेवविशेषस्येन्द्रस्य सपरिकरस्य रूपापेक्षया विशेषरूपवत्ता
न तु यावज्जीवापेक्षया, भगवतां तु यावज्जीवापेक्षया, सन-
त्कुमारस्य तु रूपवत्ता विपाकविरसेति न भगवत्ताहेतुः,
समग्रैश्वर्याद्यपेक्षिकैव सातिशयरूपवत्तैव भगवत्ताया हेतुः।
अत एव षण्णां भग इति सञ्ज्ञा, नतु षड् भगा इति। भगोऽ-
र्कज्ञानेत्यादि तु कोशे रूढं, न तु दर्शनेषु । यशस्वित्वं च
भगवतो निरतिशयमेव, यतश्च्यवनादिषु पञ्चस्वपि कल्या-
णकेषु नाकिनिकायाधिपतयः सर्वेऽपि प्रणिपातदण्डकेन
स्तुवन्ति, स्तुवानाश्च ते देवेन्द्रा भगवतोऽर्हत्त्वादीन् गुणान्

मनसिकृत्यासाधारणं भगवतो यशो गायन्त्येव । जातानपि
भगवतः कीर्तनवन्दनमहनादिभिरभ्यर्चन्ति, मेरुमूर्ध्नि अभि-
षिञ्चन्ति, निष्क्रमणमहोत्सवं समागत्य स्वर्गाद्वितन्वते । जाते
च केवले आभवमविच्छेदेनाशोकादिप्रातिहार्याष्टकपूजनी-
याश्च भवन्ति भगवन्त एव । आस्तामन्यत्, निर्वृतानामपि
तेषां भगवतां सपरिवाराणां महामहिमानं विदधत्येव । भग-
वत्कल्याणकमाहात्म्यार्थमेव प्रतिकल्याणकमत्र महोत्सवं
तत्तत्कल्याणकानां विधायापि नन्दीश्वरं गत्वाऽष्टाह्निकां
महामहिमानं कुर्वन्त्येव देवेन्द्राः । यद्यपि शास्त्रेषु 'दानपुण्य-
कृता कीर्त्तिः पराक्रमकृतं यशः' इति, 'एकदिग्गामिनी
कीर्त्तिः सर्वदिग्गामुकं यश' इति च यशःकीर्त्त्योर्भेद
आख्यायते, परं स हेतुफलकृतः, कर्मप्रवादेन त्वेकैव यशः-
कीर्त्तिरिति कर्मप्रकृतिर्नाम्नः । न च वाच्यं रूपातिशयेन
सर्वनामकर्मप्रकृतीनामुत्तमप्रशस्तोदयत्वकीर्त्तनाद् गतार्थमिदं,

यशःकीर्तेर्नामकर्मानतिपातादिति । यतो नेदं भगवतो यशः केवलं यशःकीर्तेरुदयमपेक्षते किन्तु भगवता ये भावार्हन्त्यरूपा अपायापगमाद्या अतिशयास्तानप्यपेक्षते । जिननामोदयसहभूयशोऽपि दानस्य व्यतिशयेन पराक्रमस्य प्रयत्नातिशयेन च धननात् नात्र यशःकीर्त्योर्हेतुकृतो भेदः, त्रैलोक्यामपि तदैश्वर्यास्य भणनाच्च नात्र फलकृतोऽपि भेदो यशःकीर्त्योराम्नायते, अत्र तु त्रिलोकीचेतश्चमत्कारदर्शनजातान्तरबहुमानोत्पादक यश आख्यायते । अत एव तत्त्वार्थभाष्यकारा अपि, 'यस्तु कृतार्थोऽपी'त्याद्युक्त्वा 'तस्मादर्हति पूजामर्हन्नेवोत्तमोत्तमो लोके । देवर्षिनरेन्द्रेभ्यः पूज्येभ्योऽप्यन्यसत्त्वानाम्' ॥ १ ॥ इति सूत्रेण कृतार्थत्वेऽप्यन्यसत्त्वोद्दिधीर्षया धर्मकथन पूज्यताहेतुत्वेन द्योतयन्ति । सूत्रकारा अपि भगवन्तो भगवत श्रीमतो महावीरस्य स्पष्टतया यशस्वितामाहुः । तत्र श्रीस्थानाङ्गदशमस्थानके श्रीव्याख्याप्रज्ञप्तौ षोडशशतके षष्ठोद्देशके च सूत्रमेवं स्वप्नतत्फलभावद्वारोक्तं–'एगं च णं मह हरिवेरुलियवण्णाभेणं नियगेणं अंतेण माणुसुत्तरं पव्वयं सव्वओ समंता आवेढियं परिवेढियं सुविणे पासित्ताणं पडिबुद्धे'त्ति स्वप्नसूत्रं, तत्फलसूत्रं तु 'जण्णं समणे जाव वीरे एगं मह हरिवेरुलिय जाव पडिबुद्धे तण्णं समणस्स भ० म० ओराला कित्तिवण्णसद्दसिलोगा सदेवमणुयासुरे लोए परिभमन्ति '। स्थानाङ्गे–' परिगुव्वंति इतिखलु समणे भगवं महावीरे इति०" न च भविष्यद्वृत्तकथनमेतत् । तच्च तथाऽन्यथा वा एतस्य फलस्य तथाभूतत्वादेः । अत एवाजीवकमतप्रणेता भगवतः केवल्यवस्थाया तथाभूतत्वस्यानुवादेनाहानन्दानगार, यतो भगवत्या पञ्चदशे इदं गोशालकवच –'एवं खलु आणंदा तव धम्मायरिएण धम्मोवएसएणं समणेणं णायपुत्तेणं ओराले परियाए आसाइए, कित्तिवण्णसद्दसिलोगा य सदेवमणुयासुरे लोए पुव्वंति

गुव्वंति थुव्वंति इति खलु समणे भगवं महावीरे इति खलु०' इति। ततश्चेदं निश्चितं भवति यदुत–तदानींतनेऽपि श्रमणस्य भगवतो महावीरस्य सदेवमनुष्यासुरे लोके पूरणादियोग्यं यश आसीदेव, चतुर्विंशतेरपि जिनानां परमोत्कृष्टयशोभागित्वमस्त्येव सदेवमनुजासुरे लोके, परं भगवतो महावीरस्यावसर्पिणीचतुर्थारकपर्यन्तभागभावित्वेन कुमतप्रसृमरवति काले तीर्थप्रवर्तनात् विशेषेण पराक्रमस्यावश्यकता, पराक्रमतारतम्यानुसारेणैव च जगति कीर्त्तिवर्णशब्दश्लोकरूपो यशोवादः प्रवर्त्तते, पराक्रमश्च भगवतो महावीरस्य तीर्थप्रवृत्तेः प्रारम्भे एव कर्त्तव्यतामायातः। यतो नहि त्रयोविंशतौ भगवत्सु कस्यापि भगवतो भाविगणधरा विवादायोपस्थाय गणभृत्पदवीमासादयामासुः। न च प्रत्येकमागमनं प्रतिबोधनं चासीत्, भगवतो महावीरस्य सर्वं तज्जातं। एवं च शेषाणां जिनानां धर्मोपदेशमात्रेण गण-

धरगणस्यावाप्तिर्या, सा श्रमणस्य भगवतो महावीरस्य कुमतवासनाभिमाननिरसनानन्तरीयकधर्मोपदेशेनाभूत्। ततश्च श्रमणस्य भगवतो महावीरस्य महद्यशोभागित्वं। गणधराणां प्राक्कानि कानि मिथ्यामतानि कथं तत्प्रतिपादनं कथं समाधानं सर्वज्ञताप्रत्ययेन तदुक्ताचरणं प्रतिज्ञाय कथं प्रव्रज्यायाः स्वीकृति ? सर्वमप्येतदावश्यकविवरणादौ विशेषेणोक्तं सर्वजैनप्रसिद्धमेव। तत्र च गणधराणां वादे सत्येव जीवतत्त्वे शेषाणामशेषाणामर्थानां जिज्ञासेति प्राग्जीवविषयो वादः। सिद्धे च तस्मिन् जीवधर्माणां ज्ञानसुखादीनां वैचित्र्यात्तत्कारणादयक्षयाद्याधारभूतस्य कर्मणः प्रसाधनं। सिद्धयोरपि परभवयायित्वस्यासिद्धौ दानादिधर्मानुष्ठानवैयर्थ्यमिति तज्जीवतच्छरीरवादनिरासः परभवयायितासिद्धि सकर्मजीवस्य। सिद्धेऽपि त्रिषु भवाभिनन्दिवासनावशात् सकलस्यापि जगतः स्वप्नेन्द्रजालादिवदसद्दर्शनत्वे न कल्याणकरीसरणिं श्रयेच्छ्रो-

तेति जीवसहगतभूताना सद्भावरूपतया साधनं। साधितेष्वप्येतेषु जीवादिषु बीजाङ्कुरादिदृष्टान्तेन समानजातीयायाः सन्ततेरभ्युपगमे न मोक्षसाधनज्ञानानुष्ठानार्थं प्रतिपत्तिरिति भवान्तर साध्येतरयोः सिद्धिः। सिद्धेष्वपि जीवादिषु परभववैचित्र्यपर्यन्तेषु जीवाना कर्मनन्यथायोग्यताया असद्भावाद् जालस्य सर्वं स्यादिति जीवाना मिथ्यात्वादय. कर्मबन्धहेतवः तत्कार्यबन्धश्चावश्यं साधनीय इति तत्सिद्धिः। सिद्धेष्वपि जीवादिषु बन्धान्तेषु सौख्यातिरेकाभिलाषिणो जीवाः मुक्तिपदप्रापमनन्तकालव्याबाधसुखस्य सत्त्वेऽपि मुक्तेरनुभवप्रत्यक्षगम्यत्वात् प्रत्यक्षोदाहरणीयसुखातिरेकवता देवाना साधनमावश्यक, श्रूयन्ते चाभव्यमिथ्यादृशो द्रव्यानुष्ठानवन्तोऽपि सम्यग्दृष्टयो देवातिरेकसौख्यवाञ्छया हिंसाद्याश्रवान् परिहरन्ति, आचरन्ति च शुद्धतमयोगेन दानशीलादीनि चेत्यहिंसादिमार्गप्रवृत्तये दानाद्यनुष्ठानाय च देवसायाः साधनमावश्यकमिति देवानां साधनं। पापकार्यपरिहारपरायणानामेव यथोक्तफलदो धर्मः, पापपरिहारश्चेहत्यवेदनातो दुरन्तगोत्रगतिमन्तानां नारकवेदनानां श्रवणात्, यथा लोके नीतिफलापेक्षयाऽकृत्यपरिहारः स्वल्पतम एव, बाहुल्येन तु नृपादिविहितादपकृतहेतुकदण्डादेव प्राचुर्येणापकृत्येभ्यो निवर्तनं, तथा धार्मिकाणा धर्मकार्येषु प्रवर्तमानानामपि नरकगतिभयादेव विशेषेण प्रवृत्तिरिति नारकानां साधनं। साधितेष्वपि जीवादिषु नारकान्तेषु कर्मण एकविधत्वे सुखदुःखतदतिशयवत्स्वनारकसद्भावो न श्रद्धापथं प्राप्नुयादिति कर्मणो वैचित्र्यस्य साधनमत्यावश्यकं। यथा च दुःखाभावरूपं न सुखं, न च सुखाभावरूपं दुःखं, प्रस्तरादावुपलम्भप्रसङ्गात् द्वयोः पृथक् पृथक् साधनजन्यत्वाच्च। यद्यपि परस्परविरुद्धस्वरूपे पुण्यपापे तथाप्येकाधिकरणवर्तित्वं,नृपादीनामन्धत्वादिदर्शनात्। रूपरसयोरिव परस्परपार्थक्येऽप्ये-

कात्मनि पुण्यपापे बद्धे उदिते च भवतः। न च वाच्यमात्मनः शुभाशुभान्यतरैकाध्यवसायवत्त्वात् कथं पुण्यपापयोर्युगपद्बन्ध उदयो वेति ?। योगाधीनस्तावद्बन्धः कर्मणां, योगाश्च यथा शुभाशुभतया द्वेधा पुण्यपापहेतुतया सिध्यन्ति, तथैव समित्यनशनादिरूपसंवरनिर्जराहेतुताऽपि योगमिथ्यात्वादिरूपाश्रवबन्धहेतुतावद्वर्त्तनाच्छुद्धाशुद्धाशुद्धरूपता मन्तव्यैव, शुद्धता च कषायमान्द्यजनिता। ततश्च य एव योगपरिणामेषु शुद्धत्वस्यांशः स पुण्यस्याश्रवे बन्धे चोपयुक्तः, शेषः शेषस्य। उदयस्त्वयोगिनं यावत् बन्धानुसारेणोभयोः स्यादेवेति। मिश्रता तु सुखदुःखयोः पार्थक्येनानुभवान्नैव कल्पयितुमपि शक्या। ननु क्षीणकषायेष्वनुसमयं सद्वेद्यरूपपुण्यस्य बन्धः, सामयिकत्वाच्च बन्धस्योदयोऽपि, प्राग्बन्धानुसारेणाघातिनामुदयस्तु पुण्यपापोभयरूप इति सिद्धे सातासातोभयोदयसम्भवे कथं न मिश्रत्वमुदयस्येति ?।

सत्यमुक्तम्, अयुक्तं तूक्तं, निम्बुरसलेशस्य क्षीरकुम्भे न यथा पृथक्त्ववेदनं तद्वदकषायिणोऽसातस्य वेदनेऽपि न मिश्रत्वं। एव च न कर्मणां मिश्रतापक्षः, न च मिश्रा अध्यवसायास्तद्धेतुभूता इति पृथक् स्वतन्त्रे एव पुण्यपापे इति। अयोगिनि निर्जरा त्वावर्जीकरणकालरचितश्रेणेरनुसारेण, संवरस्तु यावज्जीवं, प्राग् हिंसादीनामाश्रवाणां परित्यागात्। शुद्धोऽपि च योगः शुभ एव। सिद्धेष्वपि सर्वेष्वप्येतेषु जन्मजरामरणरोगशोकभयग्रस्ताद्भवादुद्विग्नानां न किमप्याश्वासनस्थानमिति, यद्वा विवेकिनां परिहार्यतया न धर्मादयोऽपि पुरुषार्थाः, किन्त्वेक एव सर्वाबाधावियुक्तोऽनन्तज्ञानदर्शनसुखवीर्यमयो मोक्षः पुरुषार्थतयाऽभिमत इति, मुमुक्षुताहेतुकत्वाज्जिनकर्मणः प्राग्बद्धस्योदयवत्त्वान्मोक्षः साध्य इति। किञ्च–यथा भगवतो महावीरस्यान्ययूथीयमतखण्डनपूर्वकतीर्थप्रवर्त्तकतया प्रकृष्टयशोभागित्वं तथैव भगवतो निर्वा-

णदिने अष्टादशभिर्नृपैः पाराभोगरूपं पौषधोपवासकरण-
मपि सर्वदेशव्यापि यशस्वितारूयापकं, विशेषतश्च मारोद्यो-
तत्वेन भगवत प्रसिद्धिर्लोके च तन्निमित्तकमेव दीपालि-
कापर्वणः प्रवर्तनं। कुण्डाग्रगर्भिणीदुष्पमारकेऽपि श्रमणस्य
भगवतो महावीरस्यैव जगदुद्धारकारिणी दुष्मगुरुभिराख्या
शासनस्य प्रवृत्तिर्भगवतः प्रकृष्टं यशोवादमेव वदति।
अन्यथ स एव भगवान ताहशस्य गणभृतो गौतमस्य व्याप-
णिता, येन दत्ता स्वयं प्रव्रज्या केवलफलशालिन्येव
भवेत्, पञ्चदशशतस्तापसानां तत्क्षणादेव केवल्दा-
दायिनी प्रव्रज्या। परिषहोपसर्गसहनं भैरवेष्वप्युपसर्ग-
प्रजेष्वचलत्वं प्रतिमापालनं च भगवतो धीरस्य परा-
क्रमकं यश एवाख्याति। तपोऽनिशयवत्त्वादपि
श्रमणो भगवान् महावीर इति स एव भगवान् वन्द्य
इति। ३। श्रियमतिशयितामपेक्ष्य भगवता तु जिन-
कल्पज्ञानां जिनेश्वराणामेव। यतस्तेषां हि भगवतामव-
तारजन्मादि राज्यश्रियं कारयन्तु पालयन्तु च कुलेष्वेव,
नान्यत्र कदाचिदपि। अत एव नैवाधन्यकुलादिष्ववतारः।
भगवतो महावीरस्य कथं ब्राह्मणभिक्षाककुले उत्पादः?
ऋषभदत्तस्य ब्राह्मणभिक्षाकत्वादेव जिनचरित्रनिबन्धना-
नामपि चतुर्दशानां महास्वप्नानां 'चउण्हं वेयाण'मित्यादि
यावत् 'परिव्वायएसु नएसु सुपरिणिट्ठिए आविभविस्सइ'-
त्युक्तमिति चेत्, अत एव नियमात् स आश्चर्यरूपः, जन्म तु
भगवतो महावीरस्य राज्यश्रियं कारयति पालयति च
ज्ञातक्षत्रियकुले श्रीसिद्धार्थनृपगृहे एव। ननु कथमेतत्
अवतारजन्मनोर्भिन्नकुलत्वमिति?, त्रैकालिकजीतानुसारेण
सौधर्माधिपतिना शक्रेण हितानुकम्पकहरिणेगमेषिद्वारा
राज्यश्रियं कारयति पालयति च ज्ञातक्षत्रियकुलीनश्रीसि-
द्धार्थनरेन्द्रगृहे संहरणात्। अत एवाचाराङ्गसूत्रेणाकल्पयोः

संहरणाधिकार इति। किञ्च–सामान्येन श्रीमत्तयैश्वर्यं व्याप्तं तथापि श्रियः पृथग्ग्रहाद्विशिष्टैव च सा ग्राह्या, विशिष्टाश्च ता एव श्रियो याः परोपकारहेतुकदानफलाः, अन्यथा तु पुरन्दराः सन्त्येव लोकाधिपत्यवन्त सदैव, न चैते तादृशश्रीमन्तः। दानप्रवृत्तिश्च भगवतां जिनेश्वराणां प्रकृष्टतरैव, यतो न विरहय्य भगवतो जिनेश्वरान् कोऽपि सातत्येन संवत्सरं यावद्दाता, दानं च तत्र दातृचेतःप्रधानं किन्तु किमिच्छकत्वाद्दानस्य तस्य याचयित्रिच्छाप्रधानं. दत्तं सर्वैरपि भगवद्भिर्जिनेश्वरैः प्राक् प्रव्रज्यायाः सततं संवत्सरं यावद्दानं। ननु याचयित्रिच्छानुसारिणि दाने लोभस्याकाशसमानानन्त्यभावधारित्वान्न स्यादेकस्यापि तथाविधं दानमिति चेत्। सत्यं, परं जिनेश्वरमाहात्म्यं देवानुभावश्चात्र तथाप्रकारो येन याचयित्रिच्छा तादृश्येव भवति.या नानन्त्यमनुधावति। किञ्च–भगवद्भिः सर्वैरपि जिनेश्वरैः संवत्सरेणाष्टाशीत्यधिकत्रिशतकोट्यः सुवर्णदीनाराणां दत्ताः, भगवता श्रीमहावीरेण तु प्रव्रज्यावसरे जीतमिति यद्वामस्कन्धे देवदूष्यं शक्रेण निहितं जिनानुचीर्णादिहेतुभिर्दध्रे च भगवता, तस्याप्यर्धं दत्तं विप्रायेति। दानहेतुकश्रीमत्त्वमर्हतामेवातिशायि। न कोऽप्यर्हन् सतीं प्रव्रज्यामननुपाल्य प्राप्नुयादर्हत्तां। परे तु भरताद्यास्तु तीर्थस्याप्रवर्त्तकत्वाद्भवे-युर्गृह्यादिलिङ्गिनोऽपि केवलज्ञानप्राप्तिमन्तो, न तु तीर्थंकराः। अत एव सन्मुन्याचाराणां प्रवर्त्तयितृत्वं तेषामादिकर्तृता च। अत एव भगवतो युगादिदेवस्यादिमपृथिवीनाथत्वादिभिक्षाचरसाधुत्वं विशिष्यते। सिद्धे चैवं सर्वेषां जिनेश्वराणां भिक्षाचरसाधुत्वग्रहणस्य नैयत्ये तत्प्रव्रज्याग्रहणात् प्राग्दीयमानं दानं सांवत्सरिकं स्वतः सिद्धमेव जिनेश्वराणामिति। ननु स्वयं धनं त्यज्यते संसारनिबन्धनाश्रवरूपत्वाद्धेयमिति मत्वा तर्हि तथाविधेनाश्रवहेतुना संसारनिबन्धनेन धनेन परं

कथ युज्यन्ते कथं च तदुचितमिति ? चेत्। सत्य, मार्गणाः दीनानाथकृपणकार्पटिकादयो-र्थिनोऽर्थप्राणाः भवन्ति, प्राप्तो च यथेष्टस्यार्थस्य पूर्णमनोरथास्तद्दातारं भगवन्तं जीवितदानदक्षरूपत्वेनानुमोदयन्ति मुक्तकण्ठं प्रशसन्ति च तद्दानकारणीभूता प्रव्रज्यां, प्रभावेण चैतेनैव ते भविष्यन्ति भवन्ति... प्रव्रज्याग्रिग्रहणविचक्षणा इति... पर्यन्तधर्मफलमेव तद्दानं। तत एव 'धर्मोद्यताश्च तथाग'दिति भगवद्धरिभद्रसूरिवचः। किञ्च-येऽपि नृपादयो नार्थिनस्तेऽपि सातिशयं दान दातारं च दृष्ट्वा श्रुत्वा ज्ञात्वा वा तद्दानधर्मं तत्कारिणं जिनं तत्कारणभूता प्रव्रज्या चोपबृहन्तः स्युरेव प्रव्रज्याबहुमानिनः। अत एव च भगवता जिनेश्वराणामाद्यदेशनायामेव पर सहसा जीवाः प्रव्रजु'। नियमश्चैष, तेनैव भगवतो महावीरस्य देशनायामाद्याया न कोऽपि प्राव्राजीदिति महदाश्चर्यं मन्यते मतिमद्भिः। प्रव्रज्याऽनन्यचित्तेन गायपातिनः श्रमणोपासकास्तु परोक्ष्या इति न न्यूनमिति। ननु सर्वेऽपि जिना न चक्रवर्तिनस्तर्हि निधानाभावात् कथमेतावदतिमहद्दानं तेषा कथं तद्दानमिति ? चेत्। सत्यं, न हि ते नियमेन चक्रवर्त्तिनो, न चैतावद्दानं चक्रिणामपि सम्भवेत्। पर शक्रादिष्टाः सुरवरास्तद्दानेन भगवता राजकुलं पूर्णं करोतीति नाविदितं जैनानां विदुषामिति। भोगफललक्ष्मीविचारे त्वास्तां बाल्ये शक्रसन्दिष्टधात्रीपरिगृहीतत्वं, शक्रादिकर्तव्यताऽऽदिमार्हता वंशस्थापनविवाहराज्याभिषेकादिक्रियायाः। प्रव्रज्या प्रतिपद्य परिसह्य परिषहानभिभूयोपसर्गान् निहत्याशुभतराणि चत्वारि घातिकर्माण्यवाप्ताखिलार्थज्ञानज्ञापनपटुकेवलस्यापि निःस्पृहशिरोमणेर्भगवतोऽविच्छेदेन तिष्ठतो गच्छतः शयानस्य यावत् मरणोपाग्रमुपागतस्यापि भवत्यष्टसु प्रातिहार्येषु सुरपुष्पवृष्टिचामरसपादपीठसिंहासनोर्ध्वोर्ध्वविस्तृतच्छत्रादिभो-

गस्यातिशयिता, न शक्रेणापि शक्या यथावद्वर्णयितुं। देशना-
वसरे तु चतुस्त्रिंशदप्यतिशयाः स्वभावकर्मक्षयदेवकृता
अतिशयितं भोगं व्यञ्जयन्ती अनुपमा विद्यते भोगफला
लक्ष्मीति। बद्धेऽबद्धे च जिननाम्नि त्रिलोक्यामपि
नामद्रव्यभावस्मरणपूर्वकमाकृतीनां पूजनादैश्वर्यसहगता पूज-
कधृता विविधा चन्दनादिका भोगसामग्री सातिशयितैवेत्य-
नुपमलक्ष्मीफलोद्भवादनुत्तरलक्ष्मीश्वरत्वं भगवतामर्हतामेव।
श्रमणस्य भगवतो महावीरस्य विशेपलक्ष्मीधरत्वं तूत्पत्तेः
प्रागपि स्वमहिम्नाऽनेकप्रकारैर्निधानैः सहिरण्यसुवर्णरज-
तधनधान्यसत्सारस्वापतेयान्तःपुरयशोवादसामन्तवशीकरणैः-
सिद्धार्थनृपभवनस्यापूर्वागतैः पूरणं, यत्प्रभावादेव माता-
पित्रोर्भगवतो 'वर्धमान' इतिनामकरणस्याभिलाषा पूर्तिश्च
जातेति। न चैतद्विदुपामविदितमिति ।४। धर्मस्तु भगवतो
जिनेश्वरानन्तरेण स्थानमप्यन्यत्र रागद्वेषमोहाज्ञानभृतेषु देवा-।

दिनामोद्वहत्स्वपि नातिष्ठते। यदाऽन्ये देवादयो जगज्जननस्थे-
मसंहारकारित्वेन महिम्नाऽलीकेन जगति प्रतिष्ठितास्तर्हि
भगवन्तो जिनेश्वराः संसारसमुद्रसमुत्तारणप्रवणं तीर्थं द्वाद-
शाङ्गात्मकं केवलमहाव्रताणुव्रतैकाश्रयं प्रवर्त्य देवाभिधामि-
न्द्रादिकृतामापुः। प्रथमं तावत्त एव तीर्थंकरा भवन्ति जीवाः
येऽनेकेषु प्राक्तनेषु जन्मसु धर्मप्राधान्यजीविनः। अत एव
सिद्धत्वादीनि परमेष्ठिपदानि चत्वारि प्रान्त्यभवयत्नमात्र-
प्राप्याणि, नत्वर्हत्पदं। किञ्च—स एव जीवो लब्धुमर्हत्यर्हत्तां,
यः तृतीये भवे प्राक्तावद्वरबोधिलाभमवाप्नुयात्। यथा
भगवता श्रीमहावीरेण मरीच्यादिषु भवेषु लब्धो बोधिः,
परं वरबोधिस्तु नन्दनभवे एव। ननु को बोधिरिति? चेत्, 'बोहि-
लाभवत्तियाए, आरोग्गबोहिलाभं, ता देव दिज्ज बोहिं'मि-
त्यादिषु प्रेत्य जिनधर्मप्राप्तिरूपस्य तस्य विवक्षितेऽप्यत्र तु
'लद्धिल्लयं च बोहिं, बोहीणासो अणन्तसंसारो, बोहीवि

सुद्गुलस्स तेसिं स्यादिवत् भव्यत्वपर्यायोऽत्र बोधिरिति। ननु सम्यक्त्वस्य तत्त्वश्रद्धानैकरूपत्वात् कथं तारतम्यमिति ? चेद्, यथा कारणविशुद्धिप्रभृतिप्रवर्त्तितमौपशमिकादिषु वैचित्र्यं कारणमात्रकृतं च निसर्गादिषु वैचित्र्यमेकस्वरूपस्यापि तस्य। अत्र तु केवलं श्रद्धानमात्र बोधि, वरबोधिस्त्ववाप्य श्रद्धानं जन्मजरामरणरोगशोकभृत जगत् तन्निसारणोपायभूतं च निर्ग्रन्थप्रवचनं ज्ञात्वा तेन प्रवचनेन जगतः समग्रस्य यदोद्दिधीर्षा प्रवर्तेत, तदा तस्य सम्यक्त्वं वरबोधिरिति कथ्यते। लब्धे च तस्मिन् परार्थोद्यत एव भवेत्। अत एव 'वरबोधेः समारभ्य परार्थोद्यत एव ही'ति श्रीहरिभद्राचार्याः। स च यदा निर्यामकवत्परनिस्तारणमात्राभिप्रायेणार्हदादीनां स्थानकानामनन्यमनसाऽऽराधना करोति नियतवेद्यं बध्नाति जिनाख्यं नामकर्म, यदुदयाद्भगवान् जिनेश्वरो जायते। अत एव 'भाविभावो भवेष्वनेकेष्वि'ति भाष्यकाराः। तथा तीर्थंकरो भावितात्मा। यथेतरेषामिव न तेषां भवान्तेन धर्मान्तः प्राक्तृतीयाद्भिभवादप्रतिहतसम्यक्त्वज्ञाना हि तीर्थकृत इति। किञ्च–जिनवराः प्राक्तृतीये भवेऽनन्तस्य संसारस्यान्तं कुर्वाणा भवत्रिकमशेषयित्वा त कुर्वन्ति। अर्थापत्तिसिद्धमिदमायातं यज्जगदुद्धाराय भवत्रयीमपीष्टवन्तः। न च शक्ता अपि भवत्रयीं तत्र क्षपयन्ति। तत्त्वतोऽन्ये देवा संसारबीजवृद्धयेऽवतेरु, भगवन्तो जिनेश्वरास्तु संसारिणां संसारोद्धारायावतरन्ति। न चास्मात्कश्चिदन्यो विशेषोऽस्ति विचारणीयो विपश्चितां सुदेवकुदेवादीनां पार्थक्येनेत्यलमप्रकृतेन। आयाताश्च तथाविधाप्रतिपातिसम्यक्त्वज्ञानवन्तो भगवन्तस्तीर्थंकराः स्वजननीं स्वान्तरराात्रावेव चतुर्दशमहास्वप्नान् गजादीनदीदृशन, तद्दर्शने च प्रतिबुद्धा जिनजनन्यः स्वस्वामिभ्यो निवेद्य तं स्वप्नोपलम्भं धार्मिकाभिरुत्तमक-

थाभिरेव स्वप्नजागरिकां चक्रुः। गर्भप्रदेशमागतानामेषोऽनूनो
महिमा, यत्तदीयधर्मवासनयाऽऽगतमात्रेण मातॄणां तथाभाव-
सम्पादनं भवति। स्पष्टा चेयं धर्मजागरिकाकृतिः पर्युषणा-
कल्पे इति। पूर्वभवविहितस्य सम्यक्त्वधर्मस्याप्रतिपातादेव
जिनेश्वराः स्वयंसम्बुद्धाः सन्तश्चारित्रजिघृक्षवो भवन्ति।
सम्यक्त्वापेक्षया स्वयंसम्बुद्धत्वं तथाभव्यपरिपाकप्राधान्यम-
पेक्ष्य तत्र गुरोरेव सम्यक्त्वलाभात्। इयं चारित्रप्रतिपत्तिस्तु
न तथाऽऽपेक्षिकस्वयंसम्बुद्धत्वजन्या, कस्याप्याचार्यादेरुप-
देशाभावात्। यद्यपि चारित्रं तीर्थप्रवृत्तिहेतुकेवलोत्पादकारणं
तथापि सा प्रतिपत्तिस्तीर्थायैव। तत एव 'जगतः क्षेमाय
प्रवव्राजे'ति भाष्यकाराः। जीतकल्पिकाश्च लोकान्तिका
भगवन्तं प्रव्रज्यायै आचारेण विज्ञपयन्तोऽपि तीर्थं प्रवर्त्त-
येत्येव विज्ञपयन्ति। बुद्धस्य विज्ञपनं तु जिगमिषोर्नृपस्य
भृत्या यथा पादा अवधार्यतामिति विनयप्रदर्शनाय वदन्ति,

तद्वदेव लोकानुभावमाहात्म्यसहकृतस्तस्य धर्मातिशयः।
यतः स्फीतमपहाय राज्यराष्ट्रादि प्रतिपन्नः प्रव्रज्यां तदैव
मनःपर्यायज्ञानं अप्रमत्तरूपसंयतश्रेष्ठ एव जायमानं समुत्पन्नं।
तत एव 'पव्वज्जं पडिवन्नो चउनाणी जाव छउमत्थो'त्ति
शास्त्रकाराः समाचख्युः। तस्यैकाग्र्यं मनसो धर्मगोचरं
दृष्ट्वैव देवा अपि पदे पदे तमेव प्रणमन्ति। अत एव 'देवावि
तं नमंसंति जस्स धम्मे सया मणो'त्ति सूत्रकाराः। केवलिनो
भावमनसोऽभावात्, द्रव्यमनसोऽपि पृष्टार्थोत्तरमात्रविषय-
त्वान्न धर्मे केवलिनां मन आख्यातुं शक्यं। ततो व्याख्यायां
दृष्टान्तीकृता अर्हन्तश्छद्मस्थावस्थाः ग्राह्याः। पूज्यता च
देवानां सततं धर्मव्यग्रमनस्कत्वाज्जिनानां। श्रामण्ये भग-
वान् महावीरश्चाकेवलं कायोत्सर्गेणास्थात्। प्रमादकालश्च
सकलेऽपि श्रामण्येऽहोरात्रमान एव। धर्मपरायणजीवनेन
जीवन्नपि छाद्मस्थ्येऽपि भगवान् परान् धर्मेऽवतारयितुमेवोद्यु-

कस्ततः शूलपाणियक्षप्रतिबोधाय सोपसर्गेपि तदावासेऽस्थात् कायोत्सर्गेण। प्रतिबुद्धश्चान्यप्राणिजीवितान्तकरानपि घोरानुपसर्गान् विधायापि।अतीतरागोऽपि वीतरागद्वेषतामनुभवन् कर्मनिर्जरानिमग्नोऽधिसोढवांश्च तान्। यद्यपि सर्वेऽप्यास्तिका देहादात्मनो भिन्नत्व लक्षणादिभेदेन मन्यते प्रतिपादयन्ति च तथा सभ्यानामप्यग्रे, पर तनुतनुबाधासम्भवेपि तत्प्रतीकारलीनाः, समर्थं च त्रातारमनुगच्छन्ति। ततश्च स्पष्टैव तेषामयथावादकारिता। भगवान् महावीरस्तु धर्मोदयानुसारी जीवितान्तकरानुपसर्गान् स्थाने तेषां गत्वापि सेहे। स्वोपसर्गाशर्मनिवारणाय शक्रेण सदा समासन्नावस्थानाय कृता विज्ञप्ति चावमेने। ततश्चाद्वितीयधर्मातिशयवानेकस्त्रिजगतीतिलक श्रमणो भगवान् महावीर इति विपश्चिद्भिर्निश्चेयमेवेति। नन्वेवंविधेन संयमधर्मातिशयवता भूत्वा किमिति 'जे उ दाणं पसंसंती'त्यादिना 'गिहिणो वेयावच्च'मिति च निषिद्धं प्रमादस्थानमाचरितमिति ? चेत्। सत्यं, परं स परव्यवहारानुसारियोग्यो निषेधः, आगमव्यवहारिणोपि यदि न तद्विषयः। यतो भगवान् गौतमः समहिषीक एकाकी भूमिगृहे गतः, भगवान् स्थूलभद्रश्च कोशावेश्यागृहे चतुर्मासीं स्थितस्तत्र किं सूत्रादेशः ?, भगवांस्तु कल्पातीत इति न स निषेधविषयः। चतुर्ज्ञानधरत्वाच्च नासमीक्ष्यकारी। यथालाभमेव भगवत्प्रवृत्तिः। अनुकम्पाविशेषादि त्वस्त्येवा। न च रागबुद्ध्या स त्यागः किन्तु शासनशोभायै केवलायै इति केवलमवाप्यापि भगवान् संयमधर्मपथपान्थ एव। यतोऽनुभूयापि षण्मासीलोहितवर्चोबाधां तन्निवारणाय परमश्राविकया कृतं पाकं न्यषेधयत् सिंहायानगाराय। ननु चिकित्सेयं, निषिद्धा चासौ श्रमणानामिति। यतः शासनापभ्राजिष्णुगोशालकादिप्रचारितासभ्यानुचितेन वाक्येन दूनस्य सिंहानगारस्य समाधये सकलश्रा-

सनबाधापरिहारायैव तस्यान्यपाकानयनायानुज्ञा। अत एव शान्ते तेनान्यार्थाय पाकेन भगवद्व्याधौ श्रमणश्रमणी-श्रावकश्राविकासमुदायः सप्रमोदं ननर्त, देवा देव्यश्चापि ननृतु-ईर्षातिरेकादिति। व्याधेरस्य दीर्घकालावस्थानादाजीवक-मतप्रणायिनो गोशालकस्य तेजोलेश्याप्रत्याघातजातमृत्यो-दूनमनसस्तद्भक्ता विशेषेण गोशालकादिशवाकर्षपूर्वक-चतुष्पथीयाजिनत्वोद्घोषणादिप्राकट्येन हताशास्ते भगव-ल्लोहितवर्चोबाधाप्रवृत्त्या सञ्जातहर्षाः परेपि च शौद्धोदनि-भक्ताद्या ईर्ष्याग्निदग्धान्तःकरणाः सदृशीकरणाय स्वप्रणेतृ-भिर्भगवतो महावीरस्याप्यजिनत्वेनान्तरकरणादीन् प्रलापान् प्रथयित्वा तद्व्याधिसद्भावनाम्ना चक्रुः शासनस्यानन्यो-पायनिवार्यं मालिन्यं, मुमुक्षूणां च भद्रकजीवानां मोक्षमार्ग-प्रध्वंसं। एतदेव कारणं सिंहस्यानगारस्यारण्यरोदनस्य। एवं च सति न भगवता व्याधिप्रतीकारायानायितं

जग्धं चागदं, किन्तु भव्यजन्तुजातात्मगतगदागदङ्कारत्व-मेवानुसन्धानं कृतं मोक्षमार्गस्य। तदर्थमेव च भगवतः सर्वोपि प्राकृत् तीयाद्भवाद्यत्न इति। नन्वेवंविधैर्जगज्ज्ञाताधिव्याधि-निवारणनदीष्णैर्भगवद्भिः पञ्चदशशत्याः साधूनां सत्सु च प्रासुकेषु भोजनपानस्थण्डिलेषु अनशनं तदननुज्ञया कारित-मिति ? चेत्, तदपि शासनाधारभूतशास्त्राज्ञाया व्यवहार-प्राधान्येन रक्षार्थमेव। यद्यपि भगवन्तः केवलवेधसः कल्पा-तीताश्च परं ते पञ्चदशशती साधूनां तु श्रुतव्यवहारानुसा-रिण्येव, श्रुतव्यवहारश्चाग्न्यादिद्रव्यशस्त्रोपहतानामेव क्षित्या-दीनां संयमस्याक्षतये क्रियमाणः संयममार्गस्य न क्षतिकरः, इतरथा तु क्षतिकर एवेति। केवलवेद्यपि श्रुतव्यवहारं सदैव प्रमाणयत्येव। 'ओहे सुओवउत्तो'त्यादिवचनात्। जाताश्च तदैवाराधकास्ते। श्रुतव्यवहाररक्षाया एव भगवान् सूर्याभस्य देवस्यानन्यहितकरनाट्यादेशावसरे मौनं दधार। विज्ञायैवं-

विधं व्यवहारं भगवता केवलवेदिना विशेषोपि नादरो विहितो निषेधे सर्वधर्मपरायणदेवत्वात्स्वल्पोऽप्ययं नाट्यप्रकार इति च विदित्वा। सूर्याभामरस्तु भाविभद्रप्रकार एव नाट्यमिति। शालेय च केवलोत्पादे केवलेन सम्भिमिषकमेव चन्दनबालामृगावत्योरुत्तरं समवसरणे सूर्याचन्द्रमसोर्विमानाभ्यामुद्योतितेऽवतिष्ठन्ती मृगावती न गमनाय प्रेरिता, चन्दनबाला तु महासाध्वीसमुदाययुतेति सद्यस्थिति तत्र न सस्मार। भगवान् जीवआतसंसारोद्धरणसमर्थसंयमधर्मरसिक इति स्कन्दकपरिव्राजकसन्मुखगमने भगवतो गौतमस्यानुमेने, अनुमेने च महाशतकश्रमणोपासकस्य धर्मध्वंसनाशोस्थिताया निजाया पत्न्या महाऽपराधेऽप्यवधिज्ञानक्षाभविष्यभगवतदृष्यतिकरांशिकतः शमनाय तद्गृहे भगवता गमने। यावज्जीविते संयमधर्मं समाराध्यानुभूय च दीर्घकाले वीतरागताश्रिता सर्वज्ञता सर्वसंवररूपसंयमधर्मेण मुक्तिमार्गचरमसोपानरूपा परमसंयमधर्मसामर्थ्याधिगामयोगिनामधिगमामेति सर्वोत्कृष्टधर्मातिशयवानेव श्रमणो भगवान् महावीर इति । ८ ।

प्रयत्नश्च सकरणवीर्याख्यः, स च भगवतोऽनुपमत्वादतिशयवानेव। यद्यपि न कोपि वीर्यान्तरायस्य घातिकर्मत्वात् क्षयोपशमक्षयान्यतरावश्यकत्वात् संसारी मुक्तो वा विहीनो वीर्येण भवेत्। तत्राशरीरिणां मुक्तानामशरीरत्वादेवेच्छामनोवाचामभावाच्च लेशतोपि सकरणवीर्यं, किन्तु तेषामकरणमेव वीर्यं। न च तद्वीर्यं वचनमात्रमिति, प्रकाशहीने प्रदेशेऽपश्यतोपि चक्षुषस्तदा निष्फलत्वानभ्युपगमात्। आत्मैव ह्यनन्तवीर्यस्वरूपः। निरावरणा एव च ते भगवन्त इति। श्रमणो भगवान् महावीरस्तु करणवीर्याख्येन प्रयत्नेनातिशयवत्तेव युक्तः। प्रथमं तावद् गर्भस्थोपि गर्भस्थभावरूपाणि स्पन्दनचलनैजनानि मातृदुःखभावे रोधे। स्वभाव-

रोधस्तु महाप्रयत्नजन्य एव। जातमात्रेण निजजन्ममहोत्सवे
जन्मरात्रावेव मेरुमूर्ध्नि क्रियमाणे योऽमरगिरिं प्रलयवात-
वेगैरप्यकम्प्यं योजनशतसहस्रमानमिन्द्रान्तःकरणजातसंशय-
निरासायाकम्पयत्। न च तत्कालजातबालस्य तावन्मान-
मेरुसानुसञ्चालनमतिशयप्रयत्नं विना सम्भवेत्। संशयश्चेन्द्रस्य
योजनमाननालानां पञ्चविंशतियोजनोच्चद्वादशयोजनपृथुलानां
कलशानामधिक्षेपे मेरुमूर्ध्नि स्थितस्य तदहर्जातस्य बालस्य
कैवावाच्या स्थितिर्भविष्यति, तथाभावे चास्मत्कृता भक्ति-
रेषा देवानांप्रियत्वविधायिन्येव भवेत्, न तु देवानुप्रिये प्रीति-
सम्पादिनीतिहेतोः। न च कस्य कदा कस्मिन् कीदृशो वा संशय
इति नियमाभावात् कृतानेकजन्माभिषेकस्य तादृग्विशिष्टा-
वधिमतोऽभिषेकार्थमेवामरगिरिं विधाय मज्जनमहोपयुक्त-
सामग्रीमपरामरान् सहैव लात्वाऽऽगतस्य जन्माभिषेको-
द्यतस्य कथं जातः? इति। अवसर्पिणीप्रभावजनितवीर्यशरीर-

ह्रान्यादिस्वभावं शक्यमिति न ज्ञातमिन्द्रेणैतत्, यदुत–सामा-
न्यवीर्या जीवाः साधनसामर्थ्यानुगसामर्थ्याः, महावीर्यास्तु
साधनसङ्क्रामितमहावीर्याः। यथा देवानां तृणाद्यपि प्रहर-
णतया भवति। जिनास्तु सर्वकालीनाः सर्वास्ववस्थास्वपि
अपरिमितबला इति लोकानुभावमेनं ज्ञापयितुमेव चचालाम-
राचलमन्तिमोऽर्हन् श्रमणो भगवान् महावीर इति। शिशु-
भावे एव वर्त्तमानः श्रमणो भगवान् महावीर आमलकी-
तरुपरिविष्टकं नागेशरूपधरं सुरं सुदूरमुत्सारयामास। भगवद्भा-
पनायैव विहितं सप्ततालमानं सुरं तत्पृष्ठ्यारूढस्तथा भगवान-
भिजघान यथा स सुरोऽपि महाव्यथाक्रान्तो भगवतो वीर्या-
तिशयं दृष्ट्वा महावीर इति नामोद्घोपयामास। स हि निर्जरो
नाकिनाथकृतां 'बालभावे वर्त्तमानोऽप्यबालपराक्रमोऽनन्त-
वीर्यो वीर' इति श्लाघां भगवतोऽसहमान एव वीरत्वपरीक्षा-
र्थमागतः, स्वबलसर्वस्वेन परीक्षमाणो हताशो यदा जातस्तदा

तेन ख्यापितं—महावीरोऽयं, न तु सामान्यवीर इति। प्रयत्नातिशयप्राप्तमेव तत एतन्महावीर इति नाम। प्रयत्नातिशयश्च श्रमणस्य भगवतो महावीरस्य प्रव्रज्यादिनादाकेवलं गोपालादिसङ्गमसुरान्तकृतानेकविधानुकूलप्रतिकूलोपसर्गसहनेषु विदित एवावश्यकनिर्युक्त्यादिषु यथायथं विस्तरेणोक्तत्वात्। चतुर्विंशतावपि तीर्थंकरेषु न केषाञ्चिदप्युपसर्गा, न चैवंविधा घोरा उपसर्गा अन्यस्य कस्यापि वाचंयमस्यापि श्रूयन्ते। अनेकशो मरणावहेषूपसर्गेष्वापतितेष्वपि चरमशरीरित्वविशिष्टतीर्थंकरत्वादेव नासौ जगाम निधनं। को ह्यग्नौ दहन् कालचक्राक्रान्तो वा जीवेत् न वा बिभीयात्। देहात्मान्यत्वादीपनप्रयत्नो भगवान् वीर एव। यद्यपि कीलकाकर्षणमन्ते खरकेन कृतं, तदा भगवान् महतीमेव व्यथां सेहे, परं न स गोपालादिवत्प्रतिकूलताभाक्। स एवोपसर्गो यः प्रातिकूल्येन परैरारभ्यते, व्यथासहनं तु स्वाभाविकागतक्षुदादिषु परिषहेषु भवेत्। परीषहा अप्यनेके भगवता सोढा एव। भद्रादिषु प्रतिमासु निरन्तरमुपवासेष्वपि भगवतो वचनातिग एव प्रयत्नातिशयः। पञ्चदिनन्यूनषण्मासान्ते यः पूर्णोऽभिग्रहः तत्रापि भगवतो निरतिशय एव यत्नः परिषहाणां सहने। पार्श्वप्रभोर्यद्यपि कमठासुरेणोपसर्गः कृत, तथापि तत्र नागराजेनागत्य स उपसर्गयन् उपसर्गश्च निवारितः। अत्र तु शक्रकृता प्रशंसामसहिष्णुरप्युपसर्गयन् सङ्गमकामरो नामरेन्द्रेणापि निवारित इति। किञ्च—प्रयत्नातिशयवत्त्वादेव शक्रेन्द्रकृतामुपसर्गनिवारणार्थसमीपावस्थानविज्ञप्तिमप्यवमेने, स्पष्टीचक्रे चायुरादिसहायमन्तरेणैव तीर्थंकराणां केवलोत्पादव्यवहारं। मोक्षगमनकालेऽपि यावत् षोडश प्रहरान् दिदेश धर्मं परिषदां सदेवमनुजसम्भवानां। दशोत्तरशताध्ययनानां पुण्यपापफलविपाकानामपि तत्रैव व्याकरणमपृष्टानामेव, मरुदेवाध्ययनविभावनप्रयत्नोऽपि

मोक्षगमनकाले इति प्रयत्नातिशयवान् श्रमणो भगवान् महावीर इति ।६। अत्र धर्मः प्राक् प्रयत्नस्तु दिष्टस्तदेतज्ज्ञापयितुं यत् प्राणातिपातादिविरमणात् क्षान्त्यादीनामासेवनात्तप आदीनामाचरणाच्च यो धर्मोत्पादः, स न केनापि विहितः, किन्तु अनादिकालीनो लोकस्वभावसिद्ध एव । भगवदादि- प्रयत्नस्तु तदाचरणपूर्वकं तत्फलकेवलप्राप्तिविषयं स्वं दृष्टान्तयित्वोपदेशेनाविष्करण एवेति । भगवन्त सूत्रकारास्तु सर्वजिनसाधारणं भगवन्तं दर्शयन्तः प्रणिपातदण्डके सत्त्व- मैश्वर्यादीनां क्रमेणैवं द्योतयन्तीति । आदिकरतीर्थकरस्वयं- सम्बुद्धपदैरैश्वर्यं विहायार्हतो भगवतो नान्यस्य कस्यचिद- प्येतानि । त्रिलोक्युद्धारक्षमत्वादैश्वर्यत्वं, पुरुषोत्तमादिभिः पुरुषवरपुण्डरीकान्तैः रूपातिशयिता, स्वजातीयेष्वेव रूपित्व- विचारात् पुरुषेति । अभव्या मिथ्यादृशश्च पुरुषा एव परं सर्वेषु पुरुषेषु रूपवत्त्वादुत्तमादिगुणः । न हि रूपिणो रूपनिरूपणे

स्वपरत्वादिविशेषः । लोकोत्तमादिलोकप्रद्योतकरान्तैः पदैस्तु यशः, यशकीर्त्योर्यावल्लोकव्यापित्वात् प्रत्यनीकानामपि क्षुद्र- गोशालकादीनामपि कर्णे भगवतः सर्वज्ञत्वादिवादस्य उदा- रकीर्तिवर्णशब्दश्लोकानामव्याबाधेन प्रसरणाद्यशोऽतिशायिता । न ह्यतिशयितामन्तरेण भवेत्तेषामीर्ष्या, तद्वचनैः सर्वज्ञत्वादि- वादवदीर्ष्याया अपि प्रतीतेः । न अभयचक्षूरूपश्रुतमार्गशरण- बोधिभ्यो हीनो जैनमार्गः । परोपकाराणां मूलं फलं चैतान्ये- वेति श्रीरूपाणि अभयादीनि, तद्दानदक्षाश्च भगवन्त एवा- दाविति श्रियोऽतिशयिता, लोकोत्तरे चाध्वनि श्रिया एतान्येव गृह्यमाणानि शोभावहानीति । धर्मदादिधर्मवरचा- तुरन्तचक्रवर्त्यन्तैः पदैस्तु प्रशस्तातिशयधर्मवत्तोच्यते । न चेदृशोऽन्यो धर्मातिशयवान् जगत्यपि । अप्रतिहतादिकर्मो- चकान्तैस्तु पदैर्भगवतः प्रयत्नातिशयः । सर्वज्ञादीनि सिद्धत्वावश्यंभाववेदकानि पदानि नात्रोपयुज्यन्ते । तत्त्वतस्तु

सिद्धाना भगवत्त्व सर्वज्ञादिभिरेव भ्वननाय सहास्तानि तत्। अत एवाभतिष्ठतेत्यादिना न पुनरुक्ततेति। पर्युषणाकल्पे तूक्त–'अयले भयभेरवाणा खंति खमे १ परिसहोवसग्गाण २ पडिमाणं पालए ३ अरइसहे ४ धीम ५ दविए'त्ति ६ गुणषट्कारणादेवैर्भगव ति प्राक्तं। तत्र भय गोपालादिकृतवधादिजं, भैरव शूलपाणिकटपूतनासगमकदेवकृत। न च त्रिष्वपि स्थानेषु भगवतः किञ्चिदप्यप्रचलन, देवानां न च देवास्तादृशे निश्चलाः। अत एव तथाभसङ्गसम्पत्तौ ते कृष्णराजीमनुधावन्ति। तत एव च सा-पि देवपरिषेति निगद्यते। परिषहोपसर्गाणा निपातेऽपि च क्षमयैव सहते भगवान्। परिषहेष्वापतितेषु स्वाचार एवावस्थाय सहते। तत्र हि स्वाचारमर्यादया प्रतिपक्षतयाद्यमन अप्राप्तानपि तत्प्रतिपक्षे सहनं। उपलक्षणमेतत् क्षमते तितिक्षते अध्यासयतीतिपदाना। एतानि चानुजनारोध

प्रत्यपकाराभावकर्मनिर्जरैकमतित्वेरिति। उपसर्गेषु चापतितेषु न प्रतिपक्षान्वेषणोद्यमो, न च क्रोधकूजनादीति विशेषः। प्रतिमाना भद्रादीना सूक्ष्मरूक्षपुद्गलदत्तदरत्वेन पालनं च भगवतः। देवाना तु कामभोगासक्तत्वात्तथावस्थान परमाश्चर्यावहं। अरतिसहनं तु भगवतः साक्षादग्निदाहादिभावेऽपि न प्रतिपक्षासंयमेहापि बभूव। देवास्तु सर्वथैवासंयमे रता इति तेषामरतिसहत्वं महाश्चर्यकृदिति। धीमत्त्व च यद्यपि देवानां ज्ञानत्रितयवत्त्वादस्त्येव, पर भगवतो मतिश्रुतावधयो विशिष्टतरा एव। अत एव-'अनध्ययनविद्वास' इति प्रवादः। यद्यप्यस्ति भगवतो लोकालोकप्रकाशकसर्वद्रव्यादिज्ञानपटुप्रतिहतानन्त केवलं तथापि नैतद्धीमत्त्वेऽत्राधिक्रियते, छाद्मस्थ्ये तदभावात् सर्वकेवलिसाधारणत्वाच्च। तथा द्रव्यरूपो भगवान्, यथाहि साङ्ख्यादीना द्रव्यवादिना मते द्रव्य त्रिकालीनैरप्याविर्भावतिरो-

भावमापन्नैर्विकारैर्न मिश्र्यते, तथा भगवान् न कदापि
क्तत्वादिविकारानाश्रित इति श्रमणस्य भगवतो महावीर-
स्यैव भगवत्तेति मेनुरमराः। तृतीयोऽवयवश्चात्र महावीर
इति। तत्र वीरत्व त्रिधा शास्त्रकारा दानधर्मयुद्धवीरत्वभेदा-
दामनन्ति। तत्र दानवीरत्वं प्राक् प्रव्रज्यायाः प्रतिदिनं प्रातराशं
यावद्दीनानाथकार्पटिकादिभ्योऽशीतिलक्षयुकोटी संवत्सरं याव-
द्दीयते भगवद्भिः। न च चक्रिवासुदेवादयोऽप्येतावदेवं दातुमीशा
इति दानवीरापेक्षया महावीरः। धर्मवीरत्वे तु शक्रादिष्टधा-
त्रीभिर्लालितः, सहर्षं चतुर्दशस्वप्नद्रष्टृमातृप्रसूतत्वाद्भाव्यय-
मवश्यं चक्रवर्तीति श्रेणिकचण्डप्रद्योतनृपादिभिः पालितः,
समग्रेण राजकुटुम्बेन तदागमनानंतरधनधान्यादियशोवाद-
वृद्ध्या चान्वहमभिनन्दितः, समग्रशक्रश्रेणिसत्कारपात्रीभू-
तोपि ईर्यासमित्यादिषु साध्वाचारेषु रतः, द्रव्यादिष्वप्रति-
बद्धः, ग्रामैकरात्रादिमात्रस्थायी, शङ्खादीनां निरञ्जनतादि-

दृष्टान्तोपमेयः, जीवितमरणाशाभयविप्रमुक्तः, संयमतपोभ्या-
मेवात्मानं भावयन्नस्थात्। अत एव पर्युषणाकल्पे सामा-
न्यसाधुवर्णनमिवार्हतो वीरानगारस्य वर्णनं कृतमवलोक्यते।
युद्धवीरत्वे चानादित आत्मनि निलीयात्मानमेवापकुर्वन्ति
यानि घातिकर्माण्यभ्यन्तरशत्रुरूपाणि, तेषां ज्ञानावरणीया-
दीनां चतुर्णां घातिकर्मणामन्तर्मुहूर्त्तमात्रेण कालेन समूलमुन्मू-
लनं चकारेति त्रिविधेनापि सातिशयेन वीरत्वेन युक्तः।
अमराचलचालनमप्ततालसुरकुब्जीकरणसङ्गमकप्रतिज्ञातिरोधा-
नानि च महावीरत्वनिबन्धनानि प्रागुदितान्येव। न च
वाच्यं प्रागुक्तात् प्रयत्नात् कोऽस्य विशेष इति। तत्रात्मशुद्ध्यै
कृतस्य वीर्यातिशयस्याविवक्षणात्। यावज्जन्मोपग्राहिणां
वेदनीयादीनां घातस्तु केवलात्मवीर्यजन्य एव, यतः घातो-
ऽयोगिनि, न च तत्र मनोवाक्काययोगा इति, परं मोक्षगामिनां
सर्वेषामेतद्भावान्नात्र तद्विवरणमिति। पर्युषणाकल्पकारास्त्वत

श्रीवीरस्य विवाहद्वारमपत्यद्वारं च व्याख्यान्ति, तदपि कथं युक्तं भवेत्? कथङ्कारं च जमालिनिह्नवस्य भगवतो जामातृता श्रीभगवत्यादिसूत्रोक्तता जाघटेत्?, श्रीमद्भिः श्रुतकेवलिभिर्भद्रबाहुभिरेवोद्धृते कल्पसूत्रे 'भारिया जसोया कोडिण्णा गोत्तेणं' इति 'नत्तुई कासवगोत्तेणं' इति च प्रतिपादितो व्यतिकरोपि अवितथतां कथं यायात्?। न ह्येक एव ग्रन्थकृत् तस्मिन्नेवापरत्र वा विरुद्धमर्थमाविर्भावयन् राद्धान्तविरुद्धं वा आप्नुयात् श्लाघां। ततश्च भवत्कल्पितोऽकृतोद्वाहरूपोऽर्थः विशरारुतामागतः। कल्पस्य प्रामाण्यं चाधुनाऽपि लभ्यमानप्राचीनतमशिलालेखोत्कीर्णगणकुलादिसंवाददर्शनतः स्पष्टतरं। न चैवं कोपि दिग्वाससां परम्पराऽविसंवादी कोपि तथाविधो लेखः, अन्यदेतत्। तत्त्वतः कृतोद्वाहो जातापत्यश्च वीरो भगवान् प्राव्राजीत्। वस्तुस्वरूपनिश्चितये एवेदमाख्यायि, अन्यथा कृतोद्वाहा अकृतोद्वाहाश्च जातापत्या अजातापत्याश्चोभयथापि जिनाः प्रव्रज्य शिवं गच्छन्ति तत्र न कोप्युभयेषां विवादः, ऋषभादीनामनेकेषां तथाविधानामुभयेषां स्वीकारात्। टीप्पणीकारस्तु स्वोपलब्धेष्वादर्शेषु 'न य इत्थियाभिसेआ' इति निर्व्याख्यानं द्विथकारं पाठमुपलभ्य विरोधपरिहारायावश्यकहरिभद्रीयवृत्तिं मुद्रयन् पाणिग्रहणराज्याभिषेकोभयरहिततां ज्ञापयन् केषांचिद् एकतरसत्त्वेपि जिनानां सर्वेषामुभयराहित्यं स्पष्टयामास। तथा च श्रीवीरस्य न कृतोद्वाहताऽनेशदिति सुधिया स्वयमभ्यूह्यम्॥ इति श्रीवीरविवाहविचारः॥

## सल्लक्षणानि (३२)

सुशिक्षपरिवारोऽर्च्यो १ विपद्युच्चो २ महापदः ३। न्यायवृत्ति ४ रयाश्चो ५ स्वमित्रोद्धर्ता ६ सदोद्यतः ७॥१॥ व्यवहृतावदाक्षिण्यः ८ द्यूतादिव्यसनोज्झितः ९। स्ववंश-

जातिविख्यात १० आर्हतो नीतिधर्मयोः ११ ॥२॥ अनिन्द्यजीवी १२ निस्पृशोऽरातौ १३ स्वाश्रितवर्धकः १४। अतिथेः पूजको १५ गुह्यगोप्ता १६ योषावशो न य १७ ॥३॥ वचोरक्ष्य १८ ईविश्वास १९ प्रार्थनाभङ्गभीलुकः २० सत्त्ववान २१ स्वीकृतारक्षी २२ द्रव्याद्याक्षेत्रभाववित् २३ ॥४॥ नात्मशंसी २४ गताशोची २५ प्रियपथ्योवितथारक २६। सोत्साहः २७ स्वार्थसंरक्षी २८ दातौ २९ चित्यज्ञ ३० ऊर्जधुक् ३१ ॥५॥ धर्मे धने ऋणच्छेदे रोगेऽग्नौ शत्रुघातने। अविलम्बो ३२ विशेषज्ञो ३३ स्वाधीनो ३४ नान्यभालदृक् ३५ ॥ ६ ॥ धर्मिष्ठोद्धारकः ३६ सर्वहितैषी ३७ लोभराधक ३८ स्निग्धे नानुचितो ३९ नात्युत्सुक ४० परोपकारकः ४१ ॥७॥ रोषतोपफलः ४२ सर्वकलाविज्ञो ४३ गुणादृतः ४४ । आपदं शरणं प्राप्तं रक्षन् ४५ खलेऽनतस्तथा ४६ ॥८॥ स्वात्मन्कुलज्ञातीयदेशसर्वनराङ्गना । प्राता

शक्त्यनुरूपं स्यात् ४७ कृतकरणो ४८ दृढस्मृति ४९ ॥९॥ दम्भज्ञाता ५० विमृश्योक्ता ५१ ऽऽलोच्यकारी ५२ जितेन्द्रियः ५३ । अद्रोहो ५४ दोषविच्छेदी ५५ सद्भावो ५६ नापनुद्दिद ५७ ॥१०॥ धीरो ५८ दृढाशयः ५९ श्राद्धो ६० व्यायामी ६१ स्पष्टवागृजुः ६२-६३। शक्तिमायव्ययादेक्षी ६४ नष्टचर्यः परीक्षणे ६५ ॥११॥ न भीरुर्भयसम्प्राप्तौ ६६ स्तोकद्रव्योऽपि दायकः ६७ नात्यन्तरोषः ६८ स्थानास्थो ६९ नाभियोक्ता ७० नयादरः ७१ ॥१२॥ श्रेष्ठवृत्तो ७२ न गृह्णीयात् श्रुतमात्र ७३ सुसङ्गति ७४। लज्जाबुद्धियुतो ७५ युक्तमेक्षी ७६ नान्यमुखः क्वचित् ॥७७॥ इति सल्लक्षणानि ॥

---

## पर्युषणाप्रभा (३३) [अपूर्णा]

प्रणम्य परमार्हन्त्य-महिम्नोपचितं जिनम् ।

पर्युषणाप्रभां वक्ष्ये, सूत्रतत्त्वार्थदेशिनीम् ॥१॥ पर्युषणाकल्प इत्यस्य कोऽर्थः ?, परि—समन्तात् वसनं पर्युषणा। पूर्वं हि पञ्चरात्र्या यावत् पर्युषणाकल्पो न कर्पितो, न तावत् वस्त्रादिद्रव्यानादानं क्षेत्रान्तरानतिक्रमणं पर्यायवर्षगणना साध्वभिग्रहविशेषाश्च भवन्ति। पर्युषणोपलक्षितः कल्पः पर्युषणाकल्पः। कल्पशब्देन चाचेलक्यादिको दशधा साध्वाचारः। तत्र जीर्णतुच्छवस्त्रत्वात् अन्यथापरिभोगात् सत्यपि वस्त्रे आद्यान्त्यजिनयतीनामचेलकत्वं, शेषाणां तु सचेलत्वं, यतस्ते बहुमूल्यविविधवर्णवस्त्रपरिभोगाः। जिनेन्द्रास्तु चेलेऽसत्येवाचेलकाः।१। औद्देशिके यं कमपि साध्वादिकमाश्रित्याशनादि निष्पाद्यते तत्सर्वेषामाद्यन्त्ययोरकल्प्यं, शेषाणां तु तस्यैवाकल्प्यम्।२। वसतिदायकपिण्डस्तु सर्वतीर्थसाधूनामकल्प्यः।३। मण्डलिकादिनृपपिण्ड आद्यान्त्यसाधूनामकल्प्यः, शेषाणां तु कल्पते।४। यथापर्यायेण सर्वतीर्थेषु परस्परं वन्दनं। आद्यान्त्ययोरुपस्थापनातः पर्यायः, द्वाविंशतेस्तु दीक्षादिनादेव पर्यायः, तेषां छेदोपस्थापनीयस्यैवाभावाद्।५। आद्यान्त्यसाधूनां हिंसाऽसत्यस्तेयमैथुनपरिग्रहविरतेः पञ्च, शेषाणां तु हिंसाऽसत्यस्तेयबहिर्धाविरतेश्चत्वारि व्रतानि।६। पुरुष एव ज्येष्ठः, चिरदीक्षिताभिरपि साध्वीभिः तद्दिनदीक्षितोऽपि साधुर्वन्द्य एव, सर्वेष्वपि तीर्थेषु प्रव्राजनोपस्थापनव्याख्यानादिष्वपि न तासामधिकारः।७। आद्यान्त्यसाधूनामवश्यं दिनरात्रिपक्षचतुर्मासीवत्सरान्तेषु प्रतिक्रमणं, द्वाविंशतेस्तु यदैव दोषापत्तिः।८। ऋषभवीरसाधूनां मासकल्पमर्यादा नियतैव, दुर्भिक्षरोगादिष्वपि संस्तारकपरावर्तादि कार्यम्।९। स्थिरताकरणरूपः पर्युषणाकल्पोऽपि वर्षास्ववश्यंतया आद्यन्तयोः कार्यः।१०। पर्युषणाकल्पे कर्तव्ये कर्षणीयं च दशाश्रुतस्कन्धस्याष्टमाध्ययनमपि, अतः प्रस्तुतं पर्युषणाकल्प इति कथ्यते। सूत्रस्य

चादौ मङ्गलमुच्चार्यैव उद्देशसमुद्देशानुज्ञानुयोगाः कार्या इत्यादौ भावमङ्गलरूपस्य नमस्कारस्य व्याख्या—'नमो अरिहंताणं'ति, अशोकवृक्षः सुरपुष्पवृष्टिर्दिव्यध्वनिश्चामरमासनं च। भामण्डलं दुन्दुभिरातपत्रं, सत्प्रातिहार्याणि जिनेश्वराणाम् ॥१॥ इति प्रातिहार्याष्टकरूपां पूजामर्हन्तीति अर्हन्तः, देवैर्भक्त्या तेषां करणात्, अर्हतां च तत्र रागाभावाच्च वीतरागताक्षतिः। एवं तत्प्रतिमानां पूजायामपि न भोगित्वं, प्राक् भवे विंशत्या स्थानकैरर्हदादिभिर्जिननाम्नो बन्धनात् यत् प्रातिहार्यतीर्थप्रवर्तनादि स्यात्, तच्च धर्मफलमेव। योजनमिते भूभागे जलच्छटादानपुष्पवर्षणस्वर्णरत्नादिप्राकारादिरूपसमवसरणकरणं सर्वकल्याणकमहोत्सवकरणं च। तेषां कर्तृन्दुरन्तुमोदयितुश्च महोदयायैव, जिनपूजायां च इढमानस्य कैवल्यलाभोऽपि, यथा नागकेतोर्जातिस्मरणात् बाल्येऽपि मातृभवचिन्तितं अष्टमं कुर्वतो धरणेन्द्रेण साहाय्यं

कृतं, धनं रक्षितं, स्वहारोऽर्पितः, नाम स्थापितं, नगरघातको व्यन्तरो नष्टः, समासादस्य राज्ञस्य रक्षा जाता, जिनपूजावसरे पुष्पमध्यस्थिततन्दुलसर्पदंशेऽपि अव्यग्रतया भावनासमारोहात् केवलं जातम्। निगमोऽप्येवं शास्त्रे, यदुत—यो यद्गुणं पूजयति ध्यायति च स तद्गुणो भवति। एते च सर्वजगतोऽपि कल्याणैकरसिकाः तत्त्वोपदेशकाः सुगतिमार्गदर्शका मोक्षनिःश्रेयसमार्गप्ररूपकाः कथं न विवेकिना ध्येयाः पूज्याश्च?। समवसरणे स्वर्गमर्त्यपातालेषु तत्प्रतिमा अपि धर्मार्थिभिः पूज्यन्त एव। आगमेऽपि 'वंदणवत्तियाए पूअणवत्तियाए सक्कारवत्तियाए संमाणवत्तियाए बोहिलाभवत्तियाए निरुवसग्गवत्तियाए' इत्यावश्यके, 'हियाए खमाए निस्सेसयाए' इति राजप्रश्नीयादिषु च। श्रावकाणां पूजायामारम्भबुद्धिस्तु साधर्मिकवन्दनादिष्वारम्भबुद्धिवन्मिथ्यात्वजनिकेति। अर्हन्नमस्कारादिफलं च परम्परया सिद्धत्व-

मिति। 'नमो सिद्धाणं'। सकलकर्मक्षयेणानन्तज्ञानदर्शनसुखवीर्यमयेभ्य सिद्धेभ्यो नमोऽस्तु। कर्मान्तरेण जन्माभावात् साद्यनन्तस्थितिमन्तस्ते। वैषयिकसुखस्य दुःखप्रतीकाररूपत्वाद् आत्मस्वरूपबाधनेन पुद्गलरतिकारकत्वात् कटुकविपाकात् अशुभसंस्काराच्च न तत्र भावः। आत्मसुखं तु अनन्तमव्याबाधमस्त्येव। भविष्यत्कालवज्जीवानन्त्यात् सकलकालेनाप्येकनिगोदस्यासङ्ख्यभागस्याप्यमोचनात् न जीवानां भव्यानां व्यवच्छेदशङ्का। शासनाधिप जिनं विनाऽन्ये जिनाः सकलाश्च सिद्धा गुणसंदोहवत्तया साक्षादुपकाराभावेपि पूज्या एव, गुणानामेव पूज्यत्वात्। एष च हेतुरग्रेपि वक्तव्यः। अर्हत्सिद्धानां ज्ञानं पदं चाचार्योपदेशात् विशेषेण, यत. सिद्धानां वाचोऽभावात् अर्हतां चात्मश्लाघाप्रसक्तेर्न स्वमहिमाख्यानं, बीजबुद्धिभिर्गणधरैर्जिनसाक्ष्येण कथनाच्च नानृतत्वशङ्केत्याह-'नमो आयरियाणं'। प्रतिरूपादिपट्त्रिंशद्गुणवद्भ्य. आगमार्थदेशकेभ्यो जिनानुकारिभ्यः शासनधारकेभ्य आचार्येभ्यो नमः। जिनेश्वरप्रतिष्ठितमपि तीर्थमाचार्यैरेव यावच्छासनं नीयते दिश्यते प्रवर्त्यते वर्ध्यते उज्ज्वाल्यते. तृतीयभवे चावश्यं मोक्षगामिन इति कथं न नम्याः ?। सूत्रग्रहणादन्वेवार्थग्रहणं, तच्चोपाध्यायेभ्यः क्वचिच्चाचार्यपदादुपाध्यायपदं, समाधिकाराश्च प्रव्राजनादिषु उपाध्याया आचार्यैरित्याह—'नमो उवज्झायाणं'। द्वादशाङ्गीस्वाध्यायादिपञ्चविंशतिगुणयुतेभ्यः सूत्रदेशकेभ्य उपाध्यायेभ्यो नमः। न चोपाधिकायन्तरा शासनप्रवृत्तिरित्यवश्यं ते नमनीयाः। अर्हदाद्युपदेशेन भव्यानां मोक्षमार्गप्रवृत्तौ साहाय्यकमन्तरा नेष्टसिद्धिः, सामग्र्या एव कार्यजनकत्वात्, साधवश्चोपदेशशिक्षणनोदनादिवैयावृत्त्यनिर्यामणादिभिर्बहूपकारिणः इति सेनेवोपयोगिन इति प्रणमनीया इत्याह—'नमो लोए सव्वसाहूणं'। विहाय गृहवासपाशं मोक्षसाधनपरा

मोक्षमधूनाना साहाय्यकर्त्वात् साधवस्तेभ्यो नमः। अर्हदादीनां समानगुणत्वात् जात्यैव सर्वार्हदादीनां ग्रहणं, अत्र तु तारतम्यभावात् सर्वेति विशेषणं। अर्हदादीनां नियतक्षेत्रवर्त्तित्वात् साधूनां मेरुचूलादिष्वपि गमनात् लोक इति प्रोक्तं। जैने धर्मे हि मुख्यं साध्यं मोक्ष इति तस्य देशकाः, त आप्ताः, तद्विधेयकास्तत्सूत्रशिक्षकाः, साहाय्यकारिणश्च नमस्कृताः। यो हि यं साधयति स तत्साधनान्याद्रियते एव, तत् जैनानामवश्यमेते पञ्च नमस्कार्याः। श्रवणादिना यद्यपि तज्ज्ञानस्योद्भवः स्यात्, परं तद्गुणागारेषु भक्त्यादिना तन्मयतायामेवेति भक्त्याद्यपि मुमुक्षूणामवश्यं कार्यमेवैषां। फलोद्देशेन प्रशंसावत्सूत्रमाह–'एसो पंच नमुक्कारो सव्वपावप्पणासणो' इत्यादिना यत्किञ्चित् पापक्षयः स्यात्, परमेष पञ्चनमस्कारस्य श्रवणस्य तु सर्वपापप्रणाशकः, नाशोऽप्यपुनर्भवतया पापस्येति प्रणाशन इत्युक्त। अनिष्टनाशहेतुतामुक्त्वा इष्टहेतुतादर्शनायाह–'मंगलाणं च सव्वेसिं पढमं हवइ मंगलं'ति, सर्वमङ्गलानामाद्यत्वादेव समग्रे सूत्रारम्भादावेतस्योच्चारणसिद्धिः। चतुर्दशपूर्विणामप्यन्त्याराधना एतदधीनैवेति तेषामप्येष एव सारः। दध्यानयननोदनया दधिभाजनानयनोदनायथैतस्य पाठादर्हदादितन्मार्गश्रद्धानभावात् स्यादेव मोक्षान्तं फलं। ज्ञातं चात्र राजसिंहः सिद्धावटे यथा प्राप्ताः, सुव्रता सूरयः स्थिताः। गुहास्थिताद् धिनेयाप्तु, दमसारान् महात्मनः ॥१॥ पुलिन्द्रमिथुनं भद्रं पपाठाशठमानसम्। नमस्कारं स्मरन्मृत्वा, जातो ना मणिमन्दिरे ॥२॥ राज्ञो राजमृगाङ्कस्य, देव्याः कुक्षिसरोऽन्तरे। मराल इव सिंहेन, स्वप्नेन सूचितो प्रमात् ॥३॥ राजसिंह कलाशाली, सुमतेर्मन्त्रिराजस्य यः। सदा मित्र स सिद्धादेर्गमिष्यत् पद्मपूर्भवात् ॥४॥ पद्मावत्या नृप पुत्र्यादेवी हंसी शुचिप्रभा।

तयोः पुत्रीं युवश्रेणि–मादिनीं प्राग्भवप्रियाम् ॥५॥ श्रुत्वा
स्मृत्वा च प्राग्जातिं गमने प्रवणोऽभवत् । राज्ञा पुलों-
कविज्ञसेरादिष्टश्च गृहे स्थितौ ॥६॥ छायावत् सुमतिं लात्वा,
गच्छन् सुश्राव चैत्यगम् । आर्त्तं स्वरं गतस्तत्र ररक्ष राक्षसा-
न्नरम् ॥ ७ ॥ पलादः स्वपलत्यागात्, तुष्टः साधक-
कल्पनाम् । कृत्वा चिन्तामणिं प्रादाद्, गतो मित्राय तज्जगौ
॥८॥ गत्वा रत्नपुरे रात्नीं, जिनमूर्त्तिं शमोद्धुराम् । प्रसन्ना-
स्यां हेतिशून्यां, रहितां रामयाऽस्तवीत् ॥९॥ सौवर्ण-
चैत्यकृत्पश्चेऽवोचत्तदर्चको यथा । यशोभद्रेण तनूजः, शिक्षितो
न्यसनोच्छिदे ॥१०॥ परमेष्ठिनमस्कारं, निर्धनः स त्रिद-
ण्डिनम् । श्रितः कृष्णचतुर्दश्यां, श्मशाने सशवो ययौ ॥११॥
भीतः शवपदाभ्यङ्गे, नमस्कारं स्मृतिं व्यधात् । त्रिदण्डि-
मन्त्रवीर्येणोत्थितं त्रिः शवमापतत् ॥१२॥ विशेषेण नमस्कार–
स्मृतेः क्रुद्धस्त्रिदण्डिनम् । हतवान् स सुरः स्वर्ण–पुरुषोऽ-
भूत् शिवस्य सः ॥१३॥ राज्ञे उक्त्वाऽक्षतेनासौ, दानं
भोगांश्च मन्दिरम् । इदं चक्रे निशम्यातः, पोतनं पुरमागमत्
॥१४॥ अपूर्वं क्षणमीक्षित्वा, पृष्ट आख्यन्नरोऽत्र भोः ।
सुगतस्यात्मजोदूढा, श्रीमती परमार्हती ॥१५॥ मिथ्या-
दृश स्वस्वस्रादिभ्रमिता घातनोद्यतः । न्यधाद् घटे महावेगं,
सर्पं स्रक् तु नमस्कृतेः ॥१६॥ तदुक्तमार्हतं धर्मं, स्वीकृ-
त्यासौ कुटुम्बयुक् । वितेने महमुत्कृष्टं, निशम्येदं जहर्ष
सः ॥१७॥ क्षितिप्रतिष्ठिते प्राप्तो, विलासादियुतं पुरं ।
दृष्ट्वा पृष्टो नरोऽवोचद्, बली राजाऽत्र सद्बलः ॥१८॥
आरक्षेणार्पितं नद्या, आनीतं बीजपूरकम् । आस्वाद्य लोलुपो
घातेऽप्यानीत्यै जनमादिशत् ॥१९॥ वारके जिनदत्तस्या-
र्हन्नमस्कारसंश्रुतेः । व्यन्तरोऽवाप सज्ज्ञानं, फलं प्रैषीच्च
सोऽन्वहम् ॥२०॥ सकलेऽपि पुरे हर्षोऽधुनेति तन्निशम्य
सः । वसन्तपुरमायातोऽद्राक्षीत्सर्वान् नतौ परान् ॥२१॥

ज्ञातं च मित्रश्रेष्ठ्यां, राज्ञी भद्रा रतिप्रभा। तस्या हार मुषित्वाऽदाद्, वेश्यायै चण्डपिङ्गल ॥२२॥ गृहीत्वा त नृपश्चक्रे, शूलाभिन्नं मलिम्लुचम्। स्वनिमित्तां व्यथा ज्ञात्वा, विमुच्यान्यनरान स क्रा ॥२३॥ ग्राहयित्वा नमस्कारं, निदानं कारितस्तदा। प्रेत्याह राजसूनुः स्या, जातो नाम्ना पुरन्दर. ॥२४॥ वेश्याननाच्चिशम्याख्या. स्वा जाति स्मृतवान् सदा। नमस्कारपरो जातो, राजासौ तदनु प्रजा ॥२५॥ नते प्रभावममम-मिति ज्ञात्वा समित्रयुक्। प्रमुदेऽनुभव स्वीय., पुत्रः कस्य न तुष्टये ॥२६॥ ततः क्रमात् स मथुरा. पश्चाधननमभ्यगाम्। मुर्चि स्तेनस्य नत्याप्तौ, प्रवणा वीक्ष्य पृष्टवान् ॥२७॥ अर्चकं स जगौ विद्वो, हुण्डिकः शूलगा लग्नौ। नर्ति श्राग् जिनदत्तास्यात्, अत्यानेच्छया ततः ॥२८॥ स्मरन् भावेन पञ्चत्व, गतः प्राप्तश्च यक्षताम्। निकृत्य पर्वते स्वीय, गुरु व्यमोचयत्प्रभु ॥२९॥

मृत्युभीतो नृपः पौर-पुनश्चैत्यमिद व्यधात्। स्ववृत्तान्तमथादिश्य, पित्राप निर्गतस्ततः ॥३०॥ वने सुप्तं व्यधात् युग्म विद्याधरीयमागतम्। औषधिस्या क्रमात् स्त्रीत्वं, पुंस्त्वं च राजजन्मनः ॥३१॥ गतौ पद्मपुरे चैत्ये, कृतस्त्रीत्वौ निमीलितौ। पुत्रैषिण्या समं रत्न-वत्या स्निग्धा च सा भृशम् ॥३२॥ परीक्ष्य ता निजं रूपं, चक्रतुर्भूपतिस्तयाः। ज्ञात्वोदन्तं महादान-पूर्वं ता दत्तवान मुदा ॥३३॥ आहूयास्थापयद् राज्ये, पिता सूनुं वधूयुतम्। स्वय प्रव्रज्यामादत्त, गुरोः श्रीगुणसागरात् ॥३४॥ ग्लानौ प्रतापसिंह स्व-सूनुं राज्येऽभिषिच्य सः। आराधना व्यधात् सूरेः, पार्श्वे मृत्वा गतो दिवम् ॥३५॥ रत्नवत्यपि तथा मृत्वा, सगता ब्रह्मनाविषे। च्युत्वा क्रमेण तौ सिद्ध-मेष्यतो नतिसंगतौ ॥३६॥ आस्ता भद्र युग्मं, पर नागोऽपि नागेन्द्रता नमस्कारप्रभावादवाप, सेत्स्यति च परत्रेति

सर्वकार्याणामादौ स्मार्य एव पञ्चनमस्कारः। कृतपञ्चनमस्कारः कर्पति कल्पं, ततस्तद्व्याख्या–'तेणं कालेणं' तस्मिन् काले, वर्त्तनापरिणामक्रियापरापरत्वहेतुः सर्वोऽपि कालस्तत्रापि अवसर्पिण्याश्चतुर्थारकप्रान्ते, तत्रापि 'तेणं समएणं' तस्मिन् समये, केवलिमात्रगम्यो हि समय इति सर्वज्ञमूलत्वमस्य, भद्रबाहुस्वामिनस्त्वनुवादकाः। विपलेनापि परः सहस्रान् क्रोशान् शब्दस्य गत्यागती दृष्ट्वा न समयस्याश्रद्धानं, च्यवनस्य सामयिकत्वाच्च समयपर्यन्तानुधावनं। तस्मिन् केवलिदृष्टे समये 'समणे भगवं महावीरे' श्रमणो भगवान् महावीरः 'भाविनि भूतवदुपचार' इति। भयभैरवेष्वचलत्वात् परीषहोपसर्गाणां क्षान्त्या सहनात् प्रतिमानां पालनात् धीमत्त्वात् अरतिरतिसहत्वात् द्रव्यत्वात् वीर्यसम्पन्नत्वाच्च देवैः श्रमणो भगवान् महावीर इति नाम्नः करिष्यमाणत्वात् तथा नाम्ना प्रसिद्धः। पश्चाद्वा सूत्ररचनात्, देवावि तं नमंसंती'तिवचनात् देवकृतेः प्राबल्यात् गुणनिष्पन्ननाम्नो विशेषनिर्जराहेतुत्वाच्च प्रायशः प्रस्तुतनाम्नैव निर्देशस्तत्र। स च भगवान् 'पंचहत्थुत्तरे' हस्तोत्तरासु–'उत्तराफाल्गुनीषु च्यवनादीनां वस्तूनां जातत्वात् पञ्चहस्तोत्तरो, 'हुत्था' अभवत्, 'तंजहा' तद्यथा 'उत्तराहिं चुए चइत्ता गब्भं वक्कंते' उत्तराफाल्गुनीषु देवलोकाच्च्युतः च्युत्वा च देवानन्दागर्भे उत्पन्नः। ( अपूर्णा )

---

## ईर्याद्वापञ्चाशिका (३४)

नमिउ नयनागिंदं, नाभेयं सिद्धसाणुठियरूवं। खरयरमुणिजयसोमं, इरियावहियाइ सासेमि ॥१॥ देसेण जइवि गिहिणं, सामइयं इत्तरं किय तहवि। न लवन्ति पंडिया इह, निरत्थयत्ता असुत्तुत्ता ॥२॥ तुब्भत्तो तुहऽवत्तं, विसेसवयणिज्जपहसमोयारी। अणवज्जजोगसेवणनिसेहमीहेइ साम-

इए ॥३॥ सावज्जजोगविरती, अणवज्जासेवणं तु सामाइयं। आगममयं न घडइ, तुह भत्तो तेण तंपि तहा ॥४॥ पुव्वापज्जं कप्पइ कप्पियकम्मो(प्पो)वमागमपसाहो। अणजुज्जंतं सुत्ते गाढग्गहग्गल्लियपरमत्थो ॥५॥ आवस्सयचित्तिमुहे, साहुसमीवे पुरा कयस्स विही। सामाइयस्स जो त साहसि किं चिंतिया पुव्वं ॥६॥ आह ततो एताए गता विहीए त्ति फुडं स सत्थंमि। अन्नं च साहुपाढा भिण्णो पाढो-त्ति निद्दिसइ ॥७॥ तिविहेण नमिऊणं साहू पच्छा करेइ सामइय। पज्जुवासामि अत पाढ पढिऊण इति वुत्त ॥८॥ न्चुित्ता आवस्सगपमुहे सत्थंमि पुव्वकालेण। सामाइयस्स किरिया सुत्तुच्चारेण संजुत्ता ॥९॥ न य कत्थइ सामइए सबद्धा भासिया तहिं इरिया। ज तउ पच्छा इयाइ-सद्दपारंभिया भणिया ॥१०॥ इरिया पढमा गुरुणो वंदणहेउं तह पढणहेउं। आणंतरियं तस्सेव सव्वत्थवि दीसए समक्खं ॥११॥ सपुण्णा सामाइय किरिया चेईयवंदणा मज्झे। वसहीए उ पमज्जणमुग्गहियं जं रओहरणं ॥१२॥ सामायारिविसेसो जइ ते सामइएण संबद्धा। इरियत्ति किं असग्गहु कत्थवि गंथमनिलदुं ॥१३॥ अणवज्जजोगसेवणरूवा इरिया जई य सा पच्छा। तो सव्वनिरइयोसहविहीइ किं कीरए पुव्विं ? ॥१४॥ आवस्सगाइवयणं न य सामाइयविहाणसंबद्धं। इरियादसकालियमहानिसीहाण तं फज्जं ॥१५॥ वित्तीए उत्तरज्झाण आयरिया सातिसूरिणो आहू। चउवीसत्थयपढणं सामाइयकरणओ पुव्व ॥१६॥ आवस्सयाहिगारा न य तं साहूणमुद्दिसिय भणियं। फुडभणियंपि न मन्नसि पुव्विं इरियापडिक्कमणं ॥१७॥ पुव्विं इरियाऽभावे न सुद्धभिरीयत्ति आह वित्तिकरो (हरिभद्दो)। इरियापडिक्कमणे फलमिह वयणं महानिसीहे ॥१८॥ सामन्नविसेसत्तं उस्सग्गववायया य नहि घणा।

तहाऽपरिहारा तव्वयणुद्देसनिच्चलया ॥१९॥ नय कत्थइ सामाइयमित्तबद्धेरिया फुडं कहिया। न य फलसुद्धिसमत्थ- णमंसेण वि किं विरुद्धवओ ॥२०॥ सामइयं किं चेरिय- पुव्वं जं गच्छवासिणा विहियं। तं बहुमयं च जइ ते पगरणकरणं पओमहणं ॥२१॥ अहिगारिविसेसाओ सुत्तं जं तिरियजाइणोऽणेगे। ण्हाणाइ विणा पडिमं जिणिंदचं- दाण पूयंति ॥२२॥ अन्नेण विहियमुवहाणेसु उवजीवइ जणो सव्वो। अन्नह वंदणहीणो सव्वो ते पुव्वविहियविही ॥२३॥ नवकारुवहाणे वा न देववंदण उस्सग्गपमुहविही। तद्दिणवो- हियवइणा कहं व आवस्सयाइविही ॥२४॥ न य कोवि तुमं हिच्चा खरयर ? सामाइयं विणा इरियं। कुणइ तओ तं सम्मं वियार सुत्ताण परमत्थं ॥२५॥ जं वुच्चइ गहगत्थेण इरि- याणुत्तत्ति तं महच्छरियं। जं आवस्सयविहिएणुत्ता पडिलेह- पमज्जणए ॥२६॥ अत्थो गमणनिवित्ती इरियाए नेव तेणुवा- लंभो। गिहिनदियाणुगारी विसेसविसया हि तव्वाया ॥२७॥ मन्नइ मणीसिणुत्तं सीसेणं गुरुवओ समग्घविय। तेणऽणुओगो दिट्ठो न सो पुरा गुरुकओ जम्हा ॥२८॥ इरियं पडिक्क- मियत्ति वयणं वंदणपढणपडिवद्धं। पुव्वुत्तरकिरियाओ सामइयं पुण्णकिरियं तु ॥२९॥ सव्वत्थ साहुमूले पोसह- सालाए वा विहेयव्वा। इरियत्ति सत्थवक्कं तं किं सामाइयं विहडे ? ॥३०॥ सक्खं चेइयवदणमिरियारहियं नमुत्थुणं- ति वओ। दट्ठुणुक्किट्ठं तंमि सेति किमजुत्तमरिहाणं ॥३१॥ वंदणसज्झायट्ठोऽऽवस्सयपभिईसु ईरिया इरिया। न मिहो तेण विरोहो लेसेणेक्केण विहियाणं ॥३२॥ सामाइयस्स पाढो इरियापुव्वुत्ति जइ न किं करणं। पाढो तस्सत्ति जइ सो विणेरियं णेव सो कप्पो ॥३३॥ आयारपईवाइसु खरयरव- यणस्स दंसणं जं तं। उवटंभेत्ता नेयं सत्थे वेयाइवयणं व ॥३४॥ गणहरसड्ढसईयं वयणं तुब्भच्चएहिं जं लत्तं। तद्दं-

सणभा कुदो समुदाआ गालिपउणा ते ॥३५॥ मुणिसुंदर गणवइमुह आयरिया जिणपडिमपूयाए। रोहगमणतससार जग फुडतया बिंति ॥३६॥ किं जाव य जिणदत्ता जाओ ताव रयससला वणिया। अणियपक्काले जाया नेव य पडिमा न किं दिव्वा ॥३७॥ अन्ने आयरिया वा वियक्खणा साम णाणुगा या णो। जिणवल्लभकल्लाणगछाक व निसिद्धमेयंपि ॥३८॥ मिच्छेहिंता रक्खणमसक्कमज्ञाण भावि उ गुरुणा। लाभा उवगरणाणं पव्वजतीण वाहुल्ला ॥३९॥ तक्कालमेत्त मुत्तो जुगइपवज्ञानिसेह तप्पभवा। न पराभवाऽस्थ गच्छे विक्कमपुरियभग-छव्व ॥४०॥ जिणचद्णामधारी गेहेणदित्त मापरतो उ। मजउं जं जिणवल्लहु करेइ त कुच्चपुरिज्ज ॥४१॥ न य कत्थइ गथेसु पभावया सूरिणा अभयदेवा। खरतर गच्छं आहू णई जिणदत्तक्कयमेय ॥४२॥ पट्टावलीइ पाढा पडिक्कमणदीवियाइ सह पाढा। जिणचद्जागधारेहि न किं

परावत्तिओ मोहा ? ॥४३॥ न य खरयरुत्ति णामं पुव्वि वारससईइ कत्थवि य। न य साइ सहसवरिसे पत्तणे दुल्ल भाऽवि निरो ॥४४॥ सगतीसहिएक्कारससयंमि जिणवल्लहस्स धरमत्तो। णेमिकुमारो ल्हिति तगच्छं कुच्चपुरिज्ज ॥४५॥ न य जिणवल्लभगणिणा सगथे खरतरत्तमक्खाय। अइखरजम्मं को वा अल्लियइ सयमिऽसंतं वा ॥४६॥ तवगण नामं सक्ख कम्मगंथस्स निसीइ आह्रू। सिरिदेविंदायरिया जे तक्कालंमि सहगामी ॥४७॥ न जिणेसरबुद्धिसायर आयरिया खरयरत्तमक्खंति। जिणचंदा जिणभद्दा गुणचंदा अ उवज्झाया ॥४८॥ नाभयदेवायरिया न वद्धमाणा पए ठिया तेसिं। जिणवल्लभजिणदत्ता वि य न अक्खति खरयरय ॥ ४९ ॥ जिणदत्तावच्चेहिं कल्लाणगच्छक्कपमुहअविहीसु। निरएहिं तट्ठावणहेउ सव्वे खरा ठविया ॥५०॥ खरयरनामं सत्थे न संसियं कत्थई महप्पस्स। णामे तयुत्ति तवगुणस

मन्निए सत्थनिउत्तं ॥५१॥ एयं वत्थुनिरूवणहेउं गामंमि
घेटिए रइयं। आणंदेण महोदयतवोगणोदयमहिच्छेण ॥५२॥
इतीर्याद्वापञ्चाशिका समाप्ता।

## जयसोमसिक्खा (३५)

णमिऊण नट्ठमोहं वीरं सासे खरयरजयसोमं। पोस-
हविहीइ तव्वयणविब्भमं णिरसिउं सुत्ता ॥१॥ जयसोमो
जिणचंदाभिहाणखरयरमुणीसवयणाओ। गच्छकयग्गहगहिओ
विब्भलवेसाणुकरणरई ॥२॥ पुव्वि विहिचरिएहिं पोसह-
किरियं भणेइ चउतिहीसु। अन्नासु अविहिदोसं भणि-
ऊण निसेहए पावा ॥३॥ तत्थुद्दिट्ठा कल्लाणगतिहयो
णेव संमया जेसिं। तेसिं कल्लाणतिहिसु पोसहकिरिया
भवे पावा ॥४॥ जे कल्लाणगतिहियो विंति उद्दिट्ठया
पुणो तेसिं। दरिसे पोसहकिरिया पावा दोण्हं तु किमु
सच्चं ? ॥ ५ ॥ सीलंगायरिएहिं एया चउमासिसंजुया
गहिया। ता अन्नपुण्णिमासुं पोसहकरणं न पुण्णपदं ॥६॥
दंसणनाणचरित्ते तिहयो हरिभदसूरिसंदिट्ठा। तासु चरि-
त्ततिहीओ नियमा आराहए सड्ढो ॥७॥ जह असणाइणि
संते साहु अदाणे वयस्स अइयारो। जह वा संकाइकरणे
सम्मत्ताईणमइयारो ॥८॥ तह अट्ठमाइतिहिसुं पुण्णपोसह-
विहाणविरहेणं। पोसहवयाइयारो विहिचरिए सव्वहिं सिद्धं
॥९॥ एवं न नियमवक्काणिमाणि ता नन्न तिहिसु पडिसेहो।
पोसहकरणे पत्तो नेवं पावाय तक्करणं ॥१०॥ तसत्थभास-
मज्झे वित्तीए पडिवयाइमहिगिब्भ। पोसहकरणमणियमा
अकुव्वंति फुडं तु आयरिया ॥११॥ बारसवएसु उववासे-
क्कासणमाइ पोसहसरूवं। सव्वेसु मयं तुज्झवि किमपव्व-
करणस्स पडिसेहो ? ॥१२॥ किमपव्वे उववासो सरीरस-

कारवज्जण वंभं। अव्वावारो आसवदार तत्तत्थसद्दहण ॥१३॥ विद्धल्लिया वभणिया तुरुक्किमइसेइ इइ कआ सव्वा। आभाणआ तए ज पुण्णिमपक्खिं ठवंतेण ॥१४॥ पुण्णिमदिवसे पक्खी जइ तो किं ताओ तिण्णि अक्खाया। चउमासीपव्वनियया विहियगे सीलसूरीहिं ॥१५॥ नहि सव्वामावासा महरक्खणगवइं तआ पक्खी। जइ न चउद्दसिदिवसे सड्ढाणं तो न तप्पोसो ॥१६॥ अण्णदिण पोसहस्स वखेवे पज्जोसणविहाणेऽवि। पोसहकरणे पाव तत्तगाथेहिं रथुत्ती ॥१७॥ खुरियपवत्तीए अणुसरणे पक्खियस्स नणु पक्खी। राउहिट्ठतिहते पक्खता णेर सज्झाए ॥१८॥ दिवसस्स य राईए वासस्स य अंतिमे हि नणु भागे। पडिक्कमणा कायव्वा देसियराईपव-च्छरिया ॥१९॥ न य पक्खिवण्ण चउद्दसी वण्णिया कहिंवि सत्थे। परिहारो दाण्हमेर पक्खी त्ति चोद्दसी णेर ॥२०॥ पचासगस्स वयण पचदसी चोद्दसित्ति तं णेव। पडिक्कमणत्थ जुत्तं अभिग्गहे ज न वच्छरिय ॥२१॥ आयरिएहिं सद्धिं न सिया वसही सिया तओ उभय। अइरित्ता लोयभिग्गहकरणे तिहिदुगे पाढो ॥२२॥ किमभयदेवा आयरण न य मन्नंति पक्खिए जइ ते। मन्नति तो तिहिदुगं किं न सरूप्पणा सेया ॥२३॥ तित्थागालियनयण पक्खियदियहमि चउविहो सघो। गच्छविसेसे रूढ चउमासिम्मि य पक्खियय ॥२४॥ एव च तिण्णि चउमासियाणि पुव्वि कया उ रागासु? आगमनयणाऽऽइण्णा चउद्दसीपक्खि सयलस्स ॥२५॥ जयसोमा सगणगाहगहगत्थो निविहसत्थाणं। पाढा कयमजायादसीलि रह वियाणाइ ॥२६॥ अवयरण सव्वत्थ वि रयमज्जायत्थमुहयमवि नेरखे। जयसोमो रविसरिसं वहमिहरा नेइ किड्काल ॥२७॥ किं न तहिं चिय दिट्ठ जावज्जीवाणुव्वयाणित्ति। दिट्ठ धारणकालो न

करणकालोत्ति किं न मयं ॥२८॥ किं चेमे सत्थयारा मुक्खा दिट्ठीइ तस्स जं वक्खा। पव्वत्ति लहुयसद्दे आहु पइणिययदिवसत्ति ॥२९॥ किंचन्नं सव्वत्थ वि वक्खाणमि णं फुडं कयं दिट्ठं। पइणिययदिवसपइदिवसाण किं तत्थ सूरिकयं ॥३०॥ एगदिवसंमि बहुसो जं किज्जइ पइदिण-किया ताओ। एगदिणंमि उ एक्कसिं पइणिययदिवसकिई सा उ ॥३१॥ संतेवि फुडं एवं वक्खाणे पव्व अत्थकरणत्थं। खरयरखराण दिट्ठी वट्टइ णेवावरेसिं तु ॥३२॥ किंचन्नं पव्वेसुं समत्थपोसहकरणमुदयकरं। अतिहीण संविभागो पव्वियरे किं सुहासुहओ? ॥३३॥ चुण्णीए वित्तीए नियमा-नियमा निदंसिया सक्खं। पारणए दाऊणं भोयणमुवदंसियं नियमा ॥३४॥ अन्नेसु पुण दिणेसु दाउं पारेइ पारिउं देइ। एवं सव्वदिणेसुं खाअं अतिहीण दाणवयं ॥३५॥ एव न पव्वनियमो न य पव्वुत्तरदिणस्स नियमो य। अतिहीण संविभागे किमन्नहा दाणमणुदियहं ॥३६॥ तत्तत्थो पुण एत्थं दाणनियमो भवे दिवसबद्धो। पडिनियदिवसकज्जं तेणुइयं सत्थगारेहिं ॥३७॥ एवं न पव्वसद्दस्स न पडि-नियओ दिणो हवे वत्ता। दिणसंबद्धो किंतु पडिनियय-दिवसस्सहो अत्था ॥३८॥ सामइए देसावगासिए य एवं निसेहु पत्तट्ठो। पडिनिययदिणस्स जओ मुहुत्तपहराइमाणा ते ॥३९॥ इत्तोच्चिय सामइए पोसहजुत्ते न जावनियमत्ति। पाढो कड्ढइ किंतु जावपोसंति सव्वेसिं ॥४०॥ पोसहपच्च-क्खाणे अहो य रत्ती य उभयमाणजुओ। पाढो न य णेगदिव-सपोसहवयमुच्चए गच्छे ॥४१॥ पडिमड्ढियसड्ढाणं न पोसहो पव्वियरदियहेसु। इत्तो चे पडिसेहोऽन्नेसिं तो किं न बंभेवि ॥४२॥ आवस्सयपमुहेसु भणिओ सव्वोत्ति दिवसराइ-मिओ। जं पोसहोत्ति सो माणमेइ न दिणदुगाइमयं ॥४३॥ जं नंदयारमाई अट्ठमभत्तेण पोसहं सत्थे। अकरिंसु तत्थ अट्ठमभत्तेण विसेसिओ पोसो ॥४४॥ अट्ठमिचउद्दसाई-भणणं तप्पव्वनियमकहणाय। न य अट्ठमीचउद्दसिमिलिया

कणाि समवइ ॥४५॥ पव्वुत्तरादियहंमि सड्ढो पारेउमीहए पोसं। आण्से कि साहू भणेइ पारेसु त नियमा ॥४६॥ उस्सग्गाइविहीए नेगाण्सा गुरूण पारणए। इत्थ तुह सावज्जे नियमाणुमईयकरण च ॥४७॥ न य कत्थइ गीएहिं सविभेहिं निवारिआऽपव्वे। पोसहविही विसेसा विहिओऽस्तमासु वि तिहीसु ॥४८॥ अट्ठमिपमुहतिहीओ पढम लविउण पुणो वि उद्दिट्ठा। कल्लाणत्था गहिया पुणो वि उवहाणसंजुत्ता ॥४९॥ न य कत्थइ तुह इट्ठा एया तिहओ गीएहिं परिगणिया। न य परिगणणाभावे हवइ णियमा णया धारा ॥५०॥ न य कत्थइ छेयसु अपव्वपोसहविहाणपच्छित्तं। निद्दिट्ठ सइ एवं निसेहण मिच्छरूवं तु ॥५१॥ जइवि य पडिणियमत्था दिणवड्ढा दंसिओ जओ नियओ। दिवसो तत्थत्ति न पुणो पव्व अत्थो भवे तस्स ॥५२॥ जइ पुण सोणुमओ ते व्यग्गहातो न पव्वादियहेसु। सामाइयदेसनया हवति कइयावि कायव्वा ॥५३॥ जं आवस्सय-

पमुहे तेसिं पडिणियय दिवसपडिसेहो। पइदिणकत्तव्वा ते कहिया न पडिणिययदिवसत्ति ॥ ५४ ॥ पइदिणकत्तव्वस्स उ अत्थो तत्थेन दंसिओ सम्मं। उज्झारिज्जति पुणो पुणो न तहा परे दिवसे ॥५५॥ पइदिणपडिनियपडिणा विरुद्धअत्था मया दुवे सद्दा। पइणियमत्थो पव्व जइ पइदिणसद्दु पच्चियरे ॥५६॥ अट्ठमपोसहगहणे पव्व म्यामन्नओ विनिद्दिट्ठं। पव्वाणं नहि तितयं न य पव्वेगुत्ति कत्थवि य ॥५७॥ भत्तपरिण्णाओऽवि य सत्थे पोसहतया समक्खाओ। सो ते मआ अपव्वे कंभाइहिं किमरुद्ध ? ॥५८॥ पच्चक्खाण पढमे दिवसे जइ छट्ठमाइ ते न मय। पोसहसाऽवसे अट्ठमभत्तग्गहो कह णु ? ॥५९॥ कोडीसहिए अट्ठमकोडीमिलण सुए समक्खायं। एवं तंपि न मिलइ गहपरिणामाण भिन्नत्तं ॥६०॥ निसं तु छट्ठकामी अट्ठमगहणं करेइ इह दट्ठं। जो विब्भमो तवस्सी गइइह तं न उ तइयदिवसे ॥६१॥ पच्चक्खाण णागयकालेण सव्वसत्थप-

रिसिद्धं । तं तुह अईयविसयं छट्ठाई जइ त्रियाइदिणे ॥६२॥
तव उस्सग्गे चउतीसभत्तपज्जंतचिंतणं दट्ठुं । मन्नसु पच्चक्खाणं
छट्ठाईणं पढमदियहे ॥६३॥ सामायारिपवुत्तं पाणगसुत्तं
विरोहमावहइ । न उ जं चउमासीए तयभिग्गहवं पढमदि-
यहे ॥६४॥ पियइणुतत्तत्र पाणं किमजुत्तं परं परं सुद्धं ।
भत्तपच्चक्खाई ज्जं वियडं पियइ पढमाओ ॥६५॥ पढमवि-
इयाइ जुत्ता एगबिआई चउत्थछट्ठाई । छम्मासियउस्सग्गे
तवंमि भिन्ने विसमणरो ॥६६॥ अइयस्स निंदणं संवरो य
पडुपन्नकालिओ एस्स । होइ य पच्चक्खाणं कहमेगाइयदिणे-
ऽईए ॥६७॥ चाउमासिए य वरिसे छट्ठट्ठमकरणमेगदि-
यहंमि । न वि चे पच्चक्खाणं दुगाइदिवसाण होइ समं
॥६८॥ छट्ठट्ठमाइभंगे पच्छित्तं णेव हुज्ज कइयावि । गामा-
भावे सीमा रुक्खाभावे य णो साहा ॥६९॥ किंचाभयदे-
वसूरी खरयरएहिं मओ सए गच्छे। चोत्थाईणं अत्थे चउत्थ:
छट्ठं तु भत्ताणं ॥७०॥ चायं वयंति पयडं सयंमि विइयंमि
पढमउद्देसे । छट्ठाइ पइण्णाए विणा ण छट्ठाइ अंतकखा ॥७१॥

इतिसिरिजयसोमसिक्खा॥

## दुष्प्रातिकारविचारः (३६)

गर्भस्थितो यो जननीकृपायै, निरेजनोऽस्थात् क्षणमात्त
बोधः (करणं निगुह्य) । मातु(पितुः) विषादे कृतवान्प्रतिज्ञां-
गृहोपणे वीरविभुर्यजे(यात्)तम् ॥१॥ इष्टं समैः सुखं पूर्णं,
दुःखलेशाकलङ्कितं । गतेच्छं तन्न निर्वाणा-दन्यत्रेत्यब्रुवन् जिनाः
॥२॥ निर्वृतिर्वैक्रियाङ्गे न, नौदारिकमयोनिजं । न सम्मूः
र्च्छनजं चालम्भविष्णु मोक्षसाधने ॥३॥ ऋते मातुर्गर्भ-
जानां, जनिर्जातु न जायते । नाजातस्य ध्रवाध्वा:
सिस्तां विनापवृणक्ति कः ॥४॥ यद्यपीह भवे पूर्वं, मानुष्यं

नृभिर्र्जितम्। दानकथया गुणैर्मध्यैर्बभ्रद्भिर्मानुपायुषम्। ॥५॥ तथापि न फलन्तीह, कर्माणि साधनैर्विना। अन्तरा जननीं तातं, साधनं न नृजन्मनि ॥६॥ मातृत्रीणि पितुस्त्रीणि, स्मृतान्यङ्गानि वाङ्मये। मुख्यानि तानि कायेऽस्मिन्, ध्रियन्ते च भवावधि ॥७॥ यथोपदेशः सूरीणा–मागमो गणधारिणा। तीर्थं तीर्थङ्कराणां च, निमित्तं मोक्षगामिनाम् ॥८॥ तथैवेदं वपुर्यावत्, मोक्षहेतुः क्षयेऽहसां। मातुः पितुः प्रसक्तिस्तस्य सामान्या जिनादिवत् ॥९॥ अतश्चरणचर्यार्थं–मपीष्टानुमतिस्तयोः। अन्यथात्महिते साध्येऽनुमत्या किं प्रयोजनम्? ॥१०॥ पारणे जिनचैत्यस्या–भिसर्पेपि च तन्मतं। स्यात्तस्यैव महादान–माभ्यां योऽनुमतो भवेत् ॥११॥ श्रद्धानज्ञानचरण–रूपरत्नत्रयास्पदम्। जातोपि तद्भमस्यो नाभिव्यक्तो हेतुरत्र भो! ॥१२॥ रत्नाधिकोपि नो पुत्रो, वन्द्यस्तेषां विरागिणा। मोक्षाङ्गे विनये दृष्टा, धर्मं कस्तांश्च पूजयेत् ॥१३॥ न च योऽध्यक्षसिद्धां ना मन्येतोपकृतिं भुवि। मात्रादेः स कथं सूरिमुख्येषु विनयी भवेत्? ॥१४॥ अत एव जिनो वीरः, पितृद्वेगनिरस्तये। गृहे दीक्षामुपेक्ष्यास्थादष्टाविंशतिं वत्सरीम् (रान्) ॥१५॥ त्याज्या च सा परिव्रज्या, या तदाज्ञान्विता भवेत्। पूर्णा कृतज्ञता तस्य, स एव धर्मभाजनम् ॥१६॥ यस्तु न विनयं धत्ते, तेषु गेहेषु संवसन्। स दीक्षितो विरक्तो वा, न स्यात् निःश्रेयसास्पदम् ॥१७॥ त्रिसन्ध्यं यो नमस्येतान्, पोषयेच्च यथाविधि। युञ्जित विनयं तत्र, मत्वा पूजास्पदं महत् ॥१८॥ यो गार्हस्थ्येऽपि नैव स्यात्, स व्रतेयूथतोपि हि। शङ्कनीयो भवेत् साधोर्विनये साध्यसाधके ॥१९॥ सार्धं गृहीतदीक्षाणां, त्रिभिर्यं उपस्थापने। तत्र तोक्त प्रथमं स्थाप्यश्चेद् यथा मन्यते नरत् ॥२०॥ यत्तु मोक्तं क्वचिद् विज्ञैः,

शास्त्रेषु त्यजनं तयोः। ग्लानौषधीयदृष्टान्ताच्चरित्रेष्वपि
केषुचित् ॥२१॥ तत्सर्वं ममतामूढ–मातापित्रोस्त्वाधने।
स्वीकृत्य विषमावस्थां, लोकोत्तरपथादृतिं ॥२२॥ नैव-
मेव च तत्त्यागस्तत्रापि सूरिभिर्मतः। किन्तूपाये कृतेऽबोधे,
निर्वाहे स्वस्थतान्विते ॥२३॥ चरित्रेषु द्विधा दीक्षादातारो-
ऽत्र जिनेतरान्। आद्या औषधवज्ज्ञास्तद्रोगेष्विवेह कर्मसु
॥२४॥ तदालम्बनमन्येषां, न तेऽर्वाग्दृष्टिसंयुताम्। परे-
ष्यतीन्द्रियज्ञानाः, प्राग्वन् नान्यावलम्बनम् ॥२५॥ तथावि-
धास्तथाकार्युर्येन्ये तन्नावलम्बनं। न च कुत्रापि तस्या-
गस्तृणवच्छास्त्रसम्मतः ॥२६॥ आलम्ब्य तीर्थकृज्ज्ञातं तद्व-
चः स्वःशिवप्रदं। आचारं च मुनीन्द्राणां तत्पूजाप्रयतो न कः?
॥२७॥ दुष्प्रतीकारिताम्नाता, तयोर्गणभृताऽऽगमे। ततस्त-
योरवज्ञाता, स्यात्कथं सूत्रसाधकः ॥२८॥ न चर्त्ते साधनं
शास्त्रा–दपवर्गाध्वनीष्यते। तद् गृहस्थैः परं पूजास्थानं, लोक्यौ

सदामुकौ ॥२९॥ न च यद्दीक्षितैर्वन्द्यौ, सेव्यौ वा तत्र
कारणं। असंयतत्वानुमतिः, प्राग्निषिद्धा च सा त्रिधा ॥३०॥
जनु·फलं प्रतिज्ञातपालनं निखिलस्य यत्। प्रतिज्ञापि च
निर्वृत्यै, सर्वसावद्ययोगगा ॥३१॥ सूरिमुख्यास्तु निर्वाण-
साधनाः पापनिर्वृताः। वैयावृत्त्यादि तत्तेषामपवर्गनिबन्ध-
नम् ॥३२॥ अत एव मतौ माता–पितराविह जन्मनि।
दुष्प्रतिकारौ सूरिरिहामुत्रापि तत्तथा ॥३३॥ क्रियेत प्रत्युप-
कारः, सर्वेषां धर्मबोधनात्। ते जातु धर्मभ्रष्टाः स्युर्नान्यदुःखा-
वतारणात् ॥३४॥ त्रिरान्ध्यं नमनान्मातुः, पितुश्च प्रत्यहं पदोः।
लब्ध्वा धर्मार्हतां प्रेत्य, मोदते प्राज्यसौख्यभाक् ॥३५॥ श्रावं
श्रावं हर्षवार्द्धिप्रणीतां, दावं दावं दुर्विनीतत्ववल्लीं। स्मारं स्मारं
मातृपित्रोर्गुणालिं, घस्रे घस्रे पूजयेत्तौ वृषार्थी (परोना) ॥३६॥
नवसार्यां वरपुर्यां कमठासुररोपवह्न्यधिगतविशोधि·।
अनिमिषदर्शनवद्भिर्मयिप्रसन्नश्चिरं महितः ॥३७॥

# श्रमणधर्मसहस्री (३७)

धर्मो मङ्गलमुत्कृष्ट-मित्युक्तं दशकालिके। शय्यम्भवैः सूरिवर्यैस्तत्र धर्मो विचार्यते ॥१॥ मुक्तिर्ज्ञानक्रियाभ्यां स्या-दिति जैनागमे गिरः। तत्र ज्ञानं क्रियाहेतुः, क्रियासाध्यं शिवं यतः ॥२॥ बन्धाभावान्निर्जरायाः, स्यान्मोक्षस्तौ च गम्यिये। संवृतिर्निर्जरा चमे, विरतिर्द्विविधं तपः ॥३॥ अत एव भिदा धर्मे, मताऽहिंसा यमस्तपः। धर्मोऽत्र श्रमणस्योक्त, इत्याहुर्धर्मविद्वरा ॥४॥ संवरो निर्जरा चास्मात्, स्वरूपं साधुरूपिणः। हिताप्तिस्थैर्यसन्धानान्यस्मान् मङ्गलमित्यतः ॥५॥ भावनानां क्रमस्तस्मात्तिसृणां मत आगमे। आश्रवे संवरे चैव, निर्जरायां च सत्तमं ॥६॥ नाशातना भवेद्रोधो, ज्ञानमादौ-ततः क्रिया। यथा तथा न चेद् ध्याता, आश्रवं संवरं कुतः ॥७॥ अनिष्टानामाश्रवाणां, चेदनिष्टिः स्फुरेद्धृदि। चेतस्तदैवा रोधाय संवरोऽन्वेति साम्यतः ॥८॥ यथार्था निर्जरा तेषां, गजस्नानसमा न या। ये नद्धा संवरेणैषा, यथाब्धौ वर्मभृद्दृढः ॥९॥ अत एव मतं शास्त्रे, तपः स्यात्तं तु संवरात्। अहिंसाऽऽश्रवरोधेन, संवरात्मा तु संयमः ॥१०॥ निर्जरा तपसो रूपं, तत्त्रिकं भावनामयम्। आत्मस्वरूपसंपूर्णा-मव्याबाधपदार्पकम् ॥११॥ अशुच्यन्ता भावनास्तु, स्युरमेध्योत्करेऽपि च। श्रद्धानेऽप्याश्रवादीनां, यतस्ता न बहिःश्रिता ॥१२॥ अतो निषिद्धमाप्तेशै-रमेध्योत्करजीवग। मुक्तौ न तन्मतिः ॥१३॥ अतो न सिद्धिपर्यन्ता, भावयेल्लोकसंस्थितिम्। बोधेर्दुर्लभता मोक्ष-फला धर्मस्य शस्यताम् ॥१४॥ धर्मसूत्रं सानुबन्धं, यतो तदेवं भावनाष्टकं, नामेध्ये गास्तवं भवेत्। देवे गुरौ तथा धर्मे, स्यात्स्यादि त्रयमिष्यताम् ॥१५॥ तीर्थकृन्नामाहात्म्याज्जिनः ग्यान्ति समापुरः। क्षान्त्यादि दशधा धर्मं, श्रीनृपत्त्वानुकम्पया ॥१६॥ भ्राम्यन्ति जन्तवो भीमे, भवाब्धौ कर्मनोदिताः।

तत्कपायात् क्षयस्तस्मादादौ तस्य प्रगीयते ॥१७॥ विनयश्रम्भनिलौल्य-गुणाः स्युः सज्जनोदितात् । न रोचतेऽद आराणां
वैरं तस्मान्मुखे त्यजेत् ॥१८॥ स एव विरतो वैराद्, भवेद्यः स्यात्परः क्षमी । आदौ धर्मं जिनः ख्याति, क्षान्तिरूपं नृणां
हितम् ॥१९॥ क्रुधो वैरं ततः क्लेशस्तत आज्यादिसम्भवः । भवानुबन्ध्यतो वैरं, तस्मात्क्रोधो भयङ्करः ॥२०॥ अन्य-
वहार्येष्वपि क्रोधः, प्रचरेन्न तथा परे । कपायास्तदसौ सर्व-निग्राह्यो धीमतां मुखे ॥२१॥ बाह्यवस्त्वाश्रितः क्रोधो, माना-
द्यास्तु विचारजाः । तन्निग्राह्यः पुरा क्रोधः, सुनिग्राह्यो यतः सकः ॥२२॥ कर्मणामावलौ तावदादिमा पठिता क्रुधा ।
कपायाणां हतौ शान्तौ, क्रुधः शान्तिः पुरा भवेत् ॥२३॥ सदेशजनसम्बन्धि-वर्गसङ्क्रामिणी क्रुधा । भवान्तरे च स याति,
यथा रावणलक्ष्मणौ ॥२४॥ वैरेण कमठः पार्श्वे,महावीरे च गोपकाः । जीवितान्तकरीं पीडां, न चक्रुः किं क्रुधोद्धताः? ॥२५॥
क्रोधोऽन्यजीवितान्त्येक्षी, न चान्यान्तेन शाम्यति । भवभीतास्ततो जीवा!, जिन आह त्यजन्तु भोः ॥२६॥ रागोक्ष्णि
स्फुरणं घ्राणे, कम्पनं चौष्ठयोर्द्विके । गले शोषो हृदि प्लोष-त्रुटिः कण्ठ्याम्पदोश्चलिः ॥२७॥ गतौ तैक्ष्ण्यं स्वरे चौग्र्यं, चित्ते-
ऽत्याकुलताऽधमा । काये तापोऽशनेऽनिच्छा, पाने न पयसो गिलः ॥२८॥ तापे जीवेऽरुचिः सर्वस्मिन्मात्रादावपीहिते ।
न ह्यग्निर्दग्धुमुद्युक्तो, भेदमीक्षेत कं चन ॥२९॥ न लुब्धानां प्रतिच्छन्दे, न मायिनां न मानिनां । रौद्र्यं यथा क्रुधाऽऽध्मात-
कायानां सर्वसाक्षिकम् ॥३०॥ आदर्शे मुखमीक्षेत, लुब्धो मायी मदाविलः। स्वरूपस्थं विरूपं तु, क्रुद्धः स्वमीक्षते यदि ॥३१॥
तत्स्वादर्शदृशोस्त्याज्यपदवीं याति क्रुद्धता । निस्तृणे वह्निवच्चैष, निर्जने शाम्यति स्वयम् ॥३२॥ व्यापारा इतरेऽप्यस्य,
रुन्ध्युर्बाह्यप्रवर्त्तनं । तत्त्यागोऽस्य भवेत् सौख्यात्तदादौ क्षान्तिरीरिता ॥३३॥ बिभ्यत्याढ्या अपि क्रुद्धाद्, यद्वन्ना-

ग्रापरात् पुनः । मद्रिणोः ख्याता लुब्धाम्नाकल्या भीषणा हि ते ॥३४॥ दग्धा द्वारवती क्रुद्धेनाग्निनाऽहरि
रामिका । द्वैपायनेन यद्याती. हरी रामश्च दक्षिणां ॥३५॥ हस्तिनागपुरं दग्धुं, मम्भूतमुनिग्धतः । क्रोधाग्निना
ज्वलन् पौरैः, क्षमितश्चक्रिणा पुन ॥३६॥ कमठ क्रोधनाऽस्माभिस्पाद्रोपीज्जिनेश्वरम् । आपगाया स्नात
तु, वीरं मद्दक्तुं समुद्यत. ॥३७॥ सुदंष्ट्र' क्रोधनः सिंहः, पूतना शीतद्.ग्वदा । शुल्पाणिःशलाको तु, निक्षेप
गोपतिः क्रुधा ॥३८॥ असम्बद्ध महावीर, दग्धमेतम्न कौशिकः । क्रुद्धा दहन् न वेत्ति, सज्जने दुर्जनेऽपि ॥३०॥
घोषितो द्वालिकः क्रोधाच्चूर्णीभूय सङ्गत । दृष्ट्वा वीरं शाभनाग, ननाशाऽऽशुग्रनाघतः ॥४०॥ तीर्थेशा अपरे
भवतान्, भापयन्ति क्रुदग्निना । दीपनायैन क्रोधस्य, दधु-श्चास्वपरम्पराम् ॥४१॥ महिमा गीयते विष्णोः, कंसदैत्यविनाशतः ।
त्रिपुरारिसया शम्भो, रामस्य रावणान्ततः ॥४२॥ तु स्वदौर्गत्यदायित्य-मीश्वरस्य प्रगीयते । अमुत्र श्वभ्रपानं च, क्रुद्धः गृह्णाति
सर्जति ॥४३॥ इत्येव क्रोधप्राबल्य-महिम्नेश्वमाश्रिताः । तद्वाच्यं सज्जनैरादौ, न क्रोधाशोऽपि सत्पथे ॥४४॥ नास्ता' परे
ततो देवाः, क्रोधवद्युद्धवास्तके । तदेवगुरुधर्माणां, पदं क्षान्तिपरा नरा. ॥४५॥ ऋषय. शापदानेन, भापयन्तोऽपरत्मंसु ।
येतेरस्ते कथ पूज्या, गुरुतापदमियृत्यु ? ॥४६॥ योद्धार्पणभवाणां, क्रोधाग्नाविन्धनात्मनां । नाशतोऽपि भवेद्धर्म, क्षान्तो
देवो गुरुर्नृप ॥४७॥ तत्सद्धर्मं समाख्यन्तोऽवश्य क्षान्ति मनु परां । नाग्नौ भव्यं भवेत्किञ्चित्, पुण्य नदन् क्रुधात्मनि
॥४८॥ ततो धर्मो मतश्चिते, विधेयो यस्य नीतितः । पुसम्तेन पुरा कार्यां, क्षान्तेरात्मनि संश्रितिः ॥४९॥ अष्टादशाघशा-
मानि, तेष्वाद्यं प्राणिहिंसन । अप्रतिसार्यं सर्वंत्र, प्रायो वैरान् क्रुधश्च तन् ॥५०॥ शोपधर्माहंतामाप्तुं, क्रोधं वैरं वधं त्यजेत् ।

आदौ तद्धर्मस्वाख्यायी, दिशेन्नृभ्यः पुरा क्षमाम् ॥५१॥ विकारा देहजाः सङ्गात्तद्वतां प्राक्कृताघतः। भवन्त्यनुपदेशेन, सम-
ग्रेष्वपि जन्तुषु ॥५२॥ धर्मः स्यादात्मसामर्थ्यात्, तत् स्फुरेद् गुरुवाक्यतः। अल्पे ततोऽप्ययुर्धर्मं, गुरवो न हि सर्वगाः ॥५३॥
आयातेऽपि गुरौ धाम, ज्ञायन्ते चेन्न तद्गुणाः। तेषां गीर्षु कथं वाञ्छा, श्रवणाय भवेन्नृणाम् ? ॥५४॥ मानं निहत्य
चेत्तेषा—मुपसर्पेत् पदान् सुधीः। श्रोतुं विनीतरूपः सन्, देशनां धर्ममाप्नुयात् ॥५५॥ स चेवेक्षित श्रुतं धर्मं, यः स्यादादर-
भाक् पुमान्। आख्यातृषु, न मत्तानां, हृदि सोऽंशत आप्यते ॥५६॥ घातान्मानस्य गुणिनां, गुणेषु स्यान्महादरः। ततो-
ऽनुचिन्तनं धर्म्यं, धर्मस्याप्तिस्ततो भवेत् ॥५७॥ क्रोधो व्याहन्ति संसर्गं, धर्मिणां श्रवणं श्रुतं। मानेन हन्यते तस्मा—
दार्जवं धर्ममाश्रयेत् ॥५८॥ संवरो निर्जरा चेति, द्वयं स्वरूपभाग्भवेत्। क्रोधमानहतौ धर्म—माख्यान्त्याप्तिविदांवराः ॥५९॥
तदेतद् द्वयमाम्नातं, द्वेषरूपतया यतः। प्राप्तिं प्राप्तं च हन्यातां, धर्महेतुं श्रुतागमम् ॥६०॥ मानात्साधर्मिकं द्वेष्टि, मानादु-
द्विजते गुरोः। अज्ञातं ज्ञातमाख्याति, नाधीतमपि चागतम् ॥६१॥ जितवांश्चक्रिणं पूर्वं, योधनैः पञ्चभिः पुनः।
सुरासुरनरेन्द्राणां, हतो वाहुवलिर्मदात् ॥ ६२ ॥ विशाखनन्दी राज्यं सत्समृद्धि सकुटुम्बकं। त्यक्त्वा महा-
तपा जातो, यातो मानान्निदानिताम् ॥६३॥ मानाच्छ्रीस्थूलभद्रोऽगाद्वैक्रियं सिंहमात्मनः। भगिनीनां पुरो, नान्त्यां
चतुष्पूर्वीं श्रितोऽर्थतः ॥६४॥ सीतामस्खलिताचारां, रावणो नापर्यद्धरिं। जीवराज्यकुलध्वंस—माप्तो मानाद्विदन् परम्
॥६५॥ श्रुत्वा स्वोत्पत्तिमश्लीलां, मानमाप्तो महेश्वर। लूनशीर्षं व्यधात्किं न, ब्रह्माणं तदुदीरकम् ? ॥६६॥ मानादात्मनि
नासीद्यो, गुणस्तं ख्यापयन् जनान्। क्रुद्धो जिनाय तं जेतुं, किं नागाद् गौतमो गणी ? ॥६७॥ मानात् किं नादिशच्चक्री,

कल्याणेऽकोविदाः पुनः । कर्मण्यखिलकार्योत्केऽनृताख्यानाः शठाः परे ॥ ८५ ॥ कुदेवे रूपमारोप्य, देवतायाः कुसाधुषु । साधुताया अधर्मे च, धर्मस्य ब्रुवते शठाः ॥८६॥ अपलप्य वीतरागं, सर्वज्ञं सर्वदर्शिनं । स्याद्वादाङ्कितत्त्वोक्तिं, वदन्ति मायिनोऽपरान् ॥८७॥ महाव्रतधरान् धीरान् सदा धर्मपरायणान् । शठा विलोप्य सत्साधून, गृहिणां गुरुतां जगुः ॥८८॥ स्वर्णरीर्योर्यथा वेत्ता, हेयोपादेयतां वदेत् । हेयोपादेयताख्यायी, विज्ञः शाठ्येन दुष्यते ॥८९॥ सन्मुखं क्रोधनो हन्ति, मानी धिक्कुरुते स्फुटं । माया प्रच्छन्नघाताढ्या, प्रायो विश्वस्तघातिनी ॥९०॥ मातरं पितरं पुत्रं, स्वसारं पतिमाश्रितं । पत्नीं स्नुषां सम्बन्धाढ्यान्, विश्वस्तान् छलतीप्सितान् ॥९१॥ दुःखं रोहावधि क्रोधान्मानतश्चिन्तनावधि । मायापाशकृतं दुःखं, यावज्जीव सुदुःसहम् ॥९२॥ क्रोधनो घातिनं हन्ति, मान्युत्कृष्टस्थितिं नरं । माय्यर्थाढ्यं च धर्मिष्ठं, हन्तुं धावति सन्ततम् ॥९३॥ क्षणं क्रोधस्य, मानस्य, धातु मार्तं बलिष्ठता । मायाया अर्थसिद्ध्यापि, नान्तोऽतस्तत्परम्परा ॥९४॥ क्रोधान् मानाच्च संस्कारो, नान्यस्योद्भवति स्फुटः । प्रयुक्ता मायिना माया, शतशाखं प्रवर्धते ॥९५॥ प्रणामो नाशकः क्रोधे, सत्क्रिया माननाशनी । मायाया ब्रह्मणाप्यन्तः, शक्यः नैव नरैः किमु ? ॥९६॥ क्रोधो मानश्च सङ्क्रान्तौ, धर्मस्यापि निषेधतः । माया प्राप्तस्य धर्मस्य, नाशं कृत्वाऽधमं सृजेत् ॥९७॥ साधू पीठमहापीठौ, मल्लीजीवो महाबलः । संयमाढ्याः समेऽपीमे, जाताः स्त्रीवेदिनस्ततः ॥९८॥ आचार्याणां गुणांश्चित्ते, चिन्तयांचक्रतुर्द्वयं । संयमे सहगामित्व-मपाचक्रे महाबलः ॥९९॥ युग्मम् ॥ शिक्षां लात्वा यतेताग्रे, क्रोधी मानी च वीर्यतः । मायाराक्षसीग्रस्तस्तु, विश्वस्यांहस्तति व्रजेत् ॥१००॥ दग्धे सम्मूर्च्छिमा तृण्या, स्वल्पं धान्यं शिला-

कुरे। न तृण्णोपभुमौ न, फणस्तद्वच्छठे दृश ॥१०१॥ कदाऽपि गतित्राण, मानिनो गिरि संस्थिति। विश्वेऽपि नास्ति तत्त्राण यन्मायाविनि याज्यते ॥१०२॥ क्रुद्धा मत्त स्फुटा धत्ते, याच सदसि निर्भरा। मायावी तु मृदु वाच-मुक्त्वा हन्त्येव सज्जनान् ॥१०३॥ क्रोधी मानी भवेद्धर्मार्ह, दूर धर्मविदुसमात्। मायी धर्म ध्वजी-कृत्यच्छलेद्देश्या यथाऽभयम् ॥१०४॥ चण्डकोशिकवत् क्रुद्धा, मानी शाहुबलेरिव। प्राप्त धर्मे (कदाचित्) सफलयेन्मायी तं ॥१०६॥ तस्माद्धर्मार्थिना माया, त्यजनीयाऽऽजेरादरात्। ऋजुरेव मतो धर्मी, स्वर्गापवर्गसाधकः ॥१०७॥ क्रोधो धर्मस्य हन्ताऽसि मानो वाग्मिप्रवस्तृता। भगिनीस्वरूपी माया, लोभो लब्ध हत व्यथेत् ॥१०८॥ माण्ड-लिको बली विष्णुश्चक्री देवः सुराधिप। अस्माद्धर्मोऽश्चयेयं द्राक्, चिन्तेति लोभविक्रिया ॥१०९॥ क्रोधेन निहतो धर्मो, मायया वा मदेन च। तद्विपाक दर्शयित्वा, पुनरायाति सिद्धये ॥११०॥ भव्याभव्यैः कृतो धर्मो, गति यच्छेत्परा दिवि। परं भ्रमिमनन्ताना, भवाना शामयेन्न हुप् ॥१११॥ सान्तः क्रोधो मदः सान्तो, मायापि मितसाध्यतः। अमित प्रार्थयन् लोभा, लाभादेव प्रवर्धते ॥११२॥ प्राप्तघाती मतः क्रोधो, मानो माया च देहिभिः। लोभो हन्ति पुरा प्राप्त, तथिदानी च धर्मभाक् ॥११३॥ लोभात्माप्ते धने राज्ये, कुटुम्बे शक्तिसञ्चये। तथा गृह्णाति, ससारे पतो हिण्डेत शाश्वतम् ॥११४॥ अपूर्णः पूर्णतारूपो, लोभो लाभात् प्रवर्धते। विमानान्यपराण्याप्तुं, देवेन्द्र कलहायते ॥११५॥ क्रोधाद्या विनिवर्तन्ते, लब्ध्वा श्रुत्यादिसाधन। अयं तु नूतनरूपेण, तत्राप्याप्नोति संस्थितिम् ॥११६॥ विषयेषु प्रवृत्ताना, क्रोधाद्या

नाशमाप्नुयुः । वर्धते लोभ आश्रित्य, तांश्छायेवापराह्निकी ॥११७॥ स्नेहाद्यांश्छेत्तुमीशाः स्युः, क्रोधादीन् सार्द्रचित्ततः ।
तत्राप्ययं विशेषेण, वृद्धिमेति दुरुद्धरः ॥११८॥ क्रोधाद्याः पात्रमीक्षित्वा-दयं यान्ति न चान्यथा । अयं तु तन्तुजे दण्डे,
पद्मामप्येति सस्थितम् ॥११९॥ सतामपि दुरुच्छेदो, लोभो यद्दशमे गुणे । सूक्ष्मांशेनाप्यनुद्वृत्तः, क्षपकस्यापि
तिष्ठति ॥१२०॥ लोभो मोहे महामल्लो, यदसौ श्रेणिमस्तके । स्थितं मुनीश्वरं क्रुद्ध्वा, गुणमाद्यं परं नयेत् ॥१२१॥
क्षेत्रवास्तुहिरण्यादि, त्यक्त्वापेता मुनीशतां । दमयेत् सुखतस्त्वाद्यान, लोभस्तु धर्मसाधने ॥१२२॥ नतेः क्रुधः शमस्तस्याः,
स्यान्मानस्य समुन्नतिः । नाशोऽस्य वृद्धितस्तस्यां, मायावृद्धिस्त्वमानिकी ॥१२३॥ श्रुताभ्यासेन सा नश्येत् , स्याल्लब्धा-
स्पदता पुनः । लोभस्य तत्कथं छेद्योऽय दुरात्मा विनाश्रितिम् ॥१२४॥ क्रुद्धं मत्तं शठं कुर्यात्स्वी स्वायत्तं क्षणादपि । लोभस्तु
वृद्धिमायाति, तामाश्रित्य तु सर्वशः ॥१२५॥ श्रुतं तपो गुणाः शीलं, समृद्धिं परमां नयेत् । धर्मस्य चेन् मीलेल्लोभममानं
वर्धयेद्ध्रुवम् ॥१२६॥ क्रोधमानौ सशाठ्यौ तु, सति वस्तुनि धावति । सत्स्वसत्स्वभिप्रायं, वध्नीयाल्लोभ ऊर्जितम् ॥१२७॥
अव्यक्ताः क्रोधमानमाया, वाले वृद्धे रुजाऽऽतुरे । लोभस्यैकस्य साम्राज्यं, गर्भारम्भेऽपि यः स्थिरः ॥१२८॥ परपात्राणि
पश्यन्ति, क्रुद्धो मत्तः प्रपञ्चकः । लोभ एकः स्वमाधार-मभिप्रैति निरन्तरम् ॥१२९॥ क्षान्त्या जयेत् क्रुधं मानं, मार्दवेन
प्रपञ्चितां । ऋजुत्वेन त्रयोऽप्येतेऽगदास्तद्भावरोधनात् ॥१३०॥ उदितोऽनुदितो वाऽपि, न लोभो रुध्यते बुधैः । विनाऽऽत्म-
तत्त्वमग्नत्वं, यत् स सर्वपदार्थगः ॥१३१॥ लोभस्यान्तं स एवैति, यः स्यान्मोहाहवे जयी । संसारेऽसुभृतः सर्वे, लोभचक्रि-
वशंवदाः ॥१३२॥ देवपूजादिका धर्मा, अनुष्ठानप्ररोहिणः । कार्यकारणरूपस्तु, कषायाणां जयो वृषे ॥१३३॥ कषायाणां

समुच्छेदाद् गुणस्थानस्य, वर्धनं। पुरोगाना पुनस्तत्र, बन्धादिच्छेदनं पुनः ॥१३४॥ न कषायजिता देवाः, कषायप्रेरको
गुरुः। न कषायमया धर्मो, धर्मस्तेषा जयः पुनः ॥ १३५ ॥ जीवाः कषायिणो हेतुंर्थेत्तेषा कुर्वते पुरः। शरणायागताः
सन्ता, कथं मोक्षमवाप्नुयुः? ॥१३६॥ सुदेवगुरुधर्माणा, चेत्समीहा तनीयसी। शुद्ध्यै तदा श्रये श्रेष्ठान्, निष्कषायानमून्
सुधीः ॥१३७॥ संसारेऽनादिके जीवा, भ्राम्यन्ति कर्मनादिताः। कषायवशतस्ते च, कर्माणूनां ग्रहे रताः ॥१३८॥ कषा-
यकर्मणामेवं, सन्ततिर्गत्वाघना। संसारश्च ततोऽमूना, नित्यो बीजाङ्कुरो यथा ॥१३९॥ योगचाञ्चल्यभृज्जीवः, कर्माणून-
भ्रदेशगान्। आकृष्यात्मनि बध्नाति, संयोगः क्षीरनीरवत् ॥१४०॥ कर्माणूना ग्रहो जातिश्चेति युग्मं प्रयोगजं। यद्योगः
कार्मणश्चिनो, जीवे प्राक्काल्सञ्चितः ॥१४१॥ योगस्यापि भवेद्भेदः, सकषायाकषाययोः। कषायकारकं कर्म, नाकषायो
भवेदसुः ॥१४२॥ न भवान्तरमाधत्ते, निष्कषायस्ततः स्फुटं। सकषायगतो योगा, भवदं कर्म संसजेत् ॥१४३॥ भवमात्म-
गुणाच्छेदं, विधत्ते कर्मणि श्रिते। रसः स्थितिश्च तद्युग्मं, सदा कुर्यात् कषायभाक् ॥१४४॥ मिथ्यात्वाद्या मता नैक-हेत-
वोऽत्र मनीषिभिः। आश्रवे बन्धने ज्ञातो न कषायान् विना तथा ॥१४५॥ कर्मणामणवो जीवे लग्ना नायान्ति बध्यताम्।
अकषाये यथा शुष्के कुड्ये गोलो रजोमयः ॥१४६॥ जन्ममृत्युर्जरा रोगः शोको योगवियोगजः। जन्तूना भ्राम्यता नैते,
दुर्लभाः स्युः पदे पदे ॥१४७॥ चेतना प्राणिना रूपं जडा पुद्गलजाः परे। बद्धस्तै प्राणिति प्राणान्, जीव कर्मवशंवद
॥१४८॥ या शान्तिश्चेतना जीवे, स्फुरेत् साऽक्षादिसम्भवा। तदात्मा पुद्गलायत्तो न स्वतन्त्रो मनागपि ॥१४९॥ पूर्ण
रूपमसौ ज्ञान-मनन्त स्थिरमव्ययम्। विना शिवं न कुत्रापि, परे स्थाने भवेत्क्वचित् ॥१५०॥ पुद्गलैर्वियुतो जीव, स्वभावस्थः

शिवे भवेत्। पुद्गलायत्तताऽशेषे, भवे प्रतिभवं नृणाम् ॥१५१॥ भवे भवेऽमिलज्जन्तुर्ज्ञानं बन्धुसखिव्रजान्। मृत्यौ हित्वा
समं सर्व-मन्वेति जननान्तरम् ॥१५२॥ मोक्तव्यं भवगं सर्वं, यद्दुःखेनार्जितं भवेत्। अर्जितं नैव मोक्तव्यं, जातु भव्यैर्न
मोक्षगैः ॥१५३॥ धर्मस्य द्वे फले सिद्धे, शिवं स्वर्गश्च तत्र तु। स्वर्गः संसाररूपस्तत्, प्राप्यं कृषिपलालवत् ॥१५४॥ आस्तिः
कानां फलं साध्यं, धर्मस्य शिवमिष्यते। तद्द्रष्टा सर्वदर्शी ना-वीतरागस्तथा भवेत् ॥१५५॥ दृष्टे ध्येये तदुत्थान-कारणं
ज्ञातुमर्हति। तन्मोक्षसाधकं धर्मं सर्वज्ञो देष्टुमर्हति ॥१५६॥ जीवे कर्माणुसम्बन्धो, रागद्वेषविभावितः॥ शिवमत्येति स
प्राणी, सर्वज्ञो रागवर्जितः ॥१५७॥ शिवाय क्रियते धर्मः, सकषायो न युज्यते। सोऽतः कषायभेदानां, नाशो धर्मतया
मतः ॥१५८॥ पूर्णज्ञानादिरूपा य-दशरीरा च शाश्वती। मुक्तिस्तत् साधनं तस्या, ज्ञानाद्या एव नेतरे ॥ १५९ ॥
ज्ञानमात्मस्वरूपं यद्बाधितं कर्मभिस्तकत। ज्ञानरूपशिवेप्सूनां, क्षेया तत कर्मसन्ततिः ॥१६०॥ आत्मना कर्मसम्बन्धः,
कषायैरेव जन्यते। तत्कषायाः सदा क्षेप्या, धर्मस्तत्क्षपणामयः ॥१६१॥ पूर्णं धर्मं समाचर्य, पूर्णमापत् फलं स्वयं।
स एव देवतारूपोऽर्घ्यो ध्येयो मान्य एव च ॥१६२॥ मार्गे तदुदिते शैवे, ये प्रयान्त्यपरानपि। गमयन्ति मता धन्या,
गुरवः पूजनास्पदम् ॥१६३॥ मैत्रीभावमयो धर्मो, जयस्ते नहि दृश्यते। कषायाणां कथं वैरानुषङ्गो धर्मसाधने ॥१६४॥
अपराधपरा जीवाः, सर्वे कर्मवशंवदाः। धर्मं धातुं समीहा चेत्, त्याज्यं वैरं कषायजम् ॥१६५॥ तच्चतुर्णां कषायाणां,
जयो धर्मतया मतः। नहि दावानले दीप्ते, रोहन्त्यङ्कुरजातयः ॥ १६६ ॥ विद्यासिद्धौ श्रुतारम्भे, निखिलाभेऽपि
सज्जनाः। प्रयता विघ्ननाशाय, प्राक्शश्वात्सिद्धकामनाः ॥ १६७ ॥ शिवाय धर्ममातन्वन्, सत्याग्रं धर्ममादितः।

कषायाणां जयं कुर्याद्, यत्ते धर्मस्य घातकाः ॥१६८॥ उपदेष्टा स एवार्हो, यः सिद्धिं देशयन् पुरा। विघ्नाशक्षमं पूर्वं,
विधि दिव्याशनात्मने ॥१६९॥ कषाया रोधका धर्मे, जातेऽस्मिन् घातका अमी। धर्मप्सुभिरततोऽवश्यं, कार्यस्तेषां
क्षयः पुरा ॥१७०॥ निरोद्धव्या अनुत्थाना उत्थिता अपि धर्मिभिः। सर्वं क्षान्त्या मृदुत्वेना-र्जवेनासङ्गभावतः ॥१७१॥
निहन्तरि हते वृन्दे, कार्यविघ्नविधायिना। साध्यते साधकैः सिद्धिर्यत्नाभावाग् विरम्यते ॥१७२॥ कषायाणां वधं कृत्वा,
धर्मसाधनविधायिना। सत्याद्यं धर्ममाधातु मुद्यतः स्यान्नरः सुधीः ॥१७३॥ जिनेशैरत एवात्रादिश्य क्षान्त्यादिकान् पुरा। विघ्ना-
भावविधौ दशान्, प्रोक्तो धर्मः सनातनः॥१७४॥ हिंसादिभ्यो यथांहांसि, जायन्ते स्वस्वभावतः। सत्यादिभ्यस्तथा धर्मोऽक्ष-
त्रिमोऽजः सनातनः ॥१७५॥ एवमैश्वर्यमीशस्य, हेतून् यद्बोधयेज्जनान्। पापे पुण्ये भवे मोक्षे, श्रुत्वा भव्यः श्रयेच्छिवम्॥१७६॥
अज्ञातं सेवधिं धाम्नि, दर्शयन् विबुधो नरः। किञ्चिदप्यददानः स्यादुपकारिधुरन्धरः ॥१७७॥ तथात्मन्यात्मरूपं योऽज्ञातं
भव्यान् विनिर्दिशेन्। आप्तः मत्साधनैर्युक्तं, नाशो स कथमीश्वरः? ॥१७८॥ क्रोधाद्युद्भूतरूपाणि, न वचांसि जिनेशिनां। कषाय-
बन्धद्वयं न, नानुबन्धीनि लेशतः ॥१७९॥ वचसो मूलमाख्याता, निर्दोषो गुणवान् स चेत्। तदुक्तानि हि सूक्तानि, परोक्तानि
तु नो तथा॥१८०॥ ज्ञाता(पूर्ण)ज्ञानी पुराऽपेक्ष्यो,यथा ज्ञातं तथा वदन्। यथार्थामाप्ततामेति, तत्सत्यं वदतां वरः ॥१८१॥ ततः
कषायहन्तारः, वीतरागा महाव्रताः। सर्वज्ञास्तत्त्वदेष्टारो, देवा मान्या शिवगमाः ॥१८२॥ सर्वज्ञवीतरागोक्त, यावज्जीवमनुसरन्।
गन्ता मार्गं दर्शयिता, गुरुर्नान्योऽन्यथाविधः ॥१८३॥ सम्यक्त्वज्ञानचारित्र-त्रितयं मोक्षसत्पथः। परमार्थेन चारित्रं, द्वय-
मार्गं तु साधनम् ॥१८४॥ बन्धाभावो निर्जरा च, मोक्षे हेतू द्वयं त्विदं। तपःसंयम इत्युक्तं चारित्रं मोक्षसाधकम् ॥१८५॥

त्रीण्यपीमानि सिद्धौ त–दुपादानानि साधनं। त्रितयं तेन मार्गोऽयं. नाध्वा रुध्येत पत्तने ॥१८६॥ चारित्रं प्रकट तथा,
स्यात्रे स्युर्वीर्ययोगतः। चारित्रमोहनीयस्य, नाशकास्तत्त्ववृत्तितः ॥ १८७ ॥ नाशे चारित्रमोहस्य, त्यागः संसारवर्त्मनः।
अवाप्तकेवलास्त्यागं. गृहिणोऽतो वितन्वते ॥१८८॥ चारित्रपरिणामस्य त्यागः कार्यमनाविलं। महाव्रतानि पश्चातश्चारित्र-
परिणामिनाम् ॥ १८९ ॥ धर्मस्त्यागः संयमोऽपि, चारित्रं मुनितर्पिता। महाव्रतैः समस्तैस्त–दाद्यं वधविवर्जनम्
॥१९०॥ यद्यप्यहिंसारक्षार्थं. शेपाणीति प्रगीयते। आद्यं स्थानं पाप्मनाऽपि. वध एवाङ्गिनां मतः ॥ १९१ ॥
असत्यादीनि जीवानां, बाधाकारीणि देशतः। हिंसा सर्वं भवं ध्वंसेन्न चाग्रे तत्प्रतिक्रिया ॥१९२॥ स्वात्मरक्षापरो
जन्तुर्व्यवहारी च तदितरः। तदहिंसाव्रतं त्वाद्यं, मतं जैनेन्द्रशासने ॥१९३॥ सत्यप्येवं न कोऽप्यत्रा–हिंसायां
विवदेन्नरः। सर्वेपां धर्मनिष्ठाना–महिंसावादवर्जिता ॥१९४॥ के जीवाः को वधः का चा–हिंसा तत्पालनं कथं। फलं
दोपा गुणाः के च, कोऽनुबन्धः परत्र च ॥१९५॥ इत्यादीनां पदार्थानां, चेत्सत्या स्यात्प्ररूपणा। तामाधाय कृताऽ-
हिंसा, फलिनी न पराद्धिर्थेः ॥१९६॥ पण्णां जीवनिकायानां. न श्रद्धा चेत्कथं धरेत्। अहिंसां सर्वजीवानां,
चेत् त्रसेष्वेव जीवता ॥१९७॥ न सम्भवेज्जीवनाशो, न चाक्षादिविनाशनं। वधः किन्तु जीवप्राण-वियोगो वध
आर्थिकः ॥१९८॥ न हिंसाया अभावेन, मताऽहिंसा यतोऽङ्गिनः। नाज्ञाना विकला धर्मं, लभन्ते विरतिं विना
॥१९९॥ नाज्ञानं पुण्यपापानां, बन्धे त्राणं फलेऽपि च। पापं ततो ह्यविरतिर्धर्मो विरतितः पुनः ॥२००॥
अहिंसैषा ततोऽसूनां, वधस्य परिवर्जनात्। पालनाऽऽचारहेतूनामीर्या रजोहरादिभिः ॥२०१॥ पालनायाः फले

ज्ञात, मतायान्ता महर्षय । दाये ब्रह्मसुभूमाद्याः, परत्र शिवसङ्गति ॥२०२॥ सुष्ठु ज्ञान भवेदेषा, भेदाना परतो यच । यदि तथ्यं तदा तथ्या, स्यादहिंसाऽन्यथा न तु ॥२०३॥ संसारमोचका यज्ञे, पशुघातविधायिनः । मास-मक्षा अनाचारा अहिंसा किं न मन्यते ? ॥२०४॥ मुख्या चैवमहिंसाऽपि, हिंसा स्यात्परमार्थतः । मत्यता वाचि याथार्थ्यं च यदा भवेत् ॥२०५॥ तदेव जायते तत्त्वा-दहिंसा स्वःशिवप्रदा । ज्ञानेऽतः सत्यं मज्ञीयते बुधैः ॥२०६॥ लोके यत् सत्यमुद्गीर्णं, तेनैवात्र प्रयोजनं । अतोऽत्र दशधा धर्मे, श्रुतेरिते ॥२०७॥ लोके यत्र मृषा सत्यमिति सञ्ज्ञीयते यत । न व्युत्पन्ना यता बुद्धि-रादौ सत्ये तत्त्वतोऽसत्यमप्येष, सत्यं ब्रूते जनैर्मत । व्यवहारपरो लोक ,सत्य मत्येति लोकतः ॥२०८॥ निर्धनः सत्यं तथागतम् । नाम्ना धनपति नि.स्व-माहाबुद्धि महामतिम् ॥२०९॥ असत्यं तद्विरुद्धार्थं, मिश्रं चोभयरूपकम् ॥२१०॥ लोकोत्तरे मतं नृणा । निरक्षणं न पापाय, यत्र बुद्धिस्तताऽन्यथा ॥२११॥ व्यवहारगतं वाक्यं, व्यवहारकरं निरतिरूपं, न सत्यवदनं पुनः ॥२१२॥ अत एव मतं सद्भिर्द्वितीयं तु महाव्रतम् । मृषोक्ति-शनानि प्राणिनाम् ॥२१३॥ यथोत्पत्तिक्रमो जीवे, मत्यादीना तथा श्रुते । मत्यादीनि मतान्याम्, पञ्च ॥२१४॥ पञ्चगारतयस्तेषा, क्षयादि च गुणक्रमात् । तथापि श्रोतृलोकानु-गुण्यमाश्रित्य सूरिभिः द्वय चतुर्धा वा मान-माख्यात श्रुतसागरे । ज्ञानानामन्तरोऽपि, मानद्विके श्रुते मतः ॥२१५॥ कृता पर्ण-जनमाश्रित्य कीर्तनं । जनो मानं चतुर्धापि, मनुतेऽत्र तथोदितम् ॥२१६॥ अनुयोग-सत्यतमाश्रित । लोको न च्छलना यायाद्वितथं न च युज्यते ॥२१७॥ तथात्र व्यवहार्याणा, वाचा उत्पन्ना उत्पत्स्यन्ते चोत्पद्यन्ते सर्वे

भुवि । कुपथास्ते मृपावाद–मूलाः स्वार्थैकसाधनाः ॥२१८॥ कुदेवाः देवतां स्वेषां, गुरुतां कुत्सिताः पुनः ।
गुरवो गुरुताहीनाः, प्रकाशन्ते मृपोदितात् ॥२१९॥ द्विजाद्याः स्वार्थसिद्ध्यर्थं, कुधर्माणां तु सुधर्मतां । कथयन्तो
जनांश्चित्रं, मुष्णन्त्यात्मोदरम्भराः ॥२२०॥ सर्वमेतन्मृपावाद–प्रभावाज्जायते पुनः । स्थाप्यतेऽप्यनृतां कृत्वा, युक्तिं
मुग्धप्रतारकैः ॥२२१॥ न ज्ञानं स्यादमूर्त्ताना–मात्मादीनां विना विदं । केवलाख्यां ततो तेऽमूनाहुस्ते हि मृपागिरः
॥२२२॥ शब्दो रूपं न गन्धोऽस्ति, रसः स्पर्शोऽपि लेशतः । आत्मन्यतो न सर्वज्ञ–मृते तत्सत्यवादकः ॥२२३॥
आत्मैव ज्ञायते चेन्ना–सर्वज्ञैस्तर्हि तद्गतं । परिणामस्य वैचित्र्यं, जानीते कथमीदृशः ? ॥२२४॥ अज्ञाते परिणामे तु, न
ज्ञानं तत्परावृतेः । तदज्ञाने च बन्धस्य, वृथा वार्ता क्षयस्य च ॥२२५॥ बन्धे मोक्षे न ज्ञानं चेद्, धर्माधर्मकथा वृथा । तत्
सर्वज्ञं विना कोऽपि, स्यान्न तत्त्वार्थसत्यगीः ॥२२६॥ लोकेऽपि पापमुत्कृष्टं, मृपावादोद्भवं मतं । तत्सत्यवचनोक्तीनां,
धर्मत्वं स्यादनाहतम् ॥२२७॥ निषिद्धेष्वन्यपापेषु, चेन्मृपाभाषणादरः । सर्वं निरर्थकं बौद्ध–साधुदृष्टान्ततो मतम् ॥२२८॥
जगत्सर्वं यथाभावं पुण्यतो नातिवर्तते । पुण्यं शुभात्मचित्तेन, तत् पुनः श्रुतिसम्भवम् ॥ २२९ ॥ श्रुतयश्च यथार्थाश्चेद्,
जगद्वस्तुनिरूपिकाः । तदा पुण्यममर्यादं, श्रोतारश्चिन्वते ननु ॥२३०॥ इत्थमालोच्य विद्वद्भि–र्गीयते यत्प्रतिष्ठितं । सत्ये सर्वं
जगल्लोको, यत्पुण्येनानुकूल्यभाक् ॥ २३१ ॥ श्वभ्रादिसंस्थिता जीवाः, पापप्राचुर्यपूरिताः । तेऽपि पूर्वावतारेषु, श्रुतोत्तीर्ण-
क्रियावहाः ॥२३२॥ तदित्थं श्वभ्रलोकोऽपि, श्रुत्यनादरभावतः । समर्ज्य पापप्राग्भारं, तथाभावं प्रपेदिरे ॥ २३३ ॥
श्रुतयश्चेद्यथार्था न, तदुक्ता–नादृतेरघं । न स्यादेवं च न श्वभ्रो, लोकोऽपि सत्यमन्तरा ॥ २३४ ॥ मोक्षोऽप्यनादिकालीन–

॥२५२॥ युगादौ जगदीशेना–वाप्य केवलमुज्ज्वलं ।
पुण्यं पापं वृषो गुरुः । देवो मोक्षो च स्युः सिद्धा, यदि सत्ये प्रतिष्ठिताः
हिताय जगतः सर्वं, सत्यमाविष्कृतं जने ॥२५३॥ पाश्चात्यैः स्वार्थसिद्ध्यर्थ–मशौचैरन्यथा कृतं । अमृतं विषसाङ्गत्यात्, किं न
स्याज्जीवितापहम् ? ॥ २५४ ॥ असर्वज्ञैस्ततो धार्यं, शौचं स्वपरतारकं । शौचं तद्युगेशोक्तं, स्वार्थैर्नमिध्यमाप्यते ॥२५५॥
अन्यैर्गीतं तपः सत्य–मिन्द्रियाणां च निग्रहः । दया स्नानं च शौचत्वे, तत्सत्योक्तिसमाश्रितम् ॥२५६॥
यथाऽऽरोग्याय जन्तूनां, धनाढ्येन दयालुना । कृता रम्याऽऽरोग्यशाला, यावज्जीवं च पालिता ॥२५७॥ सैव
लोभान्धमतिभिः, पाश्चात्यैः शौचमोपिभिः । सकुटुम्बं स्वमुद्दिश्य, ध्रियते जीवनोद्वहे २५८॥ एवं प्रतिष्ठितं
सत्यं, पश्चाज्जातैरधार्मिकैः । शौचबाह्यैर्विपर्यासः क्रियतेऽसत्यसंस्थितैः ॥२५९॥ यथा शौचं गृहस्थानां, व्यापारो
भावतो मतं । पूजाविधौ न्याययुक्तो, न्याय्या पूजा तु नान्यथा ॥२६०॥ एवं यथाश्रुतं सत्यं, पर्षदां स्थाप्यते
पुरः । तच्छौचमन्यथाकारं, व्याख्या शौचबहिष्कृता ॥२६१॥ अत एव पुरा विद्भिः, सङ्घे रीतिः प्रवर्त्तिता ।
तन्मङ्गलं जगच्छ्रेष्ठं, शरणं यज्जिनोदितम् ॥२६२॥ एवं चेत् स्वार्थपङ्कानां, सत्ये मिश्रणमाचरेत् । तथा भावस्य
वैतथ्यान्, नाशौचादवशिष्यते ॥२६३॥ बाह्यं देहादिकं चित्ते, व्यवस्थाप्य पुरोदितं । चेद्विपर्यास्यते लोकः,
किमशौचं ततः परम् ? ॥२६४॥ बाह्यान्यपनयन्तीमेऽ–शौचानि सरिदादयः । असत्यमिश्रणं चित्तं, न ते
शोधयितुं क्षमाः ॥२६५॥ अपनीय यथाऽशौचं, निजाङ्गादपि सम्भवं । शौचमाद्रियते विज्ञैः, सत्यं शौचं
तथा श्रय ॥२६६॥ यश्चाशौचं जिनोक्तीनां, कुर्वन् मुग्धान् प्रणाशयेद् । भावप्राणवियोगेन, तस्येमाः प्रेत्य दुर्लभाः

मुनिभिः सदा । परमं शौचमास्थाय, कथ्या धर्माय देहिनाम् ॥२८३॥ वच एकमपीशोक्तमन्यथा चेद्वदेज्जनः । तथा निह्न-
वकोटि स, गच्छेत् शौचेन वर्जितः ॥२८४॥ गृहस्थाः साधवश्चेति, भोगिनस्त्यागिनो नराः । परं ते शौचहीनास्तु, नैक-
वर्गे पतन्त्यमी ॥२८५॥ अव्यक्ता इति ते ख्यातास्तत एव शिवेऽध्वनि । तत्कृते यत्कृतं तन्न. ग्राह्यं वा. परथापि वा ॥२८६॥
तदेवं सत्यनिर्ग्रन्थैर्यद् दृष्ट्वा केवलदृष्टितः । सत्यं यद्व्याकृतं तच्चे-च्छौचो ब्रूयात्तथाविधम् ॥२८७॥ न चार्जवादयुक्तस्योचितः
शौचानां कदापि हि । तत्प्रमाणीकृतिश्चापि, शुचीनां भ्राजते न हि ॥२८८॥ एवं च सत्य आम्नायः, शुचिभिरेव गीयते ।
विशेषेण यतीन्द्रैस्तद्धारणीयं प्रयत्नतः ॥२८९॥ साधवो यज्ञगज्जन्तून्, दौर्गत्यपातनादरान् । प्रतिबोध्य शिवं मार्ग-मानेतुं
सर्वथोद्यताः ॥२९०॥ अत एव गृहस्थेभ्यः, शौचमेतद्विशिष्यते । तदशौचेन यल्लोक-समूह. पापभाजनम् ॥ २९१ ॥
अत एवोच्यते शास्त्रे, साधूनां वस्तुलोपिनां । स्पष्टा निह्नवता नैषा, गृहस्थानां तु कुत्रचित् ॥२९२॥ श्रावकाणां कथा धर्म्या,
स्यात्कुटुम्बिष्वपि प्रभोः । साधुभ्यो यः श्रुतो मार्ग-स्तस्य रात्रौ निदेशनात् ॥२९३॥ अत एवार्थ्यते सद्भिर्हित्वा चक्रिपदा-
दिकं । श्रावकाणां गृहे दास्यं, यत्तद्दौर्गत्यकृन्नहि ॥२९४॥ तत्रापि शौचमास्थाया-नुवदेन्मार्गमार्हतं । प्रतिक्रम्या ततस्तेषां,
विपरीतप्ररूपणा ॥२९५॥ अन्यतीर्थिकसार्थाय, वदेत्स श्रावकोत्तमः । नैर्ग्रन्थं शासनं ह्यर्थः, परमार्थोऽखिले जने ॥२९६॥
यदस्ति भुवने तस्मा-द्व्यतिरिक्तं समं तु तत् । अनर्थकारकं जन्तो-र्यस्मात्संसारमज्जनम् ॥ २९७ ॥ एतच्छौचं गृहस्थानां,
परमार्थानुसारिणां । प्रभावेनास्य प्राप्नोति, सिद्धिमेष भवाष्टकात् ॥२९८ ॥ अत एवर्षिभिः प्रोक्तं, गृहस्थाः संयमोत्तराः ।
अन्यतीर्थीयभिक्षुभ्यो, न ते मार्गमपि श्रिताः ॥ २९९ ॥ अतः सत्यस्वरूपोऽयं, धर्मः शौचपरिष्कृतः । सततं सेवनीयो य-

दसौ दत्ते शिवश्रियम् ॥३००॥ एव सत्यान्विते धर्म, शौचवाक्येन देशिते। आदेयता तदा देशा, यदा स्यान्मार्गसस्थितः
॥३०१॥ न प्रतिज्ञामृते वाच्य, सज्जनैरप्युदीरित। प्रमाणीक्रियते लोके, शासने तु विशेषत ॥३०२॥ जैनस्य दर्शनस्यैव,
विशेषो यदनादिके। भवे भ्राम्यद्भिरनिश-मसयतनया स्थितैः ॥३०३॥ जन्तुभि सर्वपापाना, स्थानान्यासेविनान्यतः।
त्यज्यन्ते तानि यावन्न, तावत्तान्यतुगानि वै ॥३०४॥ अत एवाव्रतानीष्टान्यघागमकारणे। अन्यैर्मतं तु भावतव्य, योगैयेत्
क्रियतेऽङ्गिभि ॥३०५॥ त्रिभिर्विशेषकम्॥ यदा व्यपगत जन्तो-र्मिथ्यात्व कर्मलाघवात्। तदा मत्येति बन्ध सा-ऽव्रता-
त्कर्मोदयागतात् ॥३०६॥ इन्द्रियाणा कषायाणा, रोध स्याद्वास्तवोऽमुतः। न हीन्द्रियाणा नाशे चाभावे तत्पापनिच्युति
॥३०७॥ अतोऽव्रतानि संयम्य, मनोऽक्षाणि च सद्गुणु। चतुर्णां तु समुच्छेदे, न यागेभ्यो भवादनम् ॥३०८॥ न चाधि-
कारिणा सत्ताऽप्रतिज्ञाया जनैरपि। दीयतेऽता धर्मदेशा, प्रतिज्ञावान् भवेद् ध्रुवम् ॥३०९॥ सन्त्यष्टादश पापाना, स्थानानि
जगतीतले। पर हेतौ फले चाद्य, पञ्चस्वाद्येषु सङ्गमः ॥३१०॥ हिंसानृतस्तेययोषाऽर्थेषु सन्था मनीषिभिः। कार्यते धर्मदे-
ष्ट्वा-धिकारार्पण आदित. ॥३११॥ एवं विरक्तो मिथ्यात्वा-द्व्रतेभ्यश्च यो यति। लब्ध्वा गीतार्थता लोकान, देशये-
द्धर्ममार्हतम् ॥३१२॥ गृहीता विरतिं पश्चाद्यावज्जीव अपालयन्। ध्रुव संयमरक्त स्या-दन्यथाऽन्यूर्न सार्थका ॥ ३१३ ॥
उपदेशे स एवार्हो, यः स्याज्ज्ञानादिमार्गद। स्वयं गच्छन् शिवं मार्गं, न कदर्थित आशया ॥३१४॥ यो वाञ्छति जग
ज्जन्तून्, मरणात् परिमोचितु। सर्वयत्नेन सर्वार्थ-निरपेक्षमना सदा ॥३१५॥ न्याय्ये पथि स्थिता विज्ञा ,सममीश्वरनि -
स्वकान्। शक्तास्तदितराश्चापि, प्रेक्षते न्यायतत्त्वगा ॥३१६॥ पृथ्वीकायादिकान् सर्वान्, पञ्चाक्षान्तानवन् सदा। प्राणि

वर्त्तमाने भवे यो न, दुःखमण्वपि देहिनां। न कुर्यादाग्रूमास्थाय, स प्रष्ठो
रक्षाभिधं मार्ग, देशकः सञ्चरन् भवेत् ॥३१७॥ वर्त्तमाने भवे यो न, दुःखमण्वपि देहिनां। न कुर्यादाग्रूमास्थाय, स प्रष्ठो
धर्मदेशकः ॥ ३१८ ॥ अव्रताक्षकपायान् यो, निरुणद्धि सुयोगवान्। अर्हतां संयमे यायात्तदर्थाय धृतोपधिः
॥ ३१९ ॥ अतोऽसौ सप्तदशधोच्यतेधिकार्यपेक्षया। पर्यङ्कितोग्रहश्चैव स्वरूपं जीवरक्षणम् ॥ ३२० ॥
स्थावरत्रसजन्तूना–मभिघातादिवर्जने। संयमः कर्मवन्धानां, रोधोऽतो निर्जराऽपि च ॥३२१॥ यतमानो यतिर्हिं-
सा–मापन्नोऽपि न हिंसकः। तत्कर्मवेदनं शीघ्र–मतोऽसौ निर्जराफला ॥३२२॥ यो जीवानां परित्यज्य, यतनां
वर्त्तते यतिः। पापानि कटुपाकानि, स वध्नाति पदे पदे ॥३२३॥ अतो जीवादितत्त्वानां, ज्ञानमादौ हितं मतं।
मोक्षेच्छाऽर्हद्वचःश्रद्धा, मुनेः षट्कायगोचरा ॥३२४॥ अत्रोपयोगि सर्वं तत्, संयमस्य फलं महत्। लोकपर्यन्त-
वर्तित्वान्तं शास्त्रकृतेरितम् ॥३२५॥ अज्ञानं निन्द्यते शास्त्रे, संयमस्याकृतेः पुनः। तद्वान् वेत्ति न पुण्यं
वा, न पापं वाऽनवबोधतः ॥३२६॥ ज्ञानत्वे नैव रुचिरं, किं तु हेयादिवोधनात्। दावे पङ्गोः फलं किं
स्यान्, नेत्राभ्यां वीक्षणादपि ॥३२७॥ नयाः शुद्धा अतो मोक्ष–माहुः संयममेव च। बन्धाभावनिर्जराभ्यां,
सोऽस्मादेव प्रसिध्यति ३२८॥ दीपनेत्रे प्रयुज्येते, रजसां परिशोधने। न शोधनोद्यमस्ताभ्यां, किन्तु स्यातां
तटस्थिते ॥३२९॥ तथापि नान्यथासिद्धे, ते यत्तत्परिणामतः। मतः पापक्षयस्ते च, ज्ञानदर्शनबृंहिते ॥ ३३० ॥
आवर्जीकरणान्मोक्ष–स्तच्च केवलज्ञानतः। क्षय्याणां कर्मणां श्रेणेः, करणं नान्यतः पुनः ३३१॥ जानाति
कर्मणां सङ्कं, यं श्रेण्या अधिकं पुनः। केवलेन क्षयीकर्त्तु–मादृतः स्यात्समुद्धतौ ॥३३२॥ संयमः केवले

शुष्को, न हेतुर्दर्शनं विना। अमेध्योत्करसदक्षा–स्तस्मान्नापुस्तकन्नु ॥३३३॥ जीवाद्यस्तित्वमानी स्या–दनघं
धर्मकामन। गतिं बहुविधां जानन्, स स्यान्निर्वेदनिर्भरः ॥३३४॥ निर्विण्णो मोक्षमाशंसु–रनुकम्पां सदा
धरेत्। ततः संयमसाकाङ्क्षो, दर्शनी नान्यथा भवेत् ॥३३५॥ श्रुत्वा पैशाचिकाख्यानं, कुलवध्वाश्च रक्षणं।
संयमोद्यागरक्षार्थं, स्याद्यायाद्यादरः पुनः ॥३३६॥ ज्ञानदर्शनधर्तॄणां, न्यूनताऽऽत्मनि भासते। तेन देशविराधित्वं,
शास्त्रे तेषां प्रगीयते ॥३३७॥ अज्ञोऽपि प्राप्य चारित्रं, समृद्धोऽस्मीति मन्यते। अतः केवल्यशीलस्य, देशारा-
धकता मता ॥३३८॥ पदानि पञ्च पूज्यानि, शासने परमेष्ठिनां। सर्वाणि संयमाढ्यानि, सिद्धे स्वरूपसंस्थितेः
॥३३९॥ अष्टादशशीलाङ्गानां, सहस्राणि तु संयमे। तेनैकादशीभाः श्राद्धा, अपि नो नम्यतामगुः ॥३४०॥
अपवादपदेन स्या–द्या क्वाचिदङ्गबाधना। संयमार्थतया मा नो, शुद्धेश्च स्याद्विराधिनी ॥३४१॥ संगमो
ज्ञानदृग्वृत्तं, हेतुर्मोक्षेऽङ्गहेतुकः। ततस्तद्धारणायाहु–र्मुधाजीवित्वमार्हताः ॥३४२॥ यावज्जीवमविश्रामं, सर्वान्यनिरपेक्षत।
साधुभिर्धारणीयोऽयं, मोक्षमार्गानुगामुकः ॥३४३॥ विचारे तत्त्वपूगस्य, श्रद्धा ज्ञानं तु वेदने। आत्मस्वास्थ्य-
निमग्नत्वं, संयमस्तु प्रतिक्षणम् ॥३४४॥ हानोपादानयोग्याना–मर्थानां स्वल्पता भुवि। उपेक्षा संयमस्याढ्या,
व्याप्नोति जगतीत्रयीम् ॥३४५॥ छद्मस्थानां भवेज्ज्ञानं, हेयादेयफलेग्रहि। उपेक्षाधनमेवात्र, केवलं संयमः सका
॥३४६॥ उत्कृष्टः संयमः सर्व–संवरो यन्निरुध्यते। योगानामपि चेष्टाऽल्पा, निर्जरा केवला तत ॥३४७॥ अत
एव द्वयोगानां, भेदो संसारिमुक्तयोः। सामायिकादिचारित्र–प्रतिज्ञा भवभाविनी ॥३४८॥ अनवद्यासेवनं यत्,

॥३४९॥ अतः प्राभृद्विहाराद्या, ज्ञानाद्यर्थाः क्रिया मताः।
सामायिकतया स्थितं। सावद्यसेवनत्याग-हेतुकार्यतया मतम् ॥३४९॥ अतः प्राभृद्विहाराद्या, ज्ञानाद्यर्थाः क्रिया मताः।
संयमस्यापवादेषु, नेर्यायां पाठविच्युतिः ॥३५०॥ ज्ञानदर्शनसम्पद्भ्या-माढ्या गतिचतुष्टयी। मोक्षो नरगतौ यस्मात्, तत्र
पूर्णोऽस्ति संयमः ॥३५१॥ प्रागन्यगतिदायुष्क-बन्धिनो ज्ञानदर्शने। प्राप्नुवन्ति भवांश्चैते, पल्यासङ्ख्यांशमानकान् ॥३५२॥
भवानन्त्यैव चारित्र-मेकेनाह्ना विमानिता। अभव्या अपि चारित्राद्, ग्रैवेयान्तं समियुर्रात ॥३५३॥ युग्मम् ॥
विभ्रत्त्रीण्यप्रतिपातीनि, जिनो ज्ञानानि गर्भतः। जगतः क्षेममाधातुं, नियमात् संयमं धरेत् ॥३५४॥ परिषहोप-
सर्गान् स, जयेद्भव्यहितेच्छया। विना न संयमं कोऽपि, जिनः प्राप्नोति केवलम् ॥३५५॥ संयमेन गता सिद्धिं,
सबाह्यान्तररूपिणा। स्वलिङ्गसिद्धाः प्रोच्यन्ते, परे गृह्यन्यलिङ्गकाः ॥३५७॥ संघं स्थापयितुं सार्वो, जिनो दिशति
देशनां। चेत्संयमं न कोऽप्यङ्गी-करोति तर्हि निष्फला ॥३५८॥ अनन्तेऽपि गते काले, नाभूदेतत्पुनः क्व-
चित्। जिनस्य देशनाऽद्या स्यात्, संयमाभावतोऽफला ॥३५८॥ दीक्षाकाले जिनेन्द्राणां, स्वर्गादागत्य निर्जराः।
लोकान्तिका जिनं प्राहु-स्तीर्थं भगवन्! प्रवर्त्तय ॥३५९॥ एवं च संयमं तीर्थं, मार्गे ज्ञानादिके त्रिके।
जिनस्य शासनं तिष्ठेन्नैव संयममन्तरा ॥३६०॥ संयमस्यैव माहात्म्यं, यन्मासादिप्रमाणतः। मुखासिका नैजसी
स्याद् वर्षान्तेऽनुत्तरप्रदा ॥३६१॥ जिनेन संयमो दिष्टो, मोक्षायैव गणेशिने। परं तद्योगमाहात्म्यं, यत्स्वर्गसुख-
प्राप्यते ॥३६२॥ संयमस्यैष महिमा, यन्नम्याः साधवो मताः। सर्वे तत्सहायकारित्वा-च्छासनस्य पदे पदे
॥॥३६३॥ जिना यथा नमन्तीद्धं, तीर्थं संसदमागताः। तथेन्द्राद्याः सुराश्चक्रु-रादौ संयमिवन्दनम् ॥३६४॥

अप्राप्तकेवलज्ञान, भरत क्ष्मा गता हरि । नानमत् भ्रातरस्तु, प्रव्रज्याग्रहणादनु ॥३६५॥ लोकानुभाव एणाऽग्रो यद्गतिर्न पराच्युतात् । संयमेन विहीनाना तद्वतामेव तद्गमात् ॥३६६॥ दीक्षाया एव महिमा, यच्छक्रो जिनराट्करात् । स्वर्णकोटीसहस्राणा-मब्द दान विधापयेत् ॥३६७॥ आमर्षौषधिप्रमुखा, लब्धयः संयमोद्भवाः । स्युर्जङ्घाचारणाविद्या-चारणाः संयमोद्भवः ॥३६८॥ मनःपर्यायविज्ञान, गृहस्थाना सुधर्मणां । संयमस्य प्रतापेन, संयमी प्राप्नुयात्तराम् ॥३६९॥ संयमस्यैव रक्षार्थं, द्वादशाङ्गी गणेशिनः । ग्रन्थाश्चक्रिरे शक्रा, ग्रन्थोल्लेखा-धयुस्तदा ॥३७०॥ स्यात्पाश्चर्यमच्छिन्नं यावत्तीर्थं मुनीशिना । शासने संयमस्यैवा-मीषा सदा नामादिकीर्तनम् ॥३७१॥ स्थविराणा कीर्तनीयाऽञ्जली धल्पस्य कर्पणे । मङ्गल कीर्तनं तस्या, जिनाज्ञायुक्तिपूर्वकम् ॥३७२॥ महिमा संयमस्याग्रो, लुञ्चने मुनिमस्तके । आतपत्रं धरेच्छक्रो गीरेण कल्पिका पुनः ॥३७३॥ धारणे संयमस्योक्तौ, शक्ते राजपरिच्छदान् । सा नीवेणेण सूरीणा, राजपुत्रस्य गोपनम् ॥३७४॥ चिरं संयमपात्रार्थं, निर्ग्रन्था आपदं गताः । सेवमानाः पद शुद्धा, द्वितीय ह्यापवादिकम् ॥३७५॥ एतत् संयमसाम्राज्य, चक्रिणोऽपि मुनिं नताः । श्रेष्ठस्यापि च श्रेष्ठतर, पुरा येऽद्य स्वशासने ॥३७६॥ जैनशासनसाम्राज्य, स्त्रीणा यत् संयमो मतः । निर्वृति तासा, दत्ते पूर्णसरभाजजः ॥३७७॥ आर्हते शासने नून, देशतः सर्वतोऽपि वा । केवलं थ-प्राप्तता स्त्री मता श्रुते । ॥३७८॥ असेत्सुश्च सिध्यन्ति, ये सेत्स्यन्ति त्वनागते । स्त्रीणा यतः संयमो पुम्भ्य, सङ्ख्यया शास्त्रराविदः ३७९॥ हीनाः स्त्रीभ्यो मताः पुश्रिहाण्डद्वयापेता, प्रतिमा पारमेश्वरी । नमाश्च मुनिर्येण, (तथा) स्त्रियो नो

गजवच्चाण्डयुगलं, मूर्तिस्तादृशी वास्तवी ॥३८१॥
संयमादराः ॥३८०॥ जिनानां लिङ्गमदृश्यं, जात्यघोटकवत्पुनः। गजवच्चाण्डयुगलं, पुंश्चिह्नाण्डयुगं स्फुटम् ॥३८२॥ पट्कायपरिरक्षायै,
नग्नाटा नैव नेत्राणां, देहाद्भिन्नां छविं स्थितां। मूर्त्तिषु कुर्वतेऽसञ्च, पुंश्चिह्नाण्डयुगं स्फुटम् ॥३८३॥ अतो न संयमस्तेषां, स्त्रीणां
मता साधोरुपकृतिः। तां त्यक्त्वाऽसंयतात्मानो, मता नग्नास्तु साधवः ॥३८३॥ अतो न संयमस्तेषां, स्त्रीणां
भवति लेशतः। आर्हते शासने सङ्घो, विद्यतेऽतश्चतुर्विधः ॥ ३८४ ॥ प्रतिक्रान्तिरतीतानां, तदात्वानां तु
संवरः। भविष्यतां तु नियमो, दोषाणां संयमो मतः ॥ ३८५ ॥ चरंस्तिष्ठन्नुपविशन्, तथा च शयनं श्रयन्। भुञ्जन
वदंश्च पट्काय-यतनां संयमी धरेत् ३८६॥ आन्तरः परिणामः स्या-दात्मनः शुद्ध उत्तमः। संयमस्तं लिङ्गदर्शी, बालः
पश्यति लिङ्गतः ॥३८७॥ ग्रन्थानां त्याग एतस्य, दृष्टावाऽऽयाति तत्त्वगः। बाला यथालिङ्गमेक्ष्य, साधोस्तं साधुमिच्छति
॥३८८॥ असौ चर्यागतं पश्येत् पिण्डशुद्धिं गरीयसीं। विहृतिं मासकल्पाद्यां, नानाभिग्रहधारणम् ॥३८९॥ चित्रं बाह्यतपः-
कर्म, पारणं विकृतीर्विना। कायोत्सर्गकृतिं नित्यां, बालः पश्यति संयमे ॥ ३९० ॥ देवे यथाऽसौ देवेशैः, प्रातिहार्यादिकं
महं। कृतं प्रेक्ष्य दधीतान्तर्दैवताबुद्धिमादरात् ॥३९१॥ धर्मे प्रमार्जनां शुद्धां, जीवरक्षापरायणां। साधौ गृहिणि वीक्ष्यासौ,
धर्मश्रद्धां शुचिं धरेत् ॥३९२॥ वृत्तं विचारयेन्मध्यो, यत्तदात्मविशुद्धितः। कार्ये हेतूपचारेण, वृत्त संयममामनेत् ॥३९३॥
वृत्तं च प्रेक्षते मार्गं, गच्छन् जीवदयापरः॥ निरवद्यां वदेद् भाषां, भोजनं दोषवर्जितम् ३९४॥ सम्यक् प्रमार्जयन् वस्तु,
गृह्णानो निक्षिपन् तथा। निर्जीवे स्थान उत्सृजेन्मलमूत्रजलादिकम् ॥ ३९५ ॥ यस्तं नमति साधुत्वं, मत्वा गुप्तत्रिदण्डिनं।
साधुनाऽनिशमाराध्या, यत् सदा मातृकाः पराः ॥ ३९६ ॥ देवे विचारयेन्मध्यो, वैरत्यागं प्रभावजं। जन्मारीणां देशनां च,

मधुरा योजनप्रथाम् ॥ ३०७ ॥ श्रानूणां भाषया नाम, तिर्यग्मानवनाशिना । चतुस्त्रिंशदतिशयी, वाग्गुणान् पञ्चत्रिंशतम्
॥३९८॥ धर्म चारित्रिणा मन्य, आचार पालन विधे । उपदेश भवद्धर्म प्रेक्षते धर्मबुद्धये ॥३०९॥ गृहिणामपि धान्याम्बु-
धाप्तुगोमयशोधन । स्थाने चन्द्रोदयाधान, मतिक्रान्ति च पौषधम् ॥४००॥ मद्यमांसपरिहार पञ्चोदुम्बरवर्जनं । अनन्तकाय-
सन्धान-निशाभोजनवर्जनम् ॥४०१॥ तथाऽत्र संयमं शुद्ध, मातृकापालनान्वित, मनुते गुरुनिन्दादि-वर्जितं मध्यमो जनः ॥४०२॥
बुधः परीक्षते तत्त्व, चारित्रमोहनाशनः । आत्मास्तित्वादिमानी सन्, हिंसाद्यनाश्रवास्त्यजेत् ॥४०३॥ सन्तः शास्त्रमयेनो-
रसगोपशादपुष्टिना । पूर्वापराविरुद्धना-तीन्द्रियार्थाश्रवाग्भुजा ॥४०४॥ मनुते सदा साधु-स्तस्मिन् गयममामनेन् । मनुते
आगमो राद्धो, मुक्तिमार्गैकजीवनम ॥४०५॥ परीक्षते यथाऽर्हत्सु, रागद्वेषविहीनतां । सार्वज्ञ्य तत्रदेशित्वं, स्याद्वादाङ्कितमुद्रया
॥४०६॥ त्रिकालवर्तिपर्यायं, द्रव्य परिणामसगुन । नोभयोः सर्वथा भेद-मभेदं न्यक्षहानितः ॥ ४०७ ॥ कयान्तं
पक्षं परित्यज्य, मर्याङ्किहितदेशन । शिव शाश्वतमन्वेति, यस्तं देव नमेत् सदा ॥४०८॥ धर्मे च यमिनां धामं,
गुरुकुले सदा रतं । गीतार्थोक्तितथाकारं, परिणामाच्छुतोद्यमम् ॥४०९॥ मुक्त्येकनिष्ठां स्वाध्याय-वैयावृत्त्यकृतिं सदा ।
संयमाराधनाकारं, संयमं जीवनावधिम् ॥४१०॥ गृहस्थाना जिनेशोक्ति-रसरक्तं सुभाषिते । धारणं गुरिमुख्याना-
सादरं सङ्घसार्थके ॥४११॥ भक्त्या सत्क्षेत्रपोषित्वं, दुःखितेषु दयायुतं । तीर्थोद्धारादिकृत्येषु, भक्त्याऽर्थानां
व्ययं सदा ॥४१२॥ अर्चा देवे गुणज्ञानात्, गुरोः सेवाप्रविभ्रमा । महादानमहाशिर-मन्त्ये श्रामण्यभावताम् ॥४१३॥
स्थानानि संयमस्योक्ता-न्याह्यानि ज्ञानदर्शने । तच्छ्रोतुमिपतः मोनग, नश्वरप्रपरीक्षितिः ॥४१४॥ आगन्तुकानि

कर्माणि, निरुन्ध्यात् संयमः सदा। परं प्रतिज्ञामादाया–व्रतेपु तं समाचरेत् ॥४१५॥ हीना प्रतिज्ञया या स्याद्-
या साऽभ्युदयावहा। कर्मरोधः प्रतिज्ञायां, साध्यमोक्षैकसिद्धिदः ॥४१६॥ पापं विज्ञाय श्रद्धाय, प्रतिज्ञौचतिमश्वति।
पाल्या यावज्जीवमेषा, संयमोऽखण्डितस्तदा ॥४१७॥ प्रतिज्ञापालनं तेषां, भीरवो नासुखागमे। सौख्यागमे त्वनाकाङ्क्षा, ये
स्युर्जीवितनिस्पृहाः ॥४१८॥ प्रसङ्गे सुखदुःखानां, ते स्युर्निश्चलवृत्तयः। अप्रसङ्गेऽपि समुत्थाप्य, प्रसङ्गं ये सहिष्णवः
॥४१९॥ त एव सुभटा आजौ, जयं लब्धुं समुत्सुकाः। प्रागेव ये कृताभ्यासाः, सुखे दुःखेऽत्रधारणे ॥४२०॥
संयमस्य ततः सन्धां, परिपालयितुं नरः। कुर्यादादावेव दुःख–सुखापातस्थिरात्मताम् ॥४२१॥ स्वरूपं तपसो
ह्येतत्, सत्सुखं यदपोज्झ्यते। असद्दुःखं समुदीर्य, वेद्यते शुद्धचेतसा ॥४२२॥ अत एवोदितं कैश्चित्, तपस्त्याज्यं
व्यथोदयात्। यत्कर्मोदयतो, दुःखं, न च तन्मोक्षसाधकम् ॥४२३॥ परं न तपसस्तत्त्वं, ज्ञातं तैर्लुब्धबुद्धिभिः।
कर्मोदयजदुःखस्या–ङ्गीकारो धर्महेतवे ॥४२४॥ अन्यथा सदयः सत्यो, ब्रह्मचार्यपरिग्रहः। पदे पदे स्वमात्मान-
मर्पयेत्किं व्यथावलिम् ? ॥४२५॥ पारिव्रज्यं न किं सौख्य–त्यागदुःखोदयात्मकम् ?। विवेकरक्षकाः किं न, सौख्य-
त्यागासुखोदयाः ॥४२६॥ तपस्विनं ह्याक्षिपन्ति, जडा यत्–पापयुग् भवान्। अवतीर्णः क्षयायास्य, यदेवं तप्यते
तपः ॥४२७॥ न च ते जानते स्वेषां, रागद्वेषमुहात्मनां। जन्म यद्वीतरागाणां, जन्माज्ञानं न सम्भवेत् ॥४२८॥
आत्मसात् प्राग्भवे यानि, कर्माणि प्रचितानि तु। क्षयस्तेषां कथं स्याच्चे–न्न तपस्तप्यते घनम् ॥ ४२९ ॥
तेषामेव हि ज्ञानाग्निः, प्रज्वलेत् कर्मदाहकः। सुखदुःखसहिष्णुत्वं, तपसा येन जायते ॥ ४३० ॥ स्थिरप्रज्ञत्वमास्थाय,

क्रियते कर्मणा क्षयः । तस्माभावितचित्ताना, स्थिरचित्तं तपस्विनि ॥४३१॥ ये केचित् स्थिरचित्ता न, ज्ञानयुक्तास्तपस्विनः। कर्मबाहुल्यता तेषा, परे जातु न तद्विधाः ॥ ४३२ ॥ केषाञ्चिन्नेष्यते ज्ञानं, तपो वा मुक्तिगामिता। प्राग्भवादततद्भावा अता नाद्भुतमत्र तु ॥४३३॥ मरुदेवाप्रभा जीवा, ये स्युर्भवयुगे तथा। तेषा चाल्पभवत्वेन, बन्धो नेदृक्कर्मणाम् ॥४३४॥ सुखदुःखे द्विधा बाह्या-न्तरभेदे ततस्तपः। युग्मैस्तप्यं द्विधा येन, स्यात् सहिष्णुत्वमात्मनः ॥४३५॥ जीवे कर्माणि योगेभ्यः, सुखदुःखमलाविले। तत्त कर्मक्षयायैव, किं न योगैः प्रवर्तते ? ॥४३६॥ योगद्वाराज्यते कर्म, योगद्वारेव लीयते। मुनीश्वरैरतो योग-तापनाय तपो मतम् ॥४३७॥ ज्ञानयोगेन हीनोऽपि, यत्तपः कर्तुमीहते। बाह्य तपस्त-देवोक्त-मान्तर ज्ञानयोगिकम् ॥४३८॥ ज्ञानयोगविहीनाना तपसा यदनुष्ठिति। ततोऽपि ज्ञानिभिर्बाह्य-स्तपो भेदा प्रगीयते ॥४३९॥ प्रायश्चित्तविभेदादौ, ततो या बाह्यदर्शिता। सा नाभ्यन्तरता रोद्धु-मीष्टे ज्ञानाद्यतः सका ॥४४०॥ देह्यादौ भवमायात-स्तैजसेन सहागमात्। इच्छेदाहारमादातु-मग्निरन्धेन्धनं यथा ॥४४१॥ तस्मादेव ग्रहादा-हा-रस्येच्छामन्तरेण तु। कर्मोदयाच्छरीरस्य, निष्पत्तिः स्यादनिच्छया ॥४४२॥ व्याघातो नास्य जीवस्य, घातको न परस्य च। शुद्धचैतन्यरूपोऽयं, बध्यते मायपुद्गलैः ॥४४३॥ स्वय ज्ञानस्वरूपोऽपि, पुद्गलोच्चयमाश्रितः। ज्ञानं तदानुकूल्येन, दर्शनं च न तु स्वयम् ॥४४४॥ शुकाना पञ्जरं बन्धः, कोशकारस्य तद्गृहं। तथैवात्मन एतद्धि, वपुः परमबन्धनम् ॥४४५॥ इन्द्रियोच्छ्वासप्राणोक्ति-मनासि तद्भवानि च। तदानुकूल्यमाश्रित्य, स्यास्नूनि कार्य-दानि च ॥४४६॥ चिदानन्दस्वरूपस्या-त्मन एता विडम्बनाः। आहारेणैव गमिता-स्तथाहारे क्षुधा स्तः ॥४४७॥

अन्येन्द्रियाणि योगाश्च, कषाया आहृतेर्यतः। तत आश्रवभीरूणा-माहारस्त्यागमर्हति ॥ ४४८ ॥ ग्राममोषी यथा
स्तेनो, यावद्द्रव्यागमं श्वसन्। नृपेण धार्यते मानात्, तथा मोक्षार्थिना वपुः ॥ ४४९ ॥ अत एव जिनैः शास्त्रे,
साधुदेहस्य धारण। आख्यातं मोक्षहेतुभ्यः, परं निष्पापवृत्तितः ॥ ४५० ॥ धर्मस्य साधनं देह, आद्यमित्यपि लौकिकैः।
गीतं तदपि विज्ञानां, मान्यं तत्त्वविवेकतः ॥ ४५१ ॥ धर्मस्य नैव बाधा स्या-द्देहश्चेद् धार्यते तथा। तदा न्यायोऽयमिष्टः
स्या-दन्यथा धर्मवञ्चनम् ॥ ४५२ ॥ सर्वकर्मक्षयो मोक्षः, संयमः सत्तपोयुतः। धार्यते चेत्तदा बद्धकर्मणां विलयो भवेत्
॥४५३॥ तपोयुक् संयमो देहात् सम्यग्ज्ञानादिपोषणात्। ततोऽनवद्यमार्गेण, देहधारणमिष्यते ॥४५४॥ तीर्थेऽस्मिंस्तप
उत्कृष्टं, वर्धमानजिनाहृतं। षाण्मासिकं विधातुं चे-त्तत्कत्कुरुते यमी ॥ ४५५ ॥ इन्द्रियाणां न हानिः स्या-न्नापि संयम-
साधने। नाशुभध्यानवच्चेतो, यत्र तत्तप इष्यते ॥४५६॥ भेदेषु षट्सु बाह्येषु, तपोऽनशनमादिमं। अभावे पारणं तत्र, स्याद्
नोदरतातपः ॥ ४५७ ॥ यद्यस्याहारमानं स्या-त्ततो न्यूनं यदाहरेत्। तदोनोदरता ज्ञेया, द्वात्रिंशत्कवला मितिः ॥ ४५८ ॥
एकेनापि विहीनाया-मस्यामूनोदरो भवेत्। कवलेनैकं कणं याव-द्भोजने न्यूनता मता ॥ ४५९ ॥ प्रकामभोजने रोगा,
विकारा मन्मथोद्भवाः। प्रकामभोजिता शोभा-वहा नो संयते मुनौ ॥ ४६० ॥ क्षुधायास्तीव्रता साधौ, वैयावृत्त्यसमर्थता।
ईर्यायां स्थामयोगाश्च, संयमीयाः सजीवनाः ॥४६१॥ आहारे कारणान्येता-न्युक्तानि मुनिकोविदैः। षट् तेषां साधुरापाते,
आहरन्न हि दुष्यति ॥ ४६२ ॥ सत्स्वेतेषु कारणेषु, नाहारोच्छेदकारणं। आतंकादि तदा कार्योऽवमोदर्येण खादितिः
॥४६३॥ कथञ्चिचेद्द्भौ हेतू, तदा धैर्येण साधुभिः। कार्योऽन्धसो व्यवच्छेदो, रोगाद्याः प्रबला यतः ॥४६४॥ एवमातङ्क-

मुख्यानां, कारणानां वियोगतः । वेदनादिभ्य आदत्तेऽनमौदर्येण भाजनम् ॥ ४६५ ॥ न्यूनोदरोऽपि शोभेत वृत्तेः सङ्क्षेप-
धारकः । गोचरचर्याष्टकं तस्मा-न्मुनिर्भिक्षाटने धरेत् ॥४६६॥ आहारार्थ्यपि यः साधु-राहारौत्सुक्यवर्जितः । स धारये-
द् नर्तुविधा-भिग्रहान् गोचराग्ने ॥४६७॥ एव निरुत्सुकः साधु-र्विदधानो भुजिक्रियां । तुल्योऽनशनिना सिद्धं, भ्रातृजा-
यापवादृतौ ॥४६८॥ भाति ना धृतिसङ्क्षेप लाम्पट्य विकृतौ स्थितं । रसा दीप्तिकरा मोहे दुर्गतिश्च ध्रुवा ततः ॥४६९॥
त्यागोऽत्र विकृतीनां यस्तपोभेदस्तुरीयक । उत्सर्गः शासनेऽप्युक्तो, विकृतीनां समुत्सृजौ ॥ ४७० ॥ विकृतौ लम्पटा
भूप-मुदायनमुदाहरन् । नाज्ञासन् सुखजीवित्वं, राज्ञस्तस्य मदोद्धुराः ॥ ४७१ ॥ सीमन्धरजिनेनोक्तं, चूलायां भिक्षुकी-
पुरः । अभीक्ष्णं निर्विकृतिका-यस्था मुनिः समुद्वहेत् । ॥ ४७२ ॥ वचः पर्युषणाकल्पे, बलिष्ठाना न मायुषि । विकृतिनवकं
प्रायं विकृतेर्विगतिर्यतः ॥४७३॥ विकृतिरप्यपीनात्मा बाध्यते स्वैरपीन्द्रियैः । विकारव्रातनिर्मग्न आर्त मज्जत्यनारतम् ॥४७४॥
दुर्ध्यानं नरकद्वारं, ततो दुर्गतिभीरुकः । विकृतीर्वर्जयेत् प्राणान्, धारयेदन्नभक्षणैः ॥४७५॥ सूत्राणामधीतौ यस्मा-दुद्देशा-
दिविधिप्रत्नम् । आचामाम्लं समादिष्टं, तपस्त्वेन मनीषिभिः ॥ ४७६ ॥ प्रव्रज्या प्रतिपत्सुः सा, रुद्धा भरतेन सुन्दरी ।
पष्टिर्वर्षसहस्राणि, व्यधादाचाम्लसन्ततिम् ॥ ४७७ ॥ धातकीखण्डभरते हृतः द्रौपदनारतम् । पष्ठभक्तोत्तरं चक्रे,
आचाम्लं परम तपः ॥ ४७८ ॥ वर्धमानतपाऽनेके, स्कन्दकाना महानराः । आचामाम्लशतान्तं त-त्तपस्तेपुर्विमुक्तये
॥ ४७९ ॥ श्रीश्रीपालनृपोऽकार्षी-दाराधयितुमुद्यत । अर्हदाद्या नवपदी-माचामाम्लानि सादरः ॥ ४८० ॥
उपधानविधौ मुख्ये, विधिराचाम्लगोचरः । रक्षणे द्वारिकायाः प्राग्, जन आचामाम्लमादधत् ॥ ४८१ ॥ अधु-

नाऽपि प्रतिग्रामं, जैना विघ्नविनाशनं । समाश्रित्यादधुर्न्यक्ष-माचामाम्लं तपो महत् ॥ ४८२ ॥ श्रावकाणां मतान्य-
र्हा-ण्यादिमानि श्रुतोद्धरैः । आचाम्लपूर्वकं पञ्च, प्रकीर्णानि तु पाठने ॥ ४८३ ॥ श्रीसङ्घेन सदा विघ्न-व्रातविध्वं-
सहेतवे । कार्यारम्भे सदाऽऽचाम्लं, तप आद्रियते परम् ॥ ४८४ ॥ विक्रतव्रातहीनोऽपि. जनः कश्चिदभावुकः । न
स्यात्करणनिर्माथी, तत्कायक्लेशनं तपः ॥ ४८५ ॥ कायोत्सर्गकृति प्रोक्ता, मुनीनां चूलिकाश्रुते । कायोत्सर्गाविधायी
चा-वश्यके निन्दितो मुनिः ॥ ४८६ ॥ उत्तरीकरणादि स्यात्, कायोत्सर्गक्रमेमुनेः । चिन्ताया अतिचाराणां, ज्ञानादिषु
च शुद्धये ॥४८७॥ भावस्तवस्थिताः सन्तोऽर्हद्भिम्बार्चादिसिद्धये । उत्सर्गं विदधु किं न? यत् सर्वफलदो मतः
॥४८८॥ शासनावर्णनाशाय, देवमाराद्धुमुद्यताः । सुभद्राद्या व्यधुस्तं न ?, देवदर्शनदं परम् ॥ ४८९ ॥ वज्रस्वाम्यप्य-
नुज्ञायै, सुर्या नोत्सर्गमादधत् ? । प्रायो योग्यगिरेस्तत् स, वितरेन्न फलं किमु ? ॥ ४९० ॥ शय्यासुर्याद्यनुज्ञायै,
निर्यु तौ किं न भाषितः । उत्सर्गः ? श्रुतदेव्याः किं, नाचीर्णः सूरिसत्तमैः ? ॥४९१॥ सम्यग्दृष्टिसमाध्यादे, कारकाः
शासनाः सुराः । चैत्यवन्दनकार्येषु, नोत्सर्गेण किमु स्मृताः ? ॥४९२॥ जिनकल्पा जिनाधीशाः, प्रतिमाप्रतिपन्नकाः ।
किं नान्वहमकार्षुस्ते, कायोत्सर्गं शिवाध्वने ? ॥४९३॥ सुखसाती सातलीनो. न प्राप्नोति शुभां गतिं । गिरं दशका-
लिकीं श्रुत्वा, को नोत्सर्गपरो भवेत् ? ॥४९४॥ प्रस्थानविघ्नविद्रावी, स्थविरोत्तमसाधुभिः । क्रियतेऽसौ यदा शेषः किं न
तस्मै तमाचरेत् ? ॥४९५॥ विघ्नव्रातविघाताय, स्वाध्यायस्थापने बुधाः । अनुयोगारम्भमुख्ये, कायोत्सर्गं समादधुः
॥४९६॥ प्रमादलग्नपापानां, गमनागमनादिषु । शुद्ध्यै मतो न किं चित्रः, कायोत्सर्गो जिनागमे ? ॥४९७॥ लोचादि-

स्थमाम्नातं, पश्चात्कर्मादिशान्तये । न कार्यं हस्तशुच्यादि नापितस्य तथाविधौ ॥ ४९८ ॥ अस्नानं गोचरः शय्या,
पल्यङ्कादिगता भ्रमिः । ग्रामे वा नगरेऽरण्ये, कायकष्टं तपो ह्यदः ॥४९९॥ आतापनां मुनिः कुर्या-चैत्यद्रव्यस्य
रक्षणे । निताकर्षकमेषा य-च्छोरानामपि शंघयतः ॥ ५०० ॥ नृपादयो विलोक्यैवं, मुनिमातापनापरं । कुर्वन्तीष्टं
धर्मं भूत, दयहे यन्ननोपतम् ॥५०१॥ कायोत्सर्गस्थितः साधु-र्वपुषो ममतां त्यजन् । अनुकूलेतरकार्येषु, निरपेक्षां
मति धरेत् ॥५०२॥ वैरिणां वैरशान्त्यर्थ-मुपसर्गालिसर्जने । आह्वानमर्थतः कुर्वन्, कायोत्सर्गं करोत्यसौ ॥५०३॥
कमठासुरोऽपि श्रीपार्श्वमु (श्रीपार्श्वं कमठो दैत्य उ) पद्रोतुमुपागतः । कायोत्सर्गेण स्थास्नुं द्राग्, न च ध्यान-
मचीचलत् ॥५०४॥ श्रीपार्श्वदासदत्तेन, नमस्कारेण नागतां । त्यक्त्वा नागेशतामाप्तस्तद्देव्या सह रुद्धवान् ॥५०५॥
दैत्ये न द्वेषकणिकां, न देवे रागरक्तताम् । अरक्तद्विष्टकायोऽसौ, पार्श्वोऽभूत् स्वस्वरूपदृक् ॥५०६॥ उत्सर्गस्थो
महावीरो, गोपालैरुपसर्गितः । कौशिकनाहिना नाकु-भुवा सङ्गमकेन च ॥५०७॥ न चीर्यं प्रतिकाराय, रागे द्वेषे
मनो न च । उत्सर्गे स्वस्वरूपस्य, ध्यानमेवावशिष्यते ॥५०८॥ यथोदयं वेदयन् स, कर्म बद्धं निकाचितं ।
अगां (बह्वीं) निर्जरां कुर्वन् । भात्युत्सर्गस्थो गुणोन्नतः ॥५०९॥ निर्णयाय विवादस्या-हूता सङ्घेन देवता ।
आज्ञां सीमन्धरादाना-ज्ज्ञात्वा सप्तमनिह्नवे ॥५१०॥ छिकायां सर्वसङ्घेन, पाक्षिकावश्यकादिषु । क्षुद्रोपद्रवनाशा-
योत्सर्गो सत्ती विधीयते ॥५११॥ दुःखकर्मक्षयायाल-ममानः क्रियतेऽन्वहम् । उत्सर्गस्ततो वाच्यं किमुत्सर्गे परं बलम् ?
॥५१२॥ विसम्भोगं निरातुं श्री-संघो द्वादशग मुनेः । करोत्युद्घाटनोत्सर्गं, मङ्ग्रहेऽप्युरसम्पदे ॥५१३॥ उत्सर्गः

सफलस्तस्य, निराशंसो दधाति यः । कपायेन्द्रिययोगानां, संलीनत्वं गतोपमम् ५१४॥ देवताऽवर्जिता साधो-स्तस-
र्गप्रभावतः । प्राप्ता कलहकाले च, क्रुद्धो मुनिरुपेक्षितः ॥५१५॥ उत्सर्गस्थो मुनिर्बाहु-बली मानाद्रिसंस्थितः । साध्वीभ्यां
शिष्यतां यातो, युगादीशप्रभोर्गिरा ॥५१६॥ दमदन्तस्य राजर्षेः, कायोत्सर्गो महायशाः । पाण्डवे कौरवे नैव, तोपं रोपं
यतोऽगमत् ॥ ५१७ ॥ अर्जुनाय न चेत्क्रुद्धः, सप्तमानवघातिने । सुदर्शनस्तदोत्सर्गा-न्नष्टो यक्ष उपद्रवी ॥ ५१८ ॥ मायी
त्रिगाममध्यस्थ, उत्सर्गी क्षुल्लको मुनिः । निन्दामाप्तस्ततो धेहि, निष्कपायत्वमादरात् ॥ ५१९ ॥ सम्भूतिमुनिरुत्सर्गी,
स्त्रीरत्नकेशमोहितः । चक्रीभूय निदानी स, गतः श्वभ्रे विनिन्दितः ॥५२०॥ चतुर्मासीं स्थितः साधु-रुपवासी गुहामुखे ।
सिंहस्येन्द्रियवेगेन, बाधितो हास्यतां गतः ॥ ५२१ ॥ क्रोधो नाशकरः प्रीते-र्मानाद्विनयशून्यता । शठे न विश्वसेत्कोऽपि,
लोभः सर्वभयावहः ५२२॥ मासोपवासक्षपणः, साधुः क्रोधप्रभावतः । चण्डकौशिकसर्पोऽभू-द्वीरदंशकरो हहा ! ॥ ५२३ ॥
मानाच्चारित्रमाप्यापि; दिवं गत्वा श्वपाकताम् । लेभे मेतार्यो वीक्ष्यैतन्माने संलेखना वरा ॥ ५२४ ॥ मायाप्रभावतस्तीर्थं-
करोऽपि वनिताऽभवत् । श्रीमल्ली तन्न कस्यापि, माया श्रेयस्करी भवेत् ॥५२५॥ निशीथं यावदाटत्किं, सिंहकेशरमोद-
कान् । लिप्सुः साधुर्न ? तच्छ्रेय-स्त्यागाल्लोभस्य निस्तुलम् ॥५२६॥ कर्माणि भवमूलानि, दूरमात्मश्रिता गुणाः । चतुर्गति
रूपिणः ॥५२८॥ सम्यक्त्वमात्मनो रूपं, कपायैर्विनिगृह्यते । मिथ्यात्वेन भवो घोरो, जन्तुभिस्त्वनुभूयते ॥५२९॥ पौद्गलं
श्रमस्ताव-द्यावत्प्राणी कषायितः ॥ ५२७ ॥ दुःखमूलो भवस्तस्य, मूलं कर्माण्यशेषतः । नेता तेषां महामोहः, कपायास्तत्स्व-
सुखमिच्छद्भिरुपेक्ष्यात्मसुखासिकाम् । पापस्थानानि सेव्यन्ते, न किं मोहवशंवदैः ? ॥५३०॥ जैनेन्द्रं शासनं बुद्ध्वा, निश्रेणिं

मोक्षवर्त्मनि ।यत्पापान्न विरज्यन्ते, तद् बलं मोहसम्भवम् ॥ ५३१ ॥ पापेभ्यो विरतिं कुर्वन्, माधिभ्यः शुद्धशर्मणा । सग्रह निरतात्मा ता, देशेनैव तनोत्यलम् ॥ ५३२ ॥ विरतः सर्वपापेभ्यः, परिव्रज्यामुपागतः । तपस्यन्नपि नैर्मल्यं, यन्नाप्नोति कषायतः ॥ ५३३ ॥ मूलमेषां कषायाणा-मिन्द्रियार्थास्तनोऽप्यमून् । परित्यज्याभयान् स्वस्थो, भवैकाग्रमनाः शिवे ॥५३४॥ ये भ्रान्ता ये च भ्राम्यन्ति, ये भ्रमिष्यन्ति दुर्गतौ । जीवा एतत्कषायाथ-कारिताधमजोऽक्षयम् ॥५३५॥ सर्वानेतान् कषायाक्षान्, नरो जेतुं क्षमो भवेत् । मनोवाक्काययोगानां निग्रहे यस्तु तत्परः ॥ ५३६ ॥ अनिगृह्णन् मनः कर्म, समपानिदुःखदं । किं न प्रसन्नचन्द्रोऽपि-रस्सर्गस्थोऽपि बद्धवान् ? ॥५३७॥ सञ्ज्ञिनो देहिनः श्वभ्रेष्वखिलेषु प्रयान्ति तद् । माहात्म्य दुष्टमनसा, यत्ता मनो वशीकुरु ॥ ५३८॥ विपाक कर्मणा दुष्ट, दीर्घकालीनमात्मसात् । मनः कर्तुं क्षमं दुष्टं, क्षयम नभिगृह्यताम् ॥५३९॥ अनाप्नुवन्निन्द्रियार्थ-मप्रवृत्तो वधादिषु । सप्तम्यां तन्दुलो यात्य-स्यायुर्दुष्टमनोबलात् ॥५४०॥ मनोनिग्रहवान् प्राणी, सेन्द्रियार्थभोगवान् । येन माक्षयिकं छद्मवीतरागः शुभं व्रजेत् ॥५४१ ॥ तानेनाभिभवन्ति द्राक्, कषाया इन्द्रियाणि च । निगृह्णन्ति मनो ये न, शुभभावबहिर्गता ॥५४२॥ मनोऽन्तरेण यद्हिंसा-दीनि स्युस्तत्र तत्पदं । द्वितीयं मैथुने नैत-त्पश्चैन मनोऽन्तरा ॥ ५४३ ॥ षट्खण्डभरतस्वामी, भरतश्चक्रितास्थितः । अवाप केवलं यत्त-न्मनोनिग्रहजाद् बलात् ॥५४४॥ तिर्यग्गते समायातो, घटतन्दुलभोजन । तपस्विभ्यः पुरा चन्द्रः, केवली चित्तनिग्रहात् ॥५४५॥ अनन्ता लेभिरे सिद्धिं, जीवाः सामायिकात् पदात् । अन्यसाधनशून्यास्त-न्मनोमाहात्म्यमद्भुतम् ॥ ५४६ ॥ पायस भक्षयन् जात-स्तापसानां व्रजो महान् । केवली मानसात्किं न, बलाद्गौतमसम्भवात् ? ॥ ५४७ ॥ केवली मरुदेव्याप,

कुञ्चिताङ्गी गतेक्षणा । शिवं धर्ममश्रुत्वापि, मानसादतुलाद्बलात् ॥ ५४८ ॥ भागिनेया ग्रामवाणे, स्थिता भागे नर्तास्सव: ।
मातुलं लेभिरे किं न, केवलं मनसो बलात् ? ॥ ५४९ ॥ विराद्वा बन्धनात्पाल्याप्कायव्रजतः पुनः । पात्रनावा मुनिः किं
नाभूत्सर्वज्ञो मनोबलात् ? ॥५५०॥ दुष्टेन वचसा प्रापु-र्जीवा भावमनेकशः । पणाङ्गनायास्तद्धीमान्, वचः संवृणुते हृदम्
॥५५१॥ घातः शरीरजो रोहे-द्वासरैरेव, नो पुनः । दुर्वाक्यजनितो घातो, मृते रोहति वा न वा ॥५५२॥ दुर्वाक्यमहतः
श्वाऽपि, जात्यो जीवितमुज्झति । धियालोच्य वचः प्रीत-मनवद्यं सुधो वदेत् ॥५५३॥ मृदुवागनुयोगी यः, पर्षदं प्रतिबो-
धयेत् । मुनिचन्द्र इव द्विष्टा-मन्यथोक्तिर्विपर्ययेत् ॥५५४॥ मिथ्यावचःप्रभावेन, मरीचिर्भ्रान्तवान् भवे । वचसा दुष्टता-
मासा, भवे भ्रान्तास्तु निह्नवाः ॥५५५॥ साम्येन वचसा शिष्टो, मेघो वीरेण बुद्धवान् । विष्णुना निहतः सिंहः, साम्यवा-
क्येन शं गतः ॥५५६॥ दुर्वाग्बाणहताः सन्तो, दिधीर्षन्ति न जीवितं । सम्भावितापकीर्तीनां, मृत्युस्तेषां हितावहः ॥५५७॥
नापकर्तुं क्षमा दुष्टाः, सज्जनान् दुष्टवाक्छरान् । क्षिप्त्वा निहन्तुमिच्छन्ति, दुष्टानां लक्षणं ह्यदः ॥५५८॥ दुष्टेन वचसा दूनो, गजः
सेचनको गतः । अङ्गारपरिखां मुक्त्वा, मर्तुं हल्लविहल्लको ॥५५९॥ धर्म्येण वचसा बुद्धा, अनुजा भरतेशितुः । बली न केवलं
लेभे, भगिनीवचनाद्धतः ॥५६०॥ समाने केवले तीर्थ-पानां वाग्भ्यो गणेशितां । लेभिरे गणभृज्ज्येष्ठा-स्तद्वचः सुन्दरं हितम्
॥ ५६१ ॥ वचःसंलीनतां बिभ्र-द्विनयी नयवान् गणी । पारं गत्वाऽनुयोगानां, शासनस्य धुरां धरेत् ॥५६२॥ मनसा
कर्मणा दुष्ट-माचीर्णं क्रियते मुधा । मिथ्यादुष्कृतवाक्येन, भावसारं विधानतः ॥ ५६३ ॥ क्रुद्धो मानी प्रपञ्चाढ्यो, लुब्धो
मार्गमवातरेत् । यदि सद्वाक्यपीयूष-पानं सद्भिः समर्प्यते ॥५६४॥ श्रूयते शामितः क्रुद्धो, द्वैपायनोऽन्त्यविष्णुना । सत्यमेव

निदाने तौ, मुक्तौ पुर्या विनिर्गतौ ॥ ५६५ ॥ आश्वस्तो गौतमो वीर-प्रभुणा लिप्त आगतः । चिरसंसृष्टवाक्येन, महत्वं महिमा महान् ॥५६६॥ श्रीजम्बूवचसा बुद्धः, प्रभवः सम्प्रतिर्नृपः । सुहस्तिवचसा भूपः, कुमारो हेमवाक्यतः ॥५६७ ॥ वचःसंलीनताभेद-स्तपसा सदसद्भिदे । प्रवृत्त्या विनिवृत्त्या च, हेतू कर्मक्षये परे ॥५६८॥ व्यवहारो महान् काया-ल्लोके लोकोत्तरेऽपि च । तीव्रया शिक्षया लोकः, शिक्ष्यते कायजे वधे ॥५६९॥ ये कुर्वन्ति वधं नृणां, तेषां देहान्तदण्डनं । अस्पृश्यास्ते मता लोके घ्नन्ति ये महिषादिकान् ॥ ५७० ॥ अपूर्णेन्द्रियकीटादि-वधे पापं मतं परैः । गायत्र्या शोधनीयं च, गीतं तैर्पां महर्षिभिः ॥ ५७१ ॥ यथार्थं (र्थ) शासनं जैनं, जीवान् षडपि कायिकान् । इच्छंस्तेषां विघातादौ, प्रतिक्रमणपूर्वकम् ॥ ५७२ ॥ पूर्वार्धादितपः दत्ते, प्रायश्चित्तपदे परं । कायादिजे महापापे, पाराञ्चिकमपीरितम् ॥ ५७३ ॥ युग्मम् ॥ अंगं दुश्चिन्तने स्वस्य, धाति तस्य गुहयपि । काये सम्बन्धिवर्गोऽपि, यथादेः परमश्रितेः ॥५७४॥ मुनीनां त्रिरयाणां, मनसे दुरिते वृथा । दुष्कृतं धाति कायस्यो-त्सर्गस्तनुकृते महत् (तपः) ॥ ५७५ ॥ सुस्वप्नादिभवे पापे, श्वासमाना समुत्सृज्जिः । कायिके तु परं पापे, प्रायश्चित्तं श्रुते मतम् ॥५७६॥ यत्यासे नरके मार्गो, महाजीववधाश्रयाः । बहुधा कायसम्पदा, विद्वन् ! कायं समावृणु ॥५७७॥ कायाधीनं मनो यस्माद्व्यस्तव्यस्तचिन्तनं । सङ्कल्पो नाश्रुतार्थेषु, तत्कायं संवृणु प्रधीः ॥५७८॥ व्यवहारं वचः कुर्यात्, कायाभ्याससमाश्रते । न मनो न वचोऽज्ञान-दृष्टेऽर्थे कस्यचित्पुनः ॥५७९॥ मनो व्याप्रियते प्रीत्य-भीत्योर्वाक्तु पराश्रिता । कायस्तु जीवने सर्व-जीवानां स यतो भवेत् ॥५८०॥ बाधने मनसा बाधा, न वाचा तु समर्थनात् । आकृष्य पुद्गलान् कायात्तु, जीवं व्यथन् आर्तभाक् ॥५८१॥ नायोगितां मनोवाचो-रोधे प्राप्नोति केवली । रुद्धे काये लभेतैनां,

यता मोक्ष–कपाटद्वारकुञ्चिका ॥५९९॥ मोक्षहेतू मते ते द्वे, नियमाद्भव्यदेहिनाम् । अभव्या दूरभव्याश्च, नानयो रतिमाद्धुः ॥६००॥ गण धर्मोपधि देहं, गृहीतमखिलं त्यजेत् । साधयेन्निरभिष्वङ्ग, उत्तमार्थं श्रुतोदितम् ॥६०१॥ एवमाजीवनं कार्यं, साधुना सूक्ष्मदर्शिना । उत्तमार्थप्रवृत्तेन, तपोऽतोऽभ्यन्तरं मतम् ॥ ६०२ ॥ प्रपन्नाः शासनं जैन–मेनं निर्दिशिरे तपः । अभ्यन्तर यथोक्तं त–दान्तर मुक्तिसाधनम् ॥६०३॥ पापशुद्धिर्न दानार्थैर्विनयो न ह्यसंयते । वैयावृत्त्यं न सारम्भेऽधीती मिथ्याश्रुते नहि ॥ ६०४ ॥ आत्तार्त्ताणं न च ध्यानं, नान्ते विवेकशून्यता । जिनोक्तेऽभ्यन्तरे सिद्धे, तप स्यात्मैषिणा परे ॥६०५॥ तपः कार्यद्वयं कुर्यात्, संवरं निर्जरा तथा । मुख्य ध्येयं निर्जराऽस्मात्, संवरस्त्वर्थतः पतेत् ॥६०६॥ आहारादिषु यत्यत्ने–प्याश्रवाना गतिर्नहि । कषायेन्द्रियगोगाना, स्वल्पमेव प्रवर्त्तनात् ॥६०७॥ तपः संवरभेदेषु, नाधीतमिति चेन्मतिः । न सुन्दरा यता धर्मे, दशधा संस्थितं त्विदम् ॥६०८॥ पृथक् तत्त्वमिदं तत् किं, तपोरूपा नु निर्जरा । तपांसि द्वादशापि स्युः, कर्मशाटैकसाधनम् ॥६०९॥ रोधनिर्जरयोरेवं, पार्थक्यात्तत्त्वभिन्नता । सद्ध्यानपुङ्–समित्याद्या, जीर्येयुः कर्मसन्ततिम् ॥६१०॥ ननु मोक्षस्य मार्गे न, प्रोक्ते संवरनिर्जरे । सत्य मार्गः परं हेतु–साध्यरूपतया मतः ॥ ६११ ॥ सम्यग्दर्शनमुख्यानि, नातिरेकीणि संवरात् । साध्याणि निर्जरातश्च, यल्लाभः कर्मलाघवात् ॥६१२॥ संवृण्वत इमान्येव मूलस्थानानि कर्मणः । निर्जरामप्यमूनि द्राग, बद्धाना तन्वतेऽङ्गिषु ॥६१३॥ अशेषकर्मणां नाशा, निःशेषान्मोक्ष उच्यते । क्रमप्राप्या गुणास्तस्मा–न्मोक्षमार्गगति ध्वनेत् ॥६१४॥ अवस्था मोक्षपर्यन्ता, मूलः संवरनिर्जरे । दिष्टे जीवेतरे तत्त्वे, न हानादानबुद्धयः ॥६१५॥ छद्मस्थज्ञानसाफल्ये, युक्ता

तच्छेषतत्त्ववाक् । मोक्षः साध्यः साधने द्वे, उक्ते संवरनिर्जरे ॥६१६॥ आश्रवो बन्धने हेतु, मोक्षादेः प्रतिबन्धिनी । इति हेयतया प्रोक्ते, द्वे तत्त्वे ते मुनीशिना ॥ ६१७॥ त्रिभिर्विशेषकम् ॥ पुण्यपापे तु सामग्री–रूपे यज्जीवसन्ततौ । बन्धे मोक्षे च हेतूनां, कारके भवतस्त्विमे ॥६१८॥ तपसो निर्जरा तत्तु, बलं संवरसाधितं । संवरस्य भवेत्सिद्धि–श्चारित्रान्महतस्ततः ॥६१९॥ चारित्ररोधको मोह–स्तन्नाशाद्यो गुणो भवेत् । पुरतो मोहनाशी च, चारित्रं स गुणो भवेत् ॥६२०॥ तन्नानुक्तं तपस्तत्र, न च संवरनिर्जरे । साध्यसाधनरूपाणि, सर्वाण्येतानि यन्मिथः ॥६२१॥ मुक्ताः केवलसम्यक्त्व–ज्ञानदर्शनशुद्धभाः ॥६२२॥ न तत्र पुण्य-धर्मादिभिर्युते लोके, आकाशेऽग्रे स्थिता इमे । मुक्ताः केवलसम्यक्त्व–ज्ञानदर्शनशुद्धभाः ॥६२२॥ न तत्र पुण्य-पापे स्तां, न च संवरनिर्जरे । न हि कार्यकरो वह्निः, सिद्धपाके जगत्यपि ॥६२३॥ क्षायिकाः स्वस्वरूपेण, गुणा दानादयोऽपि न । तत्र यत्पुद्गलापेक्षास्ते न सन्त्यत्र सार्थकाः ॥६२४॥ सातं वीर्यं चेति युग्मं, भवे पुद्गल-संश्रितम् । परं तत्रात्मरूपं तद्गुणावेतौ यदात्मनः ॥ ६२५ ॥ पुद्गलोत्थं सुखं वीर्यं, चेति द्वन्द्वं भवे मितं । साधकः कुरुते कार्यं, साधनापेक्ष आश्रितः ॥६२६॥ चक्षुषो लोकने शक्ति–स्तीव्रा तदपि काचसात् । जाता सा काचमानेन, सर्वं वस्तु समीक्षते ॥६२७॥ क्षान्त्याद्याः कर्मणां पाकान्निरुध्य नूतनागमं । कर्मणां निरुन्धन्त्येते, न ह्यण्वीमपि निर्जराम् ॥ ६२८ ॥ तपश्चेन्न पुरा बद्ध–कर्मणां निर्जराकरम् । व्यर्थो धर्मो न मोक्षश्च, क्रमभोगेऽङ्गिनो भवेत् ॥ ६२९ ॥ जीवाः कर्मवशा यस्मा-द्वेदयेयुश्च कर्म यत् । ततोऽधिकं निबध्नीयुः, कर्म कर्मवशंगताः ॥ ६३० ॥ सम्यग्दृष्ट्याद्यवस्थायाः, क्रममाश्रित्य निर्जरा । शास्त्रेऽसङ्ख्यगुणा प्रोक्ता, साऽऽश्रित्यैव बलं तपः ॥ ६३१ ॥ अभिमानो यथा ज्ञाने, दाने विघ्नस्तु कीर्तनम् । ईर्ष्या शीले

तथा पुंसां, सङ्ग्रहेच्छा तपस्यपि ॥ ६३२ ॥ शोभन्ते तपस्तेषां, ये स्युर्मुक्त्येकसाधनाः । प्रापुस्तपस्विनोऽनेके, सङ्ग्रहात् सनिदानताम् ६३३॥ सर्वकालफलं सर्वां, निदानात्प्राप्यते परं । अनुबन्धं व्यवच्छिद्य, ततो दुर्गतिभाग् ध्रुवम् ॥ ६३४ ॥ आरोग्यार्थी यथा भुङ्क्ते, भोजनं यत्तु जीर्यते । तथैव मार्गगाः सन्त–स्तपस्यन्ति शिवाप्तये ॥ ६३५ ॥ यथाऽग्निः सहते घाता–नयस्पिण्डमुपागतः । न च निराश्रयस्यैते, नैव विध्यापनं जलात् ॥ ६३६ ॥ तथाऽऽत्मा सङ्गमुक्तश्चेत् रमारामयोः सजेत् । कर्मजातान् महाघाता–न्स कदापि प्रपद्यते ॥ ६३७ ॥ महामतिनिधिः कर्म–राशौ मोहो महाबलः । संसज्य देहिनः कर्म–कारागारे निपीडति ॥ ६३८ ॥ गत्यादौ जीव आयातो, मूर्च्छत्याहारसञ्ज्ञको । यत्नादापद्यते देहा–क्षादिसम्पादनं तत ॥६३९॥ आजन्ममरणीयान्न–सत्क्रिया जायतेऽङ्गिनां । निराहारस्य सिद्धस्य, देहादिर्बन्धनं न हि ॥६४०॥ स्निग्धस्य रेणुभिर्गात्रे, सर्वतः श्लिष्यते यथा । रागार्त्तस्य देहिनस्तद्वत्, कर्म श्लिष्यति सर्वतः ॥ ६४१ ॥ शुष्के कुड्ये यथा गोलो, न लगेद्दंशमाश्रितः । भवगोऽस्तथाऽमदो, न लगो न लगिष्यति ॥६४२॥ कर्मबीजं तदा जन्माङ्कुरं सृजति देहिनां । अज्ञान-पांशुराशौ ते, सिञ्चन्ति सङ्गवारिणा ॥६४३॥ कर्म मूलं भवो मुख्यो, मुख्या जन्मजरादयः । ईक्षितव्यक्रमीशान्, जीवान् सद्ध्यानवह्निना ॥ ६४४ ॥ सतां क्रोधः प्रणामान्तो, मानो नश्यति सत्कृते । माया नश्यति नश्ये च, सङ्गस्तेभ्योऽपि वर्त्तते ॥६४५॥ ज्योतीरूपो भवेज्जीवो, यदा सङ्गं परित्यजेत् । आत्म वैचिन्त्या साम्यं, सङ्गाद्धोमुखं व्रजेत् ॥ ६४६ ॥ गीतायाः पुस्तके सक्तो, नाभूत् किं कर्पको मुनिः । शेषाः कर्ममला नाश्या, भवखण्डाः स्वण्डशस्त्रयम् ॥६४७॥ मुह्यन्ति नारकाः क्रोधात्तिर्यञ्चस्तु सर्वतः । मायाया मानवा सङ्गात्, मुह्यन्ति स्वर्गगा अपि ॥ ६४८ ॥ भवान्तं विबुधा

याता, दुःखं चिन्तातिगं गताः। संगसक्ता, न निर्भिन्न—यक्षसस्तन्महाद्भुतम् ॥ ६५० ॥ क्रोधो ह्यान्याः स्मृतेर्मानो,
न्यत्कारस्य स्मृतेर्भवेत्। लभ्यलाभस्मृतेर्माया, सङ्गस्तु स्वस्वभावजः ॥६५१॥ बाल्ये ग्लान्ये जराभावे, मरणाग्रं गते नरे।
शाम्येत् क्रोधो गलेन्मानो, नश्येन्माया न सक्तता ॥ ६५२ ॥ सर्वं सुजेयं विदुषां, भवव्याधिकरं परं। क्रोधाद्यं न तथा
सङ्ग-श्छेद्यो यद् गुणयुग्मतः ॥६५३॥ सर्वदोषकरो लोभः, सर्वानर्थप्रदायकः। प्रीत्यादिकाष्ठदावाग्निर्मूलं तस्य तु सक्तता
॥६५४॥ लोभान्नाशयति क्रोधं, मानं मुञ्चति तत्क्षणात्। आविष्कुर्याच्छाठ्यसर्पं, सङ्गः सर्वमुखो भवेत् ॥६५५॥
प्रथमा विकृतिः सङ्ग, आत्मनामपरे पुनः। रत्यरत्यादयो भावा—स्तत्तत्कर्मविपाकजाः ॥६५६॥ सक्तः स्निह्यति रम्येषु,
परथा द्वेषमाश्रयेत्। क्रुध्येन्माद्येत्प्रपञ्चेद्वा, लुभ्येद्वा तदनुक्रमात् ॥६५७॥ यस्मिन् स्यातां प्रेम रुट् च, तत्र प्राक् सक्तता
भवेत्। प्रेम्णि रोषे च लोभाद्याः, प्रवर्तन्ते निरङ्कुशाः ॥६५८॥ क्षमा विनय ऋजुता, मुक्तिः सत्यं शुचिर्यमः। तपश्च न
फलेन्मुक्त्यै, सङ्गसक्ते तु चेतने ॥६५९॥ जायेते रागविद्विषौ, सङ्गात् ताभ्यां क्रुधादयः। ततः कर्माणि कर्मभ्यो, भवस्त-
स्माद्व्यथावलिः ॥ ६६० ॥ आवरणयुगे ज्ञानि—ज्ञानसाधनसङ्गताः। हेतवो ये प्रदोषाद्या—स्तेषां मूलं प्रसक्तता ॥६६१॥
नावर्णादिषु देवाद्येष्वसक्तो ना प्रवर्तते। कषाया अपि तीव्राः स्युः, सदा सक्तात्मनां पुनः ॥ ६६२ ॥ दानादिष्वन्तरायऽ-
गच्छेद्यः स्यात् पुद्गलसक्तिमान्। असक्ते विषये नैव, रागो द्वेषोऽपि वर्तते ॥६६३॥ हानोपादानमाध्यस्थ्य—फला जगति
बुद्धयः। सत्स्वर्थेषु विचित्रोऽयं, सङ्ग आदौ प्रवर्तते ॥ ६६४ ॥ सङ्गेनात्मीकृतेष्वर्थेष्वीहा सत्त्वेतरात्मिका। प्राप्याप्राप्यत्व-
प्रतिभा, ततो हानादिबुद्धयः ॥६६५॥ सङ्गेन स्वजते जीवो, वस्तुषु प्रतिबन्धितः। सदसत्सु ततः सर्व—प्रभुताधारणक्षमः

||६६६|| न तथा सज्जते माता, बाले मोहविमोहिता । बालोऽशोऽपि यथा तस्या, सङ्गसाम्राज्यसङ्गतेः ||६६७|| सङ्गस्य
महिमाऽनून, एव बालो पि लाति यत् । न तन्मोचयितुमीशः, सहसा स्वजनोऽपि हि || ६६८ || इष्टं वा स्यादनिष्टं वा,
कार्यकृद्वा तदन्यथा । अविचार्यैव गृह्णाति, बालः सङ्गविमोहितः || ६६९ || बालस्य नैव विभवो, न चायत्तत्वमर्थगं । न
व्यवस्थाविधायित्वं, तथापि स्वजतेऽखिले ||६७०|| शिशुवृन्दे तथा सज्जेच्छिशुत्वे क्रीडनोत्सुकः । साङ्गदर्थविहीनेऽपि, हित्वा
मोहं कुटुम्बजम् ||६७१|| सहाधीतिकरे याते, बालानां स्वजते तथा । मात्रादिप्रेमरमण-मुखं सङ्गादिहाय च || ६७२ ||
स्पर्शनादीन्द्रियार्थेषु, नोपयोगी मनागपि । अर्थस्तं प्राप्तुमनीश, यतेतासौ तु सङ्गतः ||६७३|| योषायां सज्जते जीव-स्तथा
सङ्गवशीकृतः । मत्तं तातं मोदरायं, स्वजमानोऽपि मुञ्चति || ६७४ || आशां वृद्धत्वमासक्तः, सर्वेष्वर्थेषु मन्तव । आर्तमार-
पूर्यस्तिष्ठेन्नेशः किंचन साधितुम् || ६७५ || कश्चनानेतुमात्मीयं, यौवन व्ययितं पुरा । रसायनेऽपि यतते, वृद्धः सङ्गम-
भावतः ||६७६|| श्वसत्रहोनिशं ग्रस्तो, गदैः प्राणप्रहारिभिः । भैषज्ये भिषजि प्रीणः, मत्तो वृद्धोऽनुताम्यति ||६७७||
मरणोपाग्रमुपेतोऽपि, हातव्यमखिलं विदन् । सङ्गमाहात्म्यतो वृद्धः, सर्वेष्वर्थेषु मुह्यति || ६७८ || महिमा सङ्गभारस्य,
यद्विदन् धर्मसारतां । न न वृद्धोऽपि रूपातु-मीष्टे सांसारिके रत ||६७९|| जानीते सर्व एवाङ्गी, मृते मे नास्ति किञ्चन ।
तथापि सङ्गमाहात्म्यान् ममत्वं नैव मुञ्चति || ६८० || देहोऽयं पदमप्येक, नानुयाति मृतानमून् । तथापि जन्तवः सर्वे,
सङ्गाद्रक्षन्ति यत्नत. ||६८१|| मलैराढ्या यथा ग्राम्य-गन्त्री रम्या त्वचा बहि । अमेध्यैर्विविधैः पूर्णोऽयं कायस्तत्र का
रतिः ? ||६८२|| वैद्यो यदातुरं कायं, शस्त्रैर्विध्यते रोगिणः । अन्तर्गतं जनाः प्रेक्ष्य, किं न मूर्छां ययुः स्वकाः ? ||६८३||

ज्ञात्वैवंविधमात्मीयं, कायं तत्क्षणे यताः । जनाः सर्वेऽधमा नृप, महिमा सङ्गसम्भवः ॥६८४॥ युग्मम् ॥ भवान्तरात्समेत्यैते,
देहं दिहन्ति जन्तवः । रक्षन्त्येधन्त आत्मीयं, मोचनीयं तु सङ्गतः ॥६८५॥ रचितो वृद्धिमानीतो, रक्षितः शोभितः सदा ।
नश्यति द्राक् परः काय, इत्यवन्नपि सज्जति ॥६८६॥ न कश्चिदस्य सारोऽस्ति, धर्मादन्य इति स्मरन् । सङ्गाद्देहस्य नाका-
र्षीत्, तपःप्रभृति धार्मिकम् ॥ ६८७ ॥ क्षय एवायुषो देहो नश्यतीत्थं विदन्नपि । कष्टेऽकष्टे च नाकार्षीत्, सङ्गाद्देहस्य
संयमम् ॥६८८॥ अवश्यमेव मोक्तव्ये, देहे मुञ्चन् समाचरेत । व्रतं यात्रां तपः सङ्गान्, न जीवोऽद्रो महाऽद्भुतम् ॥६८९॥
आदत्तो भाटकेनायं, जीवितेन भवावधि । तथाप्यनेन पुण्यौघः, सक्तोऽज्योऽर्जति नो मनाक् ॥६९० ॥ देहसङ्गप्रसक्तोऽसौ,
पापानां कटुकं फलं । विदन्न तानि त्यजति, सङ्गस्याहो ! महद्बलम् ॥ ६९१ ॥ धर्माधर्मौ पुण्यपापे नीत्यनीती निजेतरौ ।
विदन्नपि नरः सक्तो जीवितान्ते न बोधति ॥ ६९२ ॥ मृता माता चिरातीता, ज्ञायते न क्व चाधुना । न शृणोति न
चायाति, किं सक्तोऽम्बेति जल्पति ? ॥ ६९३ ॥ जानाति कर्म कर्त्तारं, वत्सो गामिव धावति । विपाकवीक्षणेऽन्धोऽसौ,
विषमं सङ्गतोऽकरोत् ॥ ६९४ ॥ शतं सहस्राण्ययुतान्, लक्षा कोटीरपि द्युमं । परतः परतो वाञ्छन्, सङ्गादन्ते विमुञ्चति
॥६९५॥ जिगमिषुः परं देशं, मुहूर्तेन गतो सृजेत् । प्रस्थानं यद्वदर्थस्य, व्ययः सङ्गान्न तन्नयेत् ॥६९६॥ भोगिनः स्वजना
रिक्थेऽर्जके कर्मकृतं फलं । क्लिश्यतेऽङ्गी परार्थेऽयं, सङ्गमूढो दिवानिशम् ॥६९७॥ चौर्याहृतं धनं सर्वो, जनः साक्षाद्
बुभुक्षति । यथा स्तेनो भजेद् दण्डं, सङ्गादर्जन् धनान्यपि ॥६९८॥ कर्मोदयाप्यमेतत्स्वं, लाल्यते सङ्गतोऽनिशं । सङ्गात्प्रेत्यगते,
जीवे, विषया नेन्द्रियाणि न ॥ ६९९ ॥ सङ्गाज्जीवो हृषीकेभ्यः, सुखमीप्सति शाश्वतं । न वेत्त्यत्रापि दुःखानि, शोकाश्च

तत्कृतं फलम् ॥७४०॥ नीयमानो यथा 'वे वे' शब्दं कुर्वन्नजा व्रजेत्। 'मे मे' शब्दं सदा कुर्वन्, सङ्गादङ्ग्यपि जीवति ॥७०१॥
त्यजन्ति भोगिनं भोगाः, सर्वं जानन् समस्ततः। तथापि सङ्गमूढात्मा धर्मज्ञोऽपि स्पृहां वहेत् ॥ ७०२ ॥ कर्ता भुनक्त्ययं
न्यायां, पुत्रः पापे फलेऽस्य च। नार्जकोऽस्ति धने भाक्ते त्यजन् सङ्गाद्विमुह्यति ॥७०३॥ माता पिता स्वसा भार्या,
सोदर्यास्तनयाः स्नुषाः। उपार्जितं धनं घ्नन्ति नैनः किं सङ्ग एषु ते? ॥ ७०४ ॥ सक्त आत्त रजत्येप, रौद्रे तिष्ठत्य-
वास्तिः। हस्तिघाती यथा सिंहः, परार्थमेव चेष्टते ॥७०५॥ सार्धत्रिहस्तमात्रा भूः स्वैकैव शाटिका निजा। मितभाजनमात्राशी,
विश्वं लुम्पति सक्तः ॥७०६॥ मित्रमापत्सु स्त्रीं दुःखे, स्वामिनं व्यसनार्णवे। रक्षणे नृपमिच्छद्भिः, सङ्गात् किं किं न कल्प्यते
॥७०७॥ नार्थो यमस्य घाताय, न स्त्री न स्वजनोऽपि च ॥ न देहो नेन्द्रियाण्यस्य, सङ्गात् सर्वेषु मुह्यति ॥७०८॥
नार्थो जीवितदानाय, क्षमो नाप्यङ्गनाजनः। न वैद्याना प्रजोऽप्यापि, सक्तः सर्वान् समीहते ॥७००॥ सक्ति-
हिंसा न कुत्रापि, यत्ना धर्मेऽपि वर्धिता। निहन्तव्यतमाऽन्ते सा, भवे मोक्षे च साम्यतः ॥७१०॥ क्षमस्तीर्थंकरे
सङ्ग, कर्तुं नैवानुमन्यते। न केवलं गतो वीरे, जीवत्याद्यो गणी यतः ॥७११॥ मरीचिर्दुर्वचोऽवादीत्, सक्तः
काये नृपाङ्गजे। कोटाकोटीर्भवान् भ्रान्त-स्तत्सङ्गोऽनर्थभाजनम् ॥७१२॥ सक्तो ब्रह्मा सवित्र्या स हरो गौर्यां
श्रिया हरिः। रतौ कामो न चासक्तो, विनार्हन्तं जिनाधिपम् ॥७१३॥ निन्द्या हरसमुत्पत्ति, विरञ्चिः पुरतो
गदन्। गुरुणा मङ्गलच्छेदं, शिरसो नाप किं हरात्? ॥ ७१४ ॥ ऋषिकन्या हरो गत्वा, लिङ्गच्छेदं न चाप
किं। संसारगर्तशूकरान्, कास्कान् सङ्गा विभेद न ७१५॥ इन्द्रः समाचरत् सङ्गात्, ऋषिकन्या स्मरातुरः। लेभे

भगसहस्रं प्राक्, पश्चात्तमेत्रतां ययौ ॥७१६॥ नन्दायां सुगतः सक्त–स्तपो दुःखफलं जगौ । सक्तः शिष्येषु विश्राद्धाः,
स्थाने स्थानेऽवमा व्यधात् ॥७१७॥ सक्तः शौद्धोदनिर्मांसे हट्टकारितकल्पितं । विना शेषं हि खाद्यं स, मांसमाह
निरुद्धचित् ॥७१८॥ मते शक्ताः परे तीर्थ्या, अक्ताराय सस्पृहाः । भवे त्यक्त्वा शिवं लब्धं किं न्यूनं सङ्गचक्रिणः ? ॥७१९॥
असून् हिनस्ति सक्तोऽङ्गी, मृषाभाषां मुषिक्रियां । मैथुनं कृषिकर्मादि. करोति न च लज्जते ॥ ७२० ॥
स्वे सक्तो मृगो नष्टस्त्विद्लौल्याच्छलभः खगः । द्विरेफो गन्धतो मीनो. रसात् स्पर्शात्करी सजन् ॥ ७२१ ॥
मोक्षादन्यत्र वाञ्छा न, नेच्छा सर्वज्ञभाषितात् । शुश्रूषा गुरुपादेभ्यः, सक्तः श्राद्धो वधार्थयोः ॥ ७२२ ॥
सर्वज्ञोक्तिसुधापीना, लीना आगमसङ्ग्रहे । हीना हिंसार्थयुग्मेन, श्रमणाः सजन्ति मोहतः ॥ ७२३ ॥ जिनविम्ब-
मतिष्ठायां, मन्वानाः पदमव्ययं । मुह्यन्ति जन्तवस्तस्यां, ध्यात्वा निजगुरुत्स्थताम् ॥ ७२४ ॥ संघे कुले गणे गच्छे,
सक्ता नैके कुसाधवः । शास्त्रोक्तीर्व्यर्थयन्तः किं, नेक्ष्यन्ते दुष्षमाबलात् ? ॥७२५॥ श्रीमतो वीरनाथस्य, शासने निह्नवो-
द्भवः । दुष्षमाकालमाहात्म्या–द्यत् सक्ताः प्रायशो नराः ॥७२६॥ आश्चर्यमपि नाश्चर्यं, साधुवेषंभरा यतः । सङ्गे सक्ता
अधर्माणः, पूज्यन्ते तद्गुणाश्रितैः ॥७२७॥ चैत्यान्यालम्बनीकृत्य. परिहृत्य मुनिव्रतं । प्रपन्नाश्चैत्यवासित्वं, सङ्गतः साध-
वोऽधमाः ॥ ७२८॥ अनाचाररताः सङ्गात्, साधुसन्ततिरोपिणः । घाताय शासनस्यैते, प्रयतन्ते पदे पदे ॥७२९॥ सेवामा-
यतनस्यैते, कुर्वतः श्रावकान् परान् । वारयन्ति बलात्कारं, सङ्गात् कृत्वाऽध्वनश्च्युताः ॥ ७३० ॥ राजादीनां बलं लात्वा,
प्रवेशं नगरे सतां । रोद्धुं सङ्गात् प्रवर्तन्ते, ते दुर्नयरिरक्षवः ॥ ७३१ ॥ चैत्यद्रव्यपरीभोगे, सङ्काशवत् फलं कटु । जानते न

तु मन्यन्ते, सङ्घसंहतितापिताः ॥७३२॥ चैत्यवासे भवेत्साधो-रस्नानस्य मलाङ्गिनः । महत्याशातना सङ्घात्, ते न मन्वते लोलुपाः ॥७३३॥ सावृभिश्रित्य यच्चैत्यं, साधुवासविधायकं । सावद्यं तच्च शास्त्रोक्तं, सङ्गिनो हृदये दधुः ॥७३४॥ जिनानां पूजनं मुक्त्यै, बिम्बानां तत्परं तथा । न मुनेः सङ्घसंसर्ग-रतस्य भवदं तु तत् ॥ ७३५ ॥ उत्थाप्य शास्त्रवाक्यानि, सङ्घमात्रवशंवदाः । स्वमत्या जिनमुद्दिश्य, प्रवर्तन्ते यथा तथा ॥७३६॥ भक्तान् यथा वशीकृत्य, दासानिव नरान् धरेत् । वेश्या तथा चैत्यवासी, गन्धीकृत्य प्रवर्तयेत् ॥७३७॥ न धर्मं न गुरुं देवं, न शास्त्रं न च सद्गतिं । गणयेच्चैत्यवासी हा !, मुनिवेषप्रवञ्चितः ॥७३८॥ शिवभूतिश्च्युतो मार्गा-च्छासनाच्छास्त्रतोऽपि हि । रत्नकम्बलसङ्गेन, हा ! सङ्गोऽतिभयङ्करः ॥७३९॥ नोक्तं यत्तन्माधवेनेति न्यायं नग्न आश्रित । अवमेने सूरिराजोक्तां मक्तः स्थविरकल्पिताम् ॥७४०॥ मङ्गान्मतस्य चक्रेऽसौ, देवं साधुं निरंकुशं । साध्वीलोपमेकमन्धः, पतञ्च शतमुखः पतेत् ॥७४१॥ विजने वसनाभग्नो, नावापाऽऽगममंशतः । सतमङ्गाद्बलोऽवादीभ्रष्टाः सर्वेऽर्हदागमाः ७४२॥ पाश्चात्यैस्तन्मतोद्भूतै-रपेक्ष्यागमसंततिं । कृता तद्धन आस्थाय, शास्त्रमञ्जाप्रवञ्चितः ॥७४३॥ पट्टे भक्तोऽगमत् स्वादी, क्रियां तां वङ्कभेरितां । जिनदत्तो गतः पश्चान्नने यच्चौ दुरात्मनाम् ॥७४४॥ नाड्यां सत्तोऽञ्चलो जातोऽर्थे भक्तः प्रतिमाप्लवः । इत्याद्याः साधुवेषस्था, नैके नष्टाः प्रसक्तितः ॥७४५॥ संभवता गृहिस्त्रीकेषु, भक्तेष्वेके कुसाधवः । व्याख्यासिषुस्त्वपरथा, शास्त्रवाक्यानि तर्कतः ॥७४६॥ मत्वा भयङ्करं सङ्गं, त्याज्योऽसौ धर्मकाम्भिभिः । मोक्षसाध्येषु कार्येषु, श्रेयानुच्छेद्धीमताम् ॥७४७॥ देवे जिने गुरौ साधा-वाचारे सत्क्रियान्विते । शक्तो रागो यतः छन्वा, निर्जरां याति म

स्वयम् ॥७४८॥ न सङ्गमन्तरा पूजाऽर्हतां सेवा गुरुजने। अनुष्ठाने धृति किन्तु, नान्यथा तस्य ग्रातनम् ॥७४९॥
तैलं यथेङ्गुदीजातं, जग्धं निष्काश्य दुर्मलं। वह्नियाति स्वयं तद्वच्छस्ता सक्तिर्जिनादिषु ॥७६०॥ सङ्गः संगस्य
द्वेषश्च, द्वेषस्य वरमौषधं। अतो धर्मार्थिभिर्विज्ञैः, सेविता शस्तसङ्गिता ॥७५१॥ एवं च देवपूजायाः, सेवायाश्च गुरोः
पदोः। दानादेश्च फलख्यायी, नात्येति श्रेय उद्गतिम् ॥७५२॥ निर्मलं न भवेद्वस्त्रं, क्षाराम्भोभिर्विना क्वचित्।
मलविद्धं तथा जीवा, बद्धाः संगमृते शुभम् ॥७५३॥ न यथा मलिनं वस्त्रं, क्लिष्टं वारि विशोधयेत्। बद्धं
जीवं तथा कर्म–हेतुः संगो न मोचयेत् ॥७५४॥ त्याज्यः संगस्त्रिभेदोऽसौ, दृष्टौ कामे च प्रेमणि। धार्यो
देवे गुरौ धर्मे, यत्तन्नाशौषधं सकः ॥७५५॥ मिथ्यात्वोदयतः सक्तो, भवभ्रान्तिप्रदे मते। गत्वा प्रेत्य
तत्पुष्टि–मज्ञो ज्ञो वान मुञ्चति ॥७५६॥ सक्ता मिथ्यात्वसंस्कारे, स्यान्मतिः स्वाग्रहात्मिका। यथा शास्त्राण्य-
शास्त्राणि तर्कितंकेन किं न हि ॥७५७॥ जीवमेवापवदते, पुण्याघाश्रवसंवरान्। सक्तो रमेत कामेषु, तन्मात्र
साध्यतां गतः ॥७५८॥ भ्रान्तबुद्धिः समानर्थानजानानः स्वभावतः। असच्छास्त्रैः सदा सक्त, ईशं कर्तार-
माश्रयेत् ॥७५९॥ दुःखदौर्गत्यदुर्योनि–जन्ममृत्युजराविलं। सक्तोऽमते तनोतीशो, लोकं ब्रुवन्न लज्जते ॥७६०॥
सुखिनोऽल्पासवः स्वल्पाः, प्रचुरा दुःखभाजिनः। तथाप्येनं करोतीश, इत्युशेत्सङ्गसाधितः ॥७६१॥ स्वतन्त्रेण समर्थेन,
काले नैतावता जगत्। सुखीकृतं न तेनेदं, सक्त ईशं श्रयेत्पुनः ॥७६२॥ पापे जीवं प्रणोद्यादौ, कुर्याच्छिक्षां
पुनः स्वयं। चौरकोट्टकन्यायं स, सक्तो नयति सष्टरि ॥७६३॥ शान्तो दान्तो मुमुक्षुश्च, स्याच्चिदानन्द-

रूपभाक्। भुवन्त इति सङ्गात्ते, तीर्थ्यनिष्टं तथा जगुः ७६४॥ देवं गुरुं तथा धर्ममात्मकल्याणहेतवे। श्रयेऽन-स्तथोक्त्वाऽपि, सक्तस्तान् भजतेऽतथान् ॥७६५॥ देव गुरुं तथा धर्मं, नाभव्यः कुत्सितं श्रयेत्। शिवास्था-हीनचित्तत्वात्. सङ्गादन्येऽतथान पुनः ॥ ७६६ ॥ ब्रह्मादिषु न चैकोऽपि, हित्वा संसारचारकं। संन्यस्तः स कथं ध्येयो, विना संगान्मुमुक्षुषु (क्षया) ॥ ७६७ ॥ माया ससारवासोऽयं, पाशो दावो महोदधिः। चेषु तत्याग आसेव्ये, को विघ्नः सङ्गमन्तरा ? ॥७६८॥ देवं गुरुं तथा धर्मं, श्रये मोक्षस्य लब्धये। मत्वेति तत्कृतावर्थस्थ्यादीच्छा सङ्गजाऽऽलात् ॥७६९॥ देवपूजागुरूपास्ति–तपांसि प्रत्यहं चरन्। व्यर्थयेत् सगमन्विच्छन्गे मोक्षार्थकान्यपि ॥७७०॥ चारित्रं दुष्करं श्रित्वा, नाभव्यो लभते शिवं। काङ्क्षाऽभ्युदयिकी सङ्गान्, न तच्चेतो जहाति यत् ॥७७१॥ भूयांसो मोक्षगन्तारा, जीवाः संगसमाश्रयात्। ग्रनमाचर्य मोक्षार्हं, भवेऽनन्तश आगताः ॥७७२॥ कर्मक्षयार्थमाम्नाता–श्चिभा विधय आगमे। सक्तैः सर्वा विपर्यास्य, क्रियन्ते द्रव्यरूपतः ॥ ७७३ ॥ निर्धार्य सङ्गव्याप्तित्व–माम्नात श्रुतसागरे। यावन्तः साधका मोक्षे, यागास्तावन्त आश्रवे ॥ ७७४ ॥ चित्रं धर्मकजीवानामाश्रवास्ते परिश्रवाः। विपव्याप्त्याऽखिलं भक्तं, विप सक्तेस्तथाऽखिलाः ॥७७५॥ गुणारोहे यथा वृद्धि–र्गुणानां निर्मलात्मनः। सक्तेस्तथा भवेद् हानि–र्विपरीत-स्थितिर्गुरुः ॥ ७७६ ॥ सक्त, आरम्भसक्तः स्यान्, मत्यादिप्राप्तिवर्जितः। यतो हीनस्य तत्प्राप्ति–र्दाभ्यामाभ्यां प्रगीयते ॥७७७॥ अतिसक्तः कदर्यः स्यान, निर्ग्रन्थादपि शङ्कितः। नैर्ग्रन्थं शासनं श्रोतु, स्वप्नेऽपीष्टं न धारयेत् ॥७७८॥ चैत्यद्रव्यं कदर्य मन् नैव देवार्चने व्ययेत्। वर्धयेत्वाविधि कृत्वा, हा ! सक्ति किं करोति न ॥७७९॥ सक्तः परस्वमादाया–न्यायै-

नार्पजिनादिषु । तदयुक्तमिति प्रोक्ताऽर्थशुद्धिश्चैत्यकारिणः ॥ ७८० ॥ सक्ता भगवतां चैत्यं, कारयन्नतिसन्धयेत् । कारू-
स्तदूभृतकानभि–सन्धानं गदितं श्रुते ॥७८१॥ सक्तोऽर्चां जिनविम्बानां, कुर्वन् लोभात् सुमादिभिः । वञ्चयेन्मालिकादीं-
स्तदुक्तो न्यायागमः श्रुते ॥७८२॥ साधूनां संविभागं स, सक्तः कुर्वन् परं दिशेत् । स्वामिनं स्वस्य हा ! कष्टं, सक्तः कां
न दिशं व्रजेत् ॥७८३॥ प्रत्यहं यन्नमस्कार–सहितादिकमाहृतं । शेषं भुङ्क्ते परान् दत्वा, तदाऽसक्तस्य शुद्ध्यति ॥७८४॥
दुःखशय्या यतीनां सा, परार्थे यत्र लुब्धता । सा सक्ताचितरा त्वन्या, शुभाशुभगतिप्रदे ॥७८५॥ सक्तो देहे रसे ऋद्धौ,
स्थाने सङ्घे सभक्तिके । द्रङ्गनिर्धमने जातः, सूरिर्यक्षो न किं श्रुतः ? ॥ ७८६ ॥ देवो विकाररहितः, सक्त्या प्राच्यभव-
स्त्रियां । स्वबीजे जायते हा धिक् !, सक्तेः कष्टकरीं दशाम् ॥७८७॥ आराधना जिनादीना–मार्हन्त्यपददायिनी । सा चेत्
सक्तिमलिना स्यान्न शस्या श्रुतशालिनाम् ॥७८८॥ विनिर्माय जिनाधीश–चैत्यं तद्भक्तिसादरा । दोग्ध्री पराभ्य उत्पन्ना,
सत्त्या राज्ञी न किं शुनी ? ७८९॥ ईर्ष्यादग्धौ मुनिप्रष्ठौ (बाहुः सुबाहुश्च मुनी) गिरा सूरीशदूषकौ । जातौ स्त्रीत्वेन सक्त्या क्राऽ-
नर्थो लोके न सज्ज्यते ॥७९०॥ आसक्तस्य मुनेः सक्ति. नाशितुं श्रावकोत्तमैः । स्तैन्यं किं कृत्रिमं (न मुधा) कार्यं हा !
सक्तेर्दुष्प्रतिक्रिया ॥७९१॥ सक्तश्चेत्साधुरागच्छेत्, क्षिप्तचित्तादिकां दशां । नृपोक्त्वाऽपि प्रशास्यः स्यात् किं (का) न
सक्तेर्दुरात्मता ? ॥७९२॥ यदर्थजातं प्राक् क्षित्यां, क्षिप्तं तद्ग्राह्यतां व्रजेत् । मुनीनामर्थसक्तानां. तुष्ट्यै सक्त्यै धिगस्तु
तत् ॥७९३॥ सङ्गे हते हतं सर्वं, सैन्यं मोहप्रभावजं । नतिं कुर्वन्ति तत्सन्तो, वीतरागाय मङ्गले ॥ ७९४ ॥
निहत्य सर्वकर्माणि, नरः सिध्यति चिन्मयः । सक्तेर्माहात्म्यमुद्गातुं, हतमोह इतीर्यते ॥ ७९५ ॥ दुःखमूलं

भवस्तस्य, मूल कर्माणि यद्यपि। तथापि सक्तिदौर्गत्यान्, नि सङ्गो मुक्त उच्यते ॥ ७९६ ॥ नाशरीरो
भवो न स्याद्-सङ्गस्य शरीरिता। हानं सर्वशरीराणा, सक्तेर्मुक्तेः क्षणे मतम् ॥ ७९७ ॥ असङ्गस्यैव महिमा,
यत्तिष्ठन् कर्मराशिषु। सिद्धो न लिप्यते लोके, कांस्यपात्री यथा जले ॥ ७९८ ॥ चक्री चक्रित्वमुज्झित्वा,
यथाकत्या व्रतमाश्रयेत्। सङ्गस्य महिमाऽपूर्वो, न पार्श्वं द्रमकस्तया ॥ ७९९ ॥ महीमुज्झितुमुद्यच्छे-चक्री
परं न सक्तिमान। पार्श्वस्थता श्रुति लब्ध्वा, संगसाधितफलप्रः ॥ ८०० ॥ आहारमादितो गृह्णन्, सक्तेस्तन्वा-
दिषु ततः। सजेज्जीवो भव भ्राम्यन्ननाहारः स्वरूपभाक् ॥ ८०२ ॥ न कर्माणि स्वकं कार्यं, प्रभविष्णून्यशरीरके।
नैराहारेऽप्रसक्तस्य, शरीराणि भवन्ति नु ॥८०३॥ अस्ति धर्मादिभिर्योगः, शाश्वतश्चेतनावत। स्यात्सक्तिः पुद्गलैस्तैश्चास्रव
क्षिप्यन्त आश्रवे ॥८०४॥ सिद्धा न भवमायान्ति, न च भ्राम्यन्ति संसृतौ। असंगत्वात्तत सर्वा, व्यथाः सङ्गसमुद्भवाः ॥८०५॥
परैरभिमता ईशा सक्ता भक्तयेरुजीरनाः। वाल्हास्यकरीः काः का, दशा नापुर्विगर्हिताः ॥ ८०६ ॥ प्रकाश्य गुरुता
लोके, गुरवोऽपरतीर्थिकाः। प्रत्यक्षमनमा लोके, सक्ताः किं नो भवन्त्यमी ? ॥ ८०७ ॥ सङ्ग एव हि संसारो, मुक्तिः
संगवियुक्तता। चिन्तयित्वेति धर्मार्थी, सङ्ग च्युत्सृजति त्रिधा ॥८०८॥ हित्वा क्रोधं मदं माया, लोभं चाश्रित्य मुक्तं।
सशौचसयमं धृत्वा, तपः सङ्गं विवर्जयेत् ॥ ८०९ ॥ अमुना परमेणाह्वि, परिणामाः शुभाशुभाः। जायन्तेऽन्तः स्थिरस्तेषु,
स्याद् गुरोः पादसेवया ॥८१०॥ जातशुभोदयाजन्तो-रशुभा जायते मतिः। कुले गुरोर्विमज्जीघ्रः, शुभा याति गुशिक्ष-
णात् ॥ ८११ ॥ परिणामे शुभे प्राप्ते, पुनराचारमाश्रयेत्। एकस्याचारनाशः स्याद्दुर्लभे सम्पत्तिविशे ॥ ८१२ ॥ अतो

गणभृतोऽप्याहु–र्गुरोः पादाब्जसेविभिः । श्रुतं तत्कथ्यतेऽस्माभिः, श्रुत्वैतद् गुरुमाश्रय ॥ ८१३ ॥ अतो गुरोः कुले वासो,
ब्रह्मचर्यमितीरितम् । भाष्ये श्रीमदुमास्वाति–वाचकैः सूक्ष्मबुद्धिभिः ॥८१४॥ अब्रह्म–मैथुनं तस्य, त्यागो ब्रह्म किलेष्यते ।
तस्मै चर्यं ब्रह्मचर्य–मित्याम्नातं मुनीश्वरैः ॥८१५॥ यावद्वासो गृहस्थत्वे, तावत्पापचयागमः । स्वकुटुम्बपुपे नित्यं, कृषि-
वाणिज्यसेविषु ॥ ८१६ ॥ अनादितो भवे भ्रान्तो, योगैः करणैस्त्रिभिस्त्रिभिः । पापस्थानानि चक्रेऽङ्गी, कर्मावरणवेष्टितः
॥ ८१७ ॥ यावत्त्यजति नैतानि, तावत्तेभ्योऽह आगमः । गृहाश्रमस्य चेत्त्याग–स्तानि व्युत्सृजति तदा ॥८१८॥ श्रमणो-
पासके धर्मे, क्रियते विरतिर्लघु । कुटुम्बादिकृते घोरे, पापे सङ्गस्तदापि हि ॥ ८१९॥ श्रामण्यप्रतिपत्त्या तत्, त्याज्येयं
गृहमेधिता । न्याय्यं मतं न विरत–स्तावदेवाघबन्धनम् ॥८२०॥ चोरः सुप्तो यथान्यार्थ–हृतौ योगक्रियोज्झितः । तथापि नो
भवेत्साधु–रेवं च गृहितां श्रितः ॥८२१॥ सन्त्यष्टादश पापानां, धामान्युक्तानि तीर्थपैः । कार्यकारणरूपाणि, पञ्चाद्यान्येव
तेषु तु ॥८२२॥ शस्त्राणां विगमे सैन्यं, प्रचण्डमपि निर्बलं । तथात्रपापपञ्चक–नाशे सर्वाघहेतवः ॥८२३॥ पञ्चाव्रतान्यतः
प्रोक्ता–न्याश्रवेषु निरुध्यता । यत एषु ततो न्याय्या, मुनेः पञ्चतयी व्रते ॥ ८२४ ॥ तत्राप्यर्थो वधश्चेति,
द्वौ मुख्यौ तत उच्यते । प्रव्रज्या त्याग आरम्भा–र्थयोः शास्त्रे मनीषिभिः ॥८२५॥ कराप्ता न भवेदेषा, न च पाल्याऽप्य-
शिक्षितैः । अस्मत्पदाङ्कितः पाठ, एक एव च सूत्रगः ॥८२६॥ शिष्याय तां गुरुर्यच्छेत्, तत्र प्राक् प्रतिबोधनं । अस्नाने
गोचरेऽचित्त–भोजने लोचकर्मणि ॥ ८२७ ॥ स्वीकृतेष्वेषु दीक्ष्यः स्यात्, मुण्ड्यो मुहूर्त्त आगते । शुभेऽतः कथ्यते भिन्न,
आदेशो मुण्डने मुनेः ॥८२८॥ एवं गृहीतदीक्षः सन् नावैति पिण्डगोचरां । विशुद्धिं तत आनीय, शुद्धं पिण्डं ददौ गुरुः

॥ ८२९ ॥ आये शस्त्रपरिज्ञाध्येऽधीते षड्जीवकायिके। तुर्ये दशवैकालिके गोगोद्वहनाङ्कितसत्क्रिये ॥८३०॥ ज्ञातेषु षट्सु
कायेषु, श्रद्धितेषु परीक्षया। परिहारे वधादीना, स्यादुपस्थापना मुनेः ॥ ८३१ ॥ अन्यथा यद् भ्रमाद्दिक्षामन्यं वा ऽऽचार-
माश्रयत्। असूनां स विराद्धा स्याद्, गुरुशिष्यौ सदोषिणौ ॥८३२॥ महाव्रतेषु सर्वेषु, गृहीतेषु विमुक्तये। यतनीयं यथा
न स्या-दतिचारोऽतिपातकः ॥ ८३३ ॥ शैवाल्परन्ध्रमदक्षः, क्षयोपशमसम्भवः। परिणामोऽत्र उद्भावोऽतिचाराणां मुनेरपि
॥८३४॥ साक्षीकृत्य गुरुं तस्मिन्, शोधिते पुरतो न हि। गतशङ्का प्रवृत्तिः स्याद् गुरुनोदनभीतितः ८३५॥ एकाकिनो
भवेदाद्या-यतिचारे मनो घृणा। पश्चाद्भिः शिक्षिता गत्वा, निर्भीकस्तं समाचरेत् ॥८३६॥ तमूलं ब्रह्मचर्यं तु, भवेद् गुरुकुलो-
पितैः। एकाकित्वं मतीतं यत्, काममूलं तु पण्डितैः ॥ ८३७ ॥ धर्मा दशापि संशुद्धा, गुरुकुले निवासिनः। भान्त्यादयो
नियोज्या न, यनेऽप्येकान्तवासिनः ॥८३८॥ स्वान्यतीर्थिकवार्यादेः, गहने कथिता श्रुते। मुक्तिदाऽऽराधना सर्वा, गुरो-
र्वसेत्तत कुले ॥८३९॥ तिरश्चां न हि चारित्रं, महाव्रतेषु सत्स्वपि। इच्छाकारादिभावेन, न चातस्तद्गतो शिवम् ॥८४०॥
वासे गुरो कुले सर्वाः, सामाचार्यो भवन्ति हि। ततो मुक्त्यर्थमातिष्ठेद्, यावज्जीवं गुरोः कुले ॥८४१॥ एकाकिनोऽपि
यत् पाप-कामत्यागेन विद्यते। निहाराशा, सका यस्मात्पदे नात्सर्गजे मता ॥ ८४२ ॥ मद्वचनाय गुरोः कुले, वासस्य
गणधारिभिः। ब्रह्मचर्याभिधा प्रोक्ता-ऽऽचाराङ्गस्य शाश्वती ॥ ८४३ ॥ गुरुं निश्राय यद्यं स्यात्तपो निर्ग्रहणात्मकं।
निष्ठापनं स्वयं तस्य तथाचार्याश्रयं समम् ॥ ८४४ ॥ तपः कर्मक्षयायाल-मान्तरं तद् गुरुश्रितम्। आरम्भान्तो यतस्तस्य,
गुरोः पादान्तिके शुभौ ॥८४५॥ गुरवे भक्तमाप्यं स्व-मुदरं यः प्रपूरयेत्। दैनिकं तस्य शुद्धं स्यात्, प्रत्याख्यानं न चान्यथा

॥८४६॥ पाठशालानिभं जैनं, शासनं देशितं जिनैः। शिक्षा च सिद्धिसाध्याऽर्च्या, देशिता जिननामतः ॥८४७॥ शिक्षकाणां
यथाऽभावे, पाठशाला यथाऽफला। तथा सिद्धिपथोऽभावे, गुरोर्वासात्कुले विना ॥ ८४८ ॥ अर्थाभावे समं सूत्रं, निःस्वादं
रेणुपुञ्जवत्। अनुयोगकृतो मुख्या, आचार्या गच्छवासिनाम् ॥८४९॥ विना सूत्रं तदर्थानां, ग्रहोऽबद्धो मणिव्रजः। यथा त-
थाऽत्र सूत्राणां, ग्राहका वाचकाः स्मृताः ॥ ८५० ॥ शैक्षा ग्लाना जराजीर्णा, असहा धृतिवर्जिताः। मोक्षवर्त्मानुयान्त्येव,
सहायैः साधुभिर्वृताः ॥ ८५१ ॥ तदेवं गुरुतन्त्रस्या–राधना मोक्षगामिता। वसतो गुरुकुले स्या–द्तो धर्मोऽयमन्तिमः
॥ ८५२ ॥ सैन्यं जयार्थमुद्यच्छ–द्यथाऽऽदेशं चमूपतेः। वर्त्तते प्राप्य नर्ते तं, गुरोर्वाक्यं तथा मुनिः ॥ ८५३ ॥ स्वच्छन्दाः
सैनिका नष्टा, अबद्धा अभिमानगाः। गुरुतन्त्रः सधर्माचोंऽमानो गुरुकुले वसेत् ॥८५४॥ बहुमानयुता भक्ति–र्लज्जा प्रीतिः
सदा मुनेः। गुरुसेवाफलं वासे, लता कल्पस्य का परा ॥ ८५५ ॥ स्वस्यासिर्न गुरुत्वस्य, क्षीणमोहत्वभाविनः। याव-
त्तावद्भवेत्साधुर्गुरुतन्त्रोऽन्यथाध्वने ॥ ८५६ ॥ सामायिकं समस्तानां, गुणानां बीजमुच्यते। आदावन्ते च भंतेऽस्य, पदं
सम्बुद्धये गुरोः ॥८५७॥ सामाचारीच्छाकारादि–र्विनयादिगुणादरः। गुरुतन्त्रः सदा साधो–र्मोक्षमार्गप्रसाधनम् ॥८५८॥
दिनं रात्रिमहोरात्रं, श्रावकः पौषधं सृजन्। बहुवेलेन तन्त्रं स्वं, त्यजेत् किं न तदा मुनिः ॥८५९॥ वृतिर्यथा पशूनां स्या–द्भ
स्वातन्त्र्यभिदेऽवनात्। सिंहादिभ्यस्तथाचार्यः, साधोः कर्मभयावनात् ॥ ८६० ॥ स्वाच्छन्द्यं न हि धर्मोक्तौ,
गोचरे दीक्षणे पदे। साधोर्यदुच्यते प्राच्या–चार्यमार्गानुवर्तनम् ॥ ८६१ ॥ मुनिर्मोक्षाध्वपान्थः स्यात्, मोक्षाध्वा
शास्त्रसाधनः। शास्त्राण्याचार्यसात्तस्मादात्मानं विनयेद्गणे ॥८६२॥ आरोग्यार्थी यथा वैद्य–प्रोक्तां नातिव्रजेत्क्रियाम्

आत्मशाश्वतसौख्यार्थी, मुनिः सूरिं न किं श्रयेत् ? ॥८६३॥ बलाधिपवचःप्रेक्षी, योधः परमया दिशा। आचार्य-
वचनापेक्षो, मुनिः धर्मरिपुं जयेत् ॥८६४॥ उत्सर्गान्यविधानानि, चारित्राद्यप्रसाधनं। धुरां तीर्थस्य भर्तुं स्यात्,
क्षमो वाक्ये गुरो रतः ॥८६५॥ वचो यदि विचार्यं स्याद्, ग्राह्यं सद्गुणोदितं। महिमा यो गुरोर्गम्यं, गृह्यतेऽन्यस्य
सम्मतम् ॥८६६॥ गङ्गा कुतोमुखी याती-त्यादेशे प्रतिपित्सुना। गुरोर्यथाऽनगारेण, यत्नस्तद्वत्परैरपि ॥८६७॥
आचार्यस्य वच प्राप्य, गणयाऽहेस्दावर्त्मी। इति तत्करणोद्योगी, यतीन् गुम्फीरत ॥८६८॥ गुरोः कुले
वसन् साधु-र्व्रतानि परिपालयेत्। स्खलनात्करणे स्याद्, मतानां लोपको गणे ॥८६९॥ श्रुत्वा
गुरोर्विजानीते, जीवाजीवावथेतरे। बन्ध मोक्षं गतीश्चिरा, निर्वेदशमसंयमान् ॥८७०॥ न ज्ञानस्यागमः
स्थैर्यं, न, वृद्धिर्न च पाठनं। तत्रान्येपिलप्रभव-मेदकार्यं गणाद्विना ॥८७१॥ प्रभावकानि सम्यक्त्वे, शास्त्राणि
स्थापयन्ति च। गुरोश्च कुले साधोः, सिद्धान्तोदधिगाहनम् ॥८७२॥ अनुपासितगुरुः शैक्षः, शिक्षितोऽपि
मधुरवत्। अगुप्तगुह्य उद्दामः, सतामायाति गर्हनाम् ॥८७३॥ अयत्नजो यथा पालो, दुर्गनिम्नसरस्तथा। धर्मस्तद्धारकः
शिक्षा-साध्यो धर्मो गणे हि सा ॥८७४॥ क्रुद्ध प्रजपयेत् सूरिः, मर्षे संवत्सरावधि। प्राभृतं त्याजयेत् स्वान्य-
पक्षवर्तिजने भनम् ॥८७५॥ रत्नाकराभमीक्षित्वा, गणं कीर्णं गुणर्द्धिभिः। तद्वर्ती न मदं याति, प्रदीप्तिनं
स्वेस्त्विपि ॥८७६॥ न दृष्ट्वा परिदं शाना, शठो न स्यात् प्रपञ्च्यपि। नद्युन्नते रवौ चौरा, अटन्ति स्वेच्छया
भुवम् ॥८७७॥ गणे लुभ्यन्मुनिर्निर्मम-स्तमर्थं नाशयेद्धणी। नग्नाऽस्य यथा मूर्च्छा-नाशायाच्छेदि कम्बलः ॥८७८॥

प्रतिबोध्य घनं भव्यान्, शालीन् पञ्चेव रोहिणी ॥ ८७०. ॥ सद्गुरु
व्रतान्यादाय मेधावी, सूरेस्तानि प्रवर्धयेत् । प्रतिबोध्य घनं भव्यान्, शालीन् पञ्चेव रोहिणी ॥ ८७० ॥ सद्गुरो
जन्तुर्गतीश्रिता, ज्ञात्वा जगदनायकं । समुद्धर्तुं सदेहेत, तच्च नैर्ग्रन्थशासनात् ॥८८०॥ उद्देशादीन् श्रुतस्याप्य, गुरोस्तद्गणमो-
क्षणे । गणे स्थित्वा परान् दद्यो–द्यच्छेन्मार्गप्रसिद्धये ॥८८१॥ अत एवोच्यते सद्भिः, सूत्रस्योद्देशनादिषु । क्षमाश्रमणहस्तेनेति
सूत्रणमोक्षणे ॥८८२॥ किञ्चोद्देशादिकालेऽपि, परस्मै दानहेतुता । उच्यते सर्वमेतद्धि, स्याद् गुर्वाज्ञावशंवदे ॥८८३॥ मङ्गल-
त्रितये प्रान्त्यं, मङ्गलं शास्त्रगोचरे । परम्पराविभेदस्याभावाय स गणस्थितेः ॥८८४॥ भगवान गौतमो नन्तुं, चैत्यमष्टापदे
नगे । जिगमिषुः प्रभुं वीरं, पप्रच्छैषोऽपरे नयः ॥८८५॥ हालिकस्य प्रबोधाय, परस्य क्षेत्रवापने । वीरादिष्टो गतो
किं न ?, गुर्वादेशे न तर्कचित् ॥८८६॥ गतोऽग्निशर्मबोधाय, गौतमो वीरनोदितः । निर्वाणावसरेऽप्येप, गुर्वादेशो
नयः सताम् ॥८८७॥ वालं सूत्रं चिकुट्टं तं, वज्रं वाचनहेतवे । आदिक्षद् गुरुरादत्तं, तथेत्युक्त्वा मुनीश्वरैः ॥८८८॥
महाव्रतादिरक्षार्थं, ज्ञानादीनां विवृद्धये । कपायरोधनाशाभ्यां, वासो गुरुकुले हितः ॥ ८८९ ॥ फलान्येतानि सम्प्रेक्ष्य,
गुरुवासान्विते मुनौ । धन्यो यावज्जीवं नैव, गुरूपास्ति मुनिस्त्यजेत् ८९०॥ अशिष्यस्य न शिष्याः स्यु–स्ततस्तीर्थानुपञ्जना ।
गुरूपास्तिस्ततस्तीर्थे, मूलं मत्वा निषेव्यताम् ॥ ८९१ ॥ रूढ्या यन्मैथुनत्यागो, ब्रह्मचर्यतया मतः । स संयमे गत इति,
मत्वाऽत्राधिकृतो न हि ॥८९२॥ मैथुनं ह्येकशः कुर्वन्, हिंस्याल्लक्षा नृणां नव । गर्भजानामसङ्ख्येयैर्सम्मूर्छिमैरपि (:मद्य)
मानुषैः ८९३॥ नासक्ता भुज्यते नारी, ततो मध्यमतीर्थिकैः । वह्निधार्थं परिष्कृत्य, त्यक्ता सङ्गविवर्जनात् ॥ ८९४ ॥
निर्ग्रन्थीनां सम्भवो न, परम्ब्रह्मसमुच्चः । नान्यकारण (साधन) जन्मा च, परं तद् व्रतानि द्वयम् ॥ ८९५॥ अतोऽनुक्त्वापि
प्रसङ्गो गणे...

शेषाणां, व्रताना स्थानकान्यल । ब्रह्मचर्यसमाधेस्तु स्थानान्याहुर्गणेश्वराः ॥ ८९६ ॥ कर्षुका उप्तवृद्धानि, रक्षन्ति वृतिहेतुना । धान्यानि जगतीस्थानि, तथा ब्रह्मापि तद्विधेः ॥ ८९७ ॥ यथा पतत्रिणो धान्ये, पशवश्च स्पृहान्विताः । आपतन्ति तथा ब्रह्म-भङ्गाय परयोषित ॥८९८॥ धृत्या तद् दृढया रक्ष्य, ब्रह्म सा च विवेकिनी । वृतिभिर्नवभिर्युक्ताऽन्यथा धार्ष्ट्यप्रदर्शिनी ॥ ८९९ ॥ युग्मम् ॥ संसक्ता वसति याथदेश योषाजनादिभिः । एकसाध्याश्रिता शय्या, ते वाऽधिष्ठाय मेयुति ॥९००॥ आगन्तुका वसंनीं थालं स्त्रि नैकः क्षमो भवेत् । निषेद्धुं स्यात्स्वयमपि, मन्मथार्पितचेतनः ॥ ९०१ ॥ विशेदुत्कुल सा न, बहिर्निष्काश्यते मुखं । न मनोऽपि स्मरार्त स्यात्, स्मरो यत्र जनाकुले ॥९०२॥ उपसर्गधिया योषो-पस्तब्धु न गणस्थितं । शक्नोति त्यक्तलज्जापि, लज्जास्त्यपि सरक्षम् ॥९०३॥ उत्सर्गस्थो गुहाद्वारे, मासान् यश्चतुरोऽवसत् । सोऽप्येकान्तं गतो वेश्या, किं न कामाय कान्तवान् ? ॥९०४॥ यस्तु गणस्थितः साधुः, क्षमः स्याद् वृतिरक्षणे । अतो ब्रह्मव्रतार्थी स-श्रित्य गुरुकुलं श्रयेत् ॥ ९०५ ॥ स्वाध्यायध्यानविघ्नेन, कर्तव्या धार्मिकी कथा । पैशाचिकस्य सद्भावः, ख्यानेन यमयोजने ॥ ९०६ ॥ या यः स्याद्बाधका दोष-लक्षास्ते ये धुरन्धराः । तेषा ज्ञातानि दृष्टान्ताः, स्मार्या येन भवेन्न सः ॥९०७॥ विधिनिषेधरूपाणि, शास्त्राणि यतय स्मृतौ । यो न स्यादात्मनः स्थैर्ये, लाभः सैककथानकात् ॥९०८॥ अतः कथानुयोगस्या प्रयोग आदिम श्रुते । गण्डिकाद्यनुयोगोऽपि, मत आख्येयताऽऽस्पदम् ॥ ९०९ ॥ चरणाद्यनुयोगेषु, कल्पितं दोषहेतवे । कथा तु कल्पिता प्राह, द्रुमपत्रे जिनोऽपि हि ॥९१०॥ अन्यथाऽनुपपन्नत्व-मन्तर्व्याप्त्या प्रसाधकं । न्यायनिष्ठस्य लोकस्तु, दृष्टान्तान् साध्यसाधकः ॥ ९११ ॥ अतो बुद्धिप्रभेदाना, दृष्टान्ताः श्रुतईरिता. । इतिहासतः कुलीनाना, प्रमाणभूमिमापतन्

॥ ९१२ ॥ ज्ञातधर्मकथाद्यङ्ग-श्रुतान्याख्यानभाञ्जि तु । शाश्वताङ्गेऽप्यनित्यानि, दृष्टान्ते नूतने रसात् ॥ ९१३ ॥
कथा च सद्वितीयानां, गणेऽनघाः कथास्ततः । एकाकिनोऽङ्गभूताः स्युः, कथायां गृहमेधिनः ॥ ९१४ ॥
पुंमासोऽक्षणिका शृङ्गारादिकथासक्ताः, गृहिणस्तन्मुनेरपि । एकाकिनः प्रसङ्गः स्या-त्तद्विधासु कथास्वलम् ॥९१५॥
आरभ्य धार्मिकीं योपाः, समायान्ति कथाश्रुतेः । एवं चैकाकिनः स्त्रीभिः, साधोर्वार्तादृतिः स्फुटा ॥९१६॥
मुग्धः कथासु काम्यासु, वार्तां, प्रसाद्य मुनिभावनां । अन्ततः काममुग्धास्ताः, कथाः काम्याः लपेयुराः ! ॥९१७॥
वृतिरेवं द्वितीयैषा, स्त्रीकथावर्जनात्मिका । मुनिरेको वहिर्व्रजेत् । प्रसङ्गो नैष सत्साधोर्गुरुकुले (पार्श्वे) निवासिनः ॥९१८॥
मार्गं यान्त्याः स्त्रियाः पश्ये-देकोऽङ्गानि विमोहतः । परासुरक्ष्या तस्य यस्तिष्ठेद्, गणे संयमकाम्यया ॥९१९॥
ईक्षिते स्निग्धया दृष्ट्या, वामाङ्गे मानसो मदः । शतशाखो भवेद् रुद्धं स्फुरेन्नेत्रं, मोहो यन्मन आक्रमेत् ॥९२०॥
उदीर्णे च मनोजाते, कामे भङ्क्त्वा विवेकितां । शतधोन्मार्गमाप्नोति, तत्राश्चर्यकणो भ्रंशोऽस्मात्साधोर्मोक्षवर्त्मनः ॥९२१॥
न हि ॥९२२॥ गणस्थो युगमात्रेक्षी, साधुभिर्वृत उत्तमैः । दृष्टिं संहरते सद्यो, वामाङ्गे क्षणसङ्गिनीम् ॥९२३॥
न च स्थितिं निबध्नाति, योषा साधुगणस्थितौ । सर्वतः शङ्किनः पापा, योषा लज्जाविभूषणा ॥९२४॥
न चार्याः श्राविका वापि, साधूपाश्रयमियूति । मुक्त्वाऽष्टमीचतुर्दश्यौ, वाचनाकालमेव च ॥९२५॥
अङ्गोपाङ्गेन्द्रियाणां न, स्त्रीणां गणगतो मुनिः । ईक्षणे न भवेद् ब्रह्मभञ्जको वृतिरक्षितः ॥९२६॥
स्त्रीभिः सहैकनैषद्यः, स्यान्मुनिः शङ्कितं विना । स प्रसङ्गो गणस्थे न, मुनौ यत्प्रेक्ष्यते परैः ॥९२७॥
नैकव्यापारव्यग्रत्वात्, गणे न क्षणिको मुनिः । प्राग्रतस्मरणस्यात-स्तत्रैव

र्धजनं सुखम् ॥९२८॥ अनुभूतं सर्वं नेत्रा–याति स्मरणमात्मना। किन्तु तत्कारणे–क्षातः, सा च दुःसम्भरा गणे ॥९२९॥ स्वभावतः स्मृतिर्दीर्घा, प्राप्नते न गणे भवेत्। परैः पर्यनुयोज्यः स्याद्गणस्थो मुनिसत्तमैः ॥९३०॥ प्राग्रतस्मरणे जातेऽनर्थजाले पतेन्मुनिः। एको गणस्थितस्याशु, विध्याति मदनानलः ॥ ९३१ ॥ स्त्रीणा परिचयात्कामोऽसत्त्वपि प्रोद्भवेद्बलात्। एकाकिनः स सुकरो, रक्षा ताभ्या गणे मुनेः ॥ ९३२ ॥ एकाक्याहारगृद्धः सन्, स्वच्छन्दो लम्पटो भवेत्। निकृतो गणवर्ती तु, यात्रामात्राशना ध्रुवम् ॥९३३॥ विकृतीना ग्रहः काले, गुर्वनुज्ञापुरस्सरं। उत्सर्गं विधाय स्पर्धेरं प्रणीतभोजिता ॥९३४॥ गणव्यवस्थया साधुः, संविभज्य परान् मुनीन्। अगृद्धोऽश्नाति यात्रार्थं, नवं स्याद् वृतिलोपकः ॥९३५॥ नीरोगं बलिनं हृष्टं, दृष्ट्वा गणेधरो मुनिं। सौकुमार्यविहानाया–तापनादिषु योजयेत् ॥९३६॥ आचाम्लनिर्विकृतिक–प्रमुखं कारयेत्तपः। वाचनादिषु युञ्जीत दूरदेशान विहारयेत् ॥९३७॥ रसा दीप्तिकरा नृणा, मदनस्य निषेविताः। स्नेयत्तार्थमाहार–स्तदर्थं च गणे स्थिति ॥ ९३८ ॥ विकारोऽक्षमदाधीनो, साधन्त्यक्षाणि सद्रसान्। विकृतिभ्यो गतिर्दृष्टा, गणे स्थित्वा मतं चरेत् ॥ ९३९ ॥ मत्ता अश्वा यथा वल्गा, नाशयन्ति गजा सृणिं। निकृतो मत्त एकाकी, न मार्गस्थितिमाचरेत् ॥९४०॥ एकाकिनोऽनिरिक्तं स्याद्भोजनं तन्नवर्तनात्। स्वादुलोभेन गृह्णीया–दतिमात्रं च खादति ॥ ९४१ ॥ गणे स्थितो मुनिर्भुङ्क्ते, मण्डल्या स्थविरार्पितं। यात्रामात्रा परिज्ञाय, दद्युः स्थविरास्तु भोजनम् ॥ ९४२ ॥ छन्दनामन्त्रणायुग्मं, सम्भवेद्गणवासिनः। आत्मम्भरिर्भवेदेकः, साधुवात्सल्यवर्जितः ॥९४३॥ विनये न वर्तते ह्येको, धर्ममूले जिनोदिते। वैयावृत्त्यगुणे नव, प्रतिपातेन वर्जिते ॥९४४॥ भूषणे रज्यते ह्येको, मत्तो गज इवाङ्कु

शात् । विना भूपितदेहं च. कामे योपा वलात् कृषेत् ॥९४५॥ गणे भूपाद्दतिर्न स्यात्, स्याच्चेत्तां वारयेद् गणी । उद्दामाश्च
इवैकाकी. केन धार्येत सत्पथे ॥९४६॥ शब्दे रसे तथा रूपे, गन्धे स्पर्शे च हारिणि । राग्यशक्तो भवेदेको, वैरागी तद्गणं श्रयेत्
॥९४७॥ समस्तकर्मणां नाशात्, स्वरूपे स्यादवस्थितिः । सर्वकालैकरूपा साऽचलाऽनन्ता शिवालये ॥ ९४८ ॥ निर्जरा
संवरेणाढ्या, कर्मनाशाय प्रत्यला । अष्टौ क्षान्त्यादयो धर्माः, संवरद्रुमकन्दलाः ॥ ९४९ ॥ तपो निर्जरयेत्कर्म, प्राग्बद्धं
दृढबन्धनं । वहुकालकृतं पाप–मज्ञो भोक्तुमलो न हि ॥ ९५० ॥ निकाचितानि कर्माणि, तपसा ज्ञानयोगिना । क्षिप्यन्ते
क्षणमात्रेण, तेन जन्तुर्व्रजेच्छिवम् ॥ ९५१ ॥ एप धर्मो जिनैरुक्तः, स्वयं क्षान्त्यादितत्परैः । दृष्टाऽर्हः स एवात्र, यः
स्वयं पूर्णधर्मकृत् ॥ ९५२ ॥ ननु धर्मं द्विधा सूत्र–कारा आहुर्धुरन्धराः । श्रुतचारित्रभेदाभ्यां, यूयं किं दशधा पुनः ?
॥९५३॥ श्रुतधर्मं बुधैः प्रोक्तः, सिद्धान्तः श्रीजिनोदितः । स च स्वाख्यातधर्मात्र, भेदभाग् स गतः पुरा ॥ ९५४ ॥
परश्चारित्रधर्मो यः, स एवायं क्षमादिकः । न च तद्भिन्नता काचिद्धर्मस्यास्य श्रुतोदितात् ॥९५५॥ य एवात्रोदितो धर्मः,
श्रमणस्य क्षमादिकः । तमेवोचुः पुरा भद्र–बाहवो दशकालिके ॥९५६॥ तत्र प्रशस्तधर्मत्व–मेषामूचे मनीषिभिः । प्रशस्तता
च धर्मस्य, जिनोक्तत्वेन नान्यथा ॥९५७॥ द्वादश्यां भावनायां स, आख्यातो विस्तृतेरिति । न कश्चिद्भेद उत्प्रेक्ष्य, आग-
माद्दतिकोविदैः ॥९५८॥ परं दानादिकं धर्मं, चतुर्धाऽऽहुर्मुनीश्वराः । तत्र दानं त्रिधा लोको–त्तममार्गैः समादृतम् ॥९५९॥
ज्ञानाभयोपकर्तॄणां, दानात् कर्मक्षयावहं । मतं दानं प्रबोधस्य, तद्धि तत्त्वोपदेशजम् ॥९६०॥ तत्त्वानामुपदेशश्च, श्रेयःसाधक
इष्यते । स यः क्षान्त्यादिधर्मस्य, स्यात्तु देशनतत्परः ॥ ९६१ ॥ सप्ततत्त्व्या अतो धर्म–कथा साधुजनैर्मता । हेयोपादेयभा-

याना तस्था योगा हि तात्त्विक. ॥ ९६२ ॥ अतो मुष्टिर्जिनेन्द्राणा, ज्ञानं गीयत आर्हतैः। आश्रवान् सर्वथा हित्वा, संवरः साध्यते यदा ॥ ९६३ ॥ धर्मा क्षान्त्यादयोऽत्रोक्ताः, परमः संवरः स तु। भावना अपि चादेया, परे भेदास्तु तद्गताः ॥ ९६४ ॥ दानं यद्दीयते जीवेभ्योऽभयस्य न तत्पुनः। विहाय संयमं यस्मात्, स हि षट्कायरक्षणात् ॥९६५॥ धर्मोपग्रहदानं तु, सङ्गत्यागफलं महत्। मन्यते मोहनो जीवा, लाभे हर्षं वचोऽतिगम् ॥९६६॥ बाह्यानां कान्तोऽन्नादेस्तत्त्यागो धर्महेतवे। यदा श्रेयस्तया भाति, दाने सङ्गक्षतिश्रितम् ॥९६७॥ ॥युग्मम्॥ तत एव पर दानात्, क्रियाऽऽख्याता सुदुष्करा। दुस्त्यजत्वं च तस्याः स्यात्, सर्वत्यागस्पृहावतः ॥ ९६८ ॥ अनुकम्पायुतं कीर्तिदानं यत् प्रोच्यते बुधैः। ते लौकिकफले यस्मात्, तन्न चिन्ता तयोरिह ॥ ९६९ ॥ अत्र स्वर्गापवर्गार्हो, जिनैर्धर्मो निरूप्यते। स च क्षान्त्यादिभेदात्मा, दशधा यः पुरोदितः ॥ ९७० ॥ भेदस्तृतीयो यद्धर्मे, तपोनामा प्रकीर्त्यते। तत्तपो दशधा धर्मे, श्रुवताऽपि समाहृतम् ॥ ९७१ ॥ चतुर्थो भेद आख्यातो, भावाख्यो य उदारधीः। सोऽस्येति द्वादशोक्ता न, भावनाः तत्त्वदृष्टितः ॥ ९७२ ॥ यतो दानादि कुर्वाणा, जना मत्वा धनादिकं। चापल्यादिगुणोपेतं, तन्वते नान्यथा पुनः ॥९७३॥ तदेवं न चतुर्थोक्तो, धर्मो भिन्नः पुरोदितात्। क्षान्त्यादेः किं च दानादेः, क्रिया चेष्टात्मिका समा ॥ ९७४ ॥ केचिद्धर्मं द्विधा प्राहुः, सागारेतरसंश्रितेः। हिंसादित्यागतो देश-सर्वभेदेन सत्तमाः ॥९७५॥ सोऽप्यत्र संयमाद्धर्माद्-व्यतिरिक्तो नास्ति प्रभेदभाक्। हिंसादेर्देशतस्त्यागः, सर्वेतित्यक्षया शुभः ॥ ९७६ ॥ सर्वत्यागेन येषा स्या-दभिलापः समुद्यतः। न स परमार्थतो देश-त्यागवान् कथ्यते बुधैः ॥ ९७७ ॥ गुणस्थानं न तस्य स्यात्, पञ्चमं श्रावकोचितं। तत्त्वतस्तु चतुर्थेऽपि,

गुणे त्रुद्धिः समोज्झने ॥ ९७८ ॥ अत एवार्हते धर्मे, धर्मः श्राद्धोचितो मतः। यतः षट्कायजीवानां, न श्रद्धाऽपरशासने ॥९७९॥ यश्च मार्गो मतो मुक्त्यै, तत्त्वार्थाद्येषु सूरिभिः। सम्यक्त्वज्ञानचारित्र–रूपो धर्मः स एव तु ॥९८०॥ कार्यकारण-रूपत्वात्, परिणामी स नान्यथा। सिद्धेष्वपीष्यते विज्ञैरेतत् त्रयमनाहतम् ॥ ९८१ ॥ योगशब्देन वाच्योऽपि, स धर्मस्तत्-त्रयात्मकः। न भिन्नः सोऽपि यत् क्षान्त्या–दिहीनं चरणं न हि ॥९८२॥ सामायिकादिमान् साधुः, क्षमेताधिकृतीर्न यः। वार्षिकादूर्ध्वमाख्यंस्ता निष्कास्य यद् गणाद्बहिः ॥९८३॥ पूर्वान्त्यजिनयोस्तीर्थ–माचेलक्यादिसङ्गतं। नियमात्तत्र साधूनां, प्रतिक्रान्तिविधिः स्मृतः ॥९८४॥ अनयोरामतं तीर्थं, प्रतिक्रमणयुक्तया। तत्त्वं यत् क्षामणां सर्व–प्रतिक्रमणवर्तिनाम् ॥ ९८५ ॥ तच्च क्रोधोपशान्त्यादे–र्मार्गगामि स्फुटं मतं। न क्षुल्लकवदासेव्या, प्रतिक्रान्तिः क्रुधोद्धुरैः ॥९८६॥ फलं चरणमाम्नातं, दर्शनज्ञानयोर्बुधैः। मिथ्यादृशां न ते यस्मा–न्न व्रतं तेषु लेशतः ॥९८७॥ येऽपि व्रतोज्झिताः श्राद्धा–स्तेऽपि चारित्रचेतनाः। नधकाया अतस्तेषां, गणना धार्मिकव्रजे ॥ ९८८ ॥ यश्च क्षान्त्यादिकोऽत्रोक्तो. धर्मो दशविधः पुरा। चारित्रे साधनं वयं, तर्हि तच्चैव साध्यते ॥ ९८९ ॥ साध्यं न साधनैस्त्यक्त–मुत्थातुमुच्छ्वसित्यहो! तन्न संसारगः सत्त्व, एतद्धीनो व्रते स्थितः ॥९९०॥ यच्च सिद्धेषु चारित्रं, नेष्यते तत्त्वभाषिभिः। विरतीनामभावेन, तन्न जीवगुणाश्रयात् ॥९९१॥ आत्मनो न गुणश्चेत् स्याच्चारित्रं तत्कुतः पुनः। मोहकर्मतस्य मोह स्यात्तच्चरणं गुण आत्मनः ॥९९२॥ यावज्जीवं प्रतिज्ञाया, वधादीनां विधानतः। न सा सिद्धत्वमाप्ते स्यान्न च सा क्रियते पुनः ॥९९३॥ तन्न सिद्धेषु चारित्रं, विरत्या सञ्ज्ञितं पुनः। अनावृतो गुणो जातो, यः स सिद्धेष्वनाश्रितः ॥९९४॥

# श्रीसिद्धगिरिस्तवः (३८)

सिद्धाद्रिं नैव पश्यन्ति, दूरभव्या अभव्यकाः। इत्यमेयप्रभावं तं, ध्यायन्ति यतिकुञ्जराः ॥१॥ अत्राहुर्भावतो ह्येनं,
न पश्यन्ति तथाविधाः। अभव्यचिह्वेष्वेतन्नो–ऽपाठि विरहसूरिणा ॥ २ ॥ आत्मार्थित्वं तु तत्रास्य, निषिद्धं तेन यत्नतः।
अतोऽस्यादर्शनं द्रव्ये, न युक्तं किन्तु भावतः ॥३॥ आद्येऽङ्गे भव्यताबोधी, भव्याभव्यत्वसंशयः। गदितो न च तत्रापि,
पुण्डरीकाचलदर्शनम् ॥४॥ भावतो जातमप्यस्य, गुरोर्नेति श्रुताद् दृशं। इत्यस्य भावजादृष्टि–र्भव्यासन्नत्वबोधिनी ॥ ५ ॥
तत्र युक्तं यतो भाव–दर्शनं नैव तस्य यद्। अन्यतीर्थजिनार्चानां, सम्भवत्यस्य का कथा ॥६॥ न चैवं महिमाप्यस्या–न्यत्र
विशेषणाश्रयात्। मुमुक्षा न भवेत्तस्य, सैव चास्य निबन्धनम् ॥७॥ सिद्धाद्रिमुख्यशृङ्गं तु, गृणन्ति गुरुसत्तमाः। न रैव-
ताद्रिदृष्टेस्त–त्पालकेनापि भव्यता ॥८॥ अभियुक्तेन सम्बोधे, तान्युपलक्षितानि यत्। न तत्र तद् भवन्मान्यो. भव्याभव्य-
त्वसंशयः ॥९॥ आत्मार्थित्वेन तु सुतरां, द्रष्टुरासन्नभव्यता। ऊरीकृतागसकृता, न तेनात्र विवादनम् ॥१०॥ भव्यतानि-
र्णये यच्च, सूत्रे प्रोक्तमिदं मुखे। तत्तस्य तादृशारेका–जातमोहप्रणुत्तये ॥११॥ नन्वनेनाक्षताद्रेः स्याद्, दर्शनं द्रव्यतः खलु।
नासन्नभव्यताबोधि, किन्त्वेतदेवमेव हि ॥१२॥ सदा यथा विदेहेषु, विहरज्जिनसम्भवः। तद्वदत्र हि सिद्धाद्रेः, तथ्या शक्ति-
रियं न किम् ॥ १३ ॥ अचिन्त्यमहिमानं तु, नाभिसूनुर्जगावमुं। सहाऽन्यत्र प्रतिष्ठासुं पुण्डरीकं गणाधिपम् ॥१४॥ अत्र
क्षेत्रानुभावेने–त्याद्युक्त्या विनिषेधयन्। भावतीर्थे ततः श्रेष्ठः, किं न सानुरयं भवेत्? ॥१५॥ युगादिचरितेशिष्टं हेमचन्द्रेण सूरिणा

प्रस्तावे चैव तीर्थस्य, ग्रन्थेऽन्यत्र तथेक्ष्यते ॥ १६ ॥ यथा भव्यासुभिर्नम्या जिनानामाकृतिस्तथा। न स्यात्तेषां परिणामो, गिरावत्रापि तत्तया ॥१७॥ इत्यत्र स्थावरा धन्याः, सत्यमेवेति भाषितं। तावतामपि भव्यत्वे, विरोधो नागमा-ध्वनि ॥१८॥ किञ्चान्यत्र भवेत्तीर्थं, ऋषिकल्याणकादिना। क्षेत्रानुभावतस्त्विहा-भून्नकल्याणकानि वै ॥१९॥ तेनाऽयं मुनिना तीर्थ-रूपः प्रोक्तोऽचलोऽखिलः। ततो न पश्यतां तं स्या-दुर्लभासमभव्यता ॥२०॥ या त्वत्र स्वस्य भव्यान्य-त्वाशङ्का स्नपने कृता। न सा स्वभावधृद्गुत्या, सूर्याभस्येव हानिकृत् ॥२१॥ पूर्वाणां नवनवतिरत्रागतवाञ्जिनो युगादीशः। फाल्गुनशु-क्लाष्टम्यां नदिद तीर्थं नमामि सदा ॥२२॥ इषुशतलक्षैर्मुनिभिः परिवृतः पुण्डरीकगणनाथः। श्रुत्वा सगणस्य मोक्षं जिनात्स्थि-ताऽत्राऽप निर्वाणम् ॥२३॥ एवमन्येपि गणिनोऽत्राजग्मुर्लेभिरे च निर्वाणम्। इतरस्थानात्तदत्र सिद्धा मुनयोऽप्यन-न्तगुणाः ॥२४॥ नमस्यं देवेशैः सह यतिगणैर्भक्तिमनसा, समभ्यर्च्यं नित्यं निजजननसाफल्यविधये। उपास्यं श्राद्धानां निबिडनरकपापहतये, उपस्पृश्येयं तद्वरमभवबद्धोपदलनम् ॥२५॥

आगमोद्धारककृतिसन्दोहे प्रथमो विभागः
समाप्तः

卐